# M.M. GOPĪNĀTHAKAVIRĀJA-GRANTHAMĀLĀ

**[ Vol. 5 ]**

# DARŚANABINDUSAṀGRAHA

**[ PART TWO ]**

FOREWORD BY

**DR. VIDYANIWAS MISRA**

Vice-Chancellor

Sampurnanand Sanskrit University

Varanasi




V A R A N A S I

1 9 9 2

Research Publication Supervisor—
Director, Research Institute
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi–221 002.



First Edition—500 Copies
Price Rs. 110-00



Printed by—
Ghan Shyam Upadhyaya
Manager,
Sampurnanand Sanskrit University Press
Varanasi.

म० म० गोपीनाथकविराज-ग्रन्थमाला

[ पञ्चमं पुष्पम् ]

# दर्शनबिन्दुसङ्ग्रहः

[ द्वितीयो भागः ]

कुलपति-श्रीविद्यानिवासमिश्रप्ररोचनया समलङ्कृतः




वाराणस्याम्

२०४९ तमे वैक्रमाब्दे १९१४ तमे शकाब्दे १९९२ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—११०-०० रूप्यकाणि



मुद्रकः—
घनश्याम-उपाध्याय
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी ।

# प्ररोचना

अस्मिन् विश्वविद्यालये पूर्वं प्रथितयशसः सुधियः दीक्षान्तसमारोहावसरेषु विशेषव्याख्यानार्थं सादरं प्रार्थिताः, तानि व्याख्यानानि यथाकालं ग्रन्थरूपेण प्रकाशितानि। एतेषां लघुग्रन्थरूपेण प्रकाशितानां व्याख्यानानां प्रतयः कतिचिदेवावशिष्टाः। व्याख्यानानामेतेषां गौरवं न केवलं व्याख्यातृवशात्; अपि तु विषयगाम्भीर्यवशादपि स्वतः सिद्धम्। अतो हि एतेषां व्याख्यानानां सङ्ग्रहः खण्डद्वयात्मकोऽधुना प्रकाशमानीयते। द्वितीये खण्डे 'न्यायदर्शनबिन्दुः', 'वेदविज्ञानबिन्दुः', 'वैदिकशिक्षादर्शनबिन्दुः', 'अद्वैतवेदान्तबिन्दुः', 'वेदान्तदर्शनबिन्दुः' इत्यादयो बिन्दवः समाविष्टाः।

एवंविधस्य द्वितीयखडस्य प्रकाशनेन परं परितोषमावहामि, अथ च पण्डितवर्येभ्यः—म० म० पण्डितकालीपदतर्काचार्य-म० म० श्रीगिरिधरशर्मा-चतुर्वेद-पण्डित-पी० एन्० पट्टाभिरामशास्त्रि-म० म० अनन्तकृष्णशास्त्रि-श्री एस्० सुब्रह्मण्यशास्त्रिविद्वद्भ्यः प्रणामाञ्जलिमर्पयामि।

मन्ये, यदयं ग्रन्थो विदुषां छात्राणां च कृते महदुपकाराय भविष्यतीति।

वाराणस्याम्
अक्षयतृतीयायाम्,
२०४९ वैक्रमाब्दे
( ५।५।१९९२ खैस्ताब्दे )

विद्यानिवासमिश्रः
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका

## न्यायदर्शनबिन्दौ



## वेदविज्ञानबिन्दौ



## वैदिकशिक्षादर्शनबिन्दौ



## अद्वैतवेदान्तबिन्दौ



## वेदान्तदर्शनबिन्दौ





# न्यायदर्शनबिन्दुः

## नव्यन्यायपारिभाषिकपदार्थाः

**महामहोपाध्याय-श्रीकालीपदतर्काचार्य्यः कलिकातानगरम् ।**

गङ्गातरङ्गनिकरैर्मुखरोत्तमाङ्गं
भूत्या सितं दलितभूतिविशेषसङ्गम् ।
ज्ञानेश्वरं तिमिरभारहरं सदारं
श्रीविश्वनाथमभयं सभयोऽहमीडे ॥

केदारेश्वरमाश्रये गणपतिं विघ्नौघविद्रावणं
पुण्याङ्कां मणिकर्णिकामभयदां दुर्गां तथैवान्नदाम् ।
काश्यामत्र महेश्वरस्य नगरे याश्चापरा देवता-
स्ताभ्यो मेऽस्तु नमो नमः परिषदे चास्यै विनीतस्य मे ॥

मान्यमान्या गौतमप्रमुखमुख्यमहर्षिप्रतिमाः सर्वविद्याप्रत्यक्षमूर्तयः सभापतयः ! मान्याः पण्डितमूर्द्धन्याः ! श्रद्धेयाश्चापरे सभास्ताराः !

आदिष्टोऽस्मि वाराणसेयसंस्कृतविश्वविद्यालयाधिकृतप्रधानपुरुषैः पूर्वमेव निवेदितं विषयत्रयमधिकृत्य यथाकालं प्रवचनत्रयीमुपस्थापयितुम् । तदेतेनात्मनो महदेव गौरवमवधार्य्य यथामति प्रस्तूयते किञ्चित् । सहैव च समभ्यर्थ्यते तत्र तत्र-भवद्भिः श्रीमद्भिः करुणया प्रदीयमानमवधानम् । तत्र प्रथमतः प्रस्तूयते नव्यन्याय-पारिभाषिकपदार्थप्रवचनम् ।

सूक्तमिदं दण्डिनः काव्यादर्शकारस्य—

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति ।

कुत इति चेदवधीयतां विशेषेण—शब्द एव खलु लोकानां शैशवात् प्रभृति वस्तुषु विशेषविज्ञानमनुकूलयति । मुख्यतया पित्रादिगुरुजनव्यवहारपरम्परयैव लोका वस्तूनां विशेषज्ञानं समासादयन्ति । शब्दश्चेन्नाभविष्यत् तदा शब्दमूलवस्तुविशेष-प्रतिपत्तिविरहेण सुतरामन्धा इव लोका लोकयात्रायामनुपयुक्ता अभविष्यन् । प्रथमतो वयं बाल्यात् प्रभृति मातापित्रादिबान्धवजनानां मिथो व्यवहारादिना वस्तूनां विशेषा-

नवगच्छामः, अनन्तरं विद्यागृहं गत्वा शब्दसाहाय्यकेनैव गुरुभिः समनुशिष्टा विविधेषु विषयेषु विज्ञानमर्जयामः, शब्देनैव द्वारभूतेन गुरूणां समीपे स्वां स्वां जिज्ञासां विनिवेद्य नानार्थगोचरसंशयानपसार्य्य विद्याविशेषाधिगमेनानन्दममन्दं विन्दामः, ततः परं गुरूपदेशाद् वा स्वतो वा शब्दमयानेव वेदस्मृतिपुराणन्यायप्रमुखानेकशास्त्रग्रन्थानधीत्य नानाविधेषु लौकिकेष्वलौकिकेषु चार्थेषु निष्णाता सीमातीतक्षेमभाजो भवामः। शब्दमयेनैव शास्त्रनिरूढविधिनिषेधसंघातेन नियन्त्रिता हि तेषु प्रवृत्ति निवृत्तिं चाहितेषु विन्दमानाः कल्याणमासादयामो हेयञ्च परिहरामः। तदेवं शब्द एव नः शरणं मुख्यतमं लोकयात्रायामिति निर्विवाम्। यतः शब्द एव प्रयोजनानुसारं समुच्चरितः श्रोतृपुरुषेषु प्रवर्तयति स्वार्थगोचरं विज्ञानम्, तदनुसारञ्च नियमेन श्रोतारः प्रवृत्तिनिवृत्ती यथायथं समासादयन्तो निर्वर्तयन्ति लोकयात्रामखिलाम्। तदनवद्यमतिश्रद्धेयमिदमपि श्रीमद्दण्डिनो वचनम्, यथा -

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।<br>वाचामेव प्रसादेन लोकयात्रा प्रवर्तते॥ इति।

तदेव शब्दानां स्वार्थगोचरविज्ञानप्रजननद्वारा लोकयात्रायामुपयोगित्वमित्येवाभ्युपेयम्। एवञ्च तत्र स्वार्थगोचरज्ञानजननानुकूलं सामर्थ्यमप्यवश्यमभ्युपेतव्यम्। तदेतत् सामर्थ्यमेव वृत्तिरिति गीयते। तस्या एव वृत्तेः सङ्केतो लक्षणा चेति नैयायिकसिद्धान्ते संज्ञाद्वयी, तदुक्तं शक्तिवादे गदाधरेण – 'सङ्केतो लक्षणा चार्थे पदवृत्तिः' इति।

आलङ्कारिकास्तु शब्दस्य शक्यार्थलक्ष्यार्थव्यतिरिक्तार्थविशेषप्रतिपत्त्यनुकूलं व्यञ्जनाख्यमपि वृत्त्यन्तरमभ्युपगच्छन्ति। नैयायिकास्तु तत्र तत्र तादृशतादृशार्थविशेषबोधस्य शाब्दबुद्धित्वमनङ्गीकुर्वाणाः शाब्दबोधौपयिकसम्बन्धत्वरूपं वृत्तित्वं तत्र नाभ्युपगच्छन्ति।

पदवृत्तेरस्याः पदार्थगोचरज्ञानजननशक्तिरूपत्वेऽपि दाहादिजनकवह्न्यादिशक्त्यपेक्षया वर्तते महदेव वैलक्षण्यमस्याः। तथाहि—वह्निर्दाह्यं वस्तु दहति तदवश्यं तत्र दाहानुकूला शक्तिरभ्युपेया। सैषा तत्तद्वस्तुस्वरूपसम्बन्धरूपा अतिरिक्ता वेत्यन्यदेतत्। सैषा शक्तिरविदितापि स्वरूपसत्येव दाहं जनयति। एतेन तपनगततमः सन्ततिनिषूदनादिशक्तयोऽपि व्याख्याताः। पदवृत्तिरूपा पदार्थज्ञानानुकूला शक्तिस्तु विज्ञातैव पदार्थज्ञानं जनयति परं नाविज्ञाता। अत एव यः पदस्य प्रकृतार्थगोचरां वृत्तिं जानाति, तस्यैव पदज्ञानानन्तरं भवति प्रकृतार्थगोचरा प्रतिपत्तिः, न तु प्रकृतार्थे तच्छक्तिमजानतोऽप्यन्यस्य।

पदवृत्ते; सङ्केताख्यो भेदोऽपि द्वेधा व्यवतिष्ठते —आजानिकश्चाधुनिकश्चेति। तदुक्तं भर्तृहरिणा —'आजानिकश्चाधुनिकः सङ्केतो द्विविधो मतः' इति। आजानिक

इति जनिरहितः लौकिकपुरुषविशेषाकल्पितः, परमेश्वरकल्पितोऽनादिकालसिद्ध इति यावत्। सोऽयमाजानिकः सङ्केत एव नैयायिकैः शक्तिरिति व्यपदिश्यते; नाधुनिकः सङ्केतो न वा लक्षणा नाम वृत्तिः शक्तिनाम्ना व्यवह्रियते।

आलङ्कारिकास्तु स्वसम्प्रदायसिद्धमभिधा लक्षणा व्यञ्जनेति वृत्तित्रयमेव शक्तिसंज्ञया व्यपदिशन्ति। यथा अभिधाशक्तिः, लक्षणाशक्तिः, व्यञ्जनाशक्तिश्चेति।

सोऽयमाजानिकः सङ्केतो विविधैरुपायैः प्रतिपद्यते. यथोक्तम्—

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

एषामुदाहरणानि यद्यपि सुविदितान्येव सुधियाम् तथापि तत्र नैयायिकसम्मतः कश्चन विशेषः समुपन्यस्यते, तथाहि क्वचिद् व्याकरणानुशिष्टेऽप्यर्थे शब्दस्य शक्तौ गौरवमनुसन्दधाना नैयायिका अर्थान्तरेऽपि शब्दस्य शक्तिं कल्पयन्ति। यथा —वैयाकरणाः कर्तृविहितस्याख्यातप्रत्ययस्य कर्तरि शक्तिमुपदिशन्ति, तेन तस्य कृतिविशिष्टे शक्तिरभ्युपेया, परन्तु कृतिविशिष्टे कर्तृविहितलकारस्य शक्तिरभ्युपेयते चेत्, शक्यतावच्छेदकधर्मविधया कृतेः शक्यतावच्छेदकतावच्छेदकधर्मविधया च कृतित्वस्य भानमवश्यमभ्युपगन्तव्यः स्यात्। तदपेक्षया लाघवमनुसन्धाय नैयायिकाः कृतावेव तदाख्यातस्य शक्तिं कल्पयन्ति। येन शक्यतावच्छेदकविधया कृतित्वस्य भाने सत्यप्यनुल्लिख्यमानाया जातेः स्वरूपत एव भाननियमात् शक्यतावच्छेदकतावच्छेदकविधया कस्याप्यभानेन लाघवं सम्भवेत्।

सोऽयमाजानिकः परमेशसङ्केतः— अस्माच्छब्दादयमर्थो बोद्धव्यः इत्येवंरूपः, अयं शब्द इममर्थं बोधयतु' इत्येवंरूपो वा प्रतिपत्तव्यः। प्रथमसङ्केतस्य 'अयमर्थ एतच्छब्दजन्यबोधविषयतावान् भवतु' इति, द्वितीयसङ्केतस्य च 'अयं शब्द एतदर्थविषयकबोधजनकतावान् भवतु' इति निष्कर्षः।

तेनाजानिकसङ्केतेन यः शब्दो यमर्थं बोधयति स तदर्थस्य वाचकः शब्दः, यथा—गोशब्दस्तादृशेन सङ्केतेन गोत्वविशिष्टमर्थं बोधयतीत्यतो गोशब्दो गोत्वविशिष्टवाचकः। एवमन्यत्रापि। तदुक्तं गदाधरेण शक्तिवादे—'ईश्वरसङ्केतः शक्तिः, तथा चार्थबोधकं पदं वाचकम्। यथा गोत्वादिविशिष्टबोधकं गवादिपदम्' इति।

यत्र वक्तुस्तात्पर्य्यविषयीभूतोऽर्थः शक्त्या न शक्यते प्रतिपादयितुम्, तत्र शक्यार्थसम्बन्धरूपया लक्षणाख्यया वृत्त्या तदर्थस्य प्रतिपादने तस्मिन्नर्थे तत्पदं लक्षकम्। यथा—गङ्गायां घोष इत्यादिवाक्ये वक्त्रा गङ्गातीरे आभीरपल्लीबोधना-

ऽभिप्रायेण प्रयुक्ते शक्त्या भगीरथरथखातावच्छिन्नजलप्रवाहरूपार्थबोधकगङ्गाशब्देन वक्तृतात्पर्य्यविषयीभूतस्य तत्सन्निहिततीरस्य बोधयितुमशक्यत्वेन शक्यजलप्रवाहविशेषप्रतियोगिकसामीप्यसम्बन्धरूपलक्षणया गङ्गासन्निहिततीररूपार्थः प्रतिपाद्यते। तत्र गङ्गापदं लक्षकम्, तादृशगङ्गातीररूपोऽर्थश्च लक्ष्यार्थः।

आधुनिको नाम द्वितीयप्रकारः सङ्केतः परमेश्वरादन्येन केनापि कल्पितः सङ्केतः। तस्यापि स्वरूपं प्रागुक्तरूपेच्छाविशेषविषयत्वमेव। स एष सङ्केतः परिभाषेति गीयते। तया वृत्त्या यत् पदं यमर्थं प्रतिपादयति तत् पदं तदर्थे पारिभाषिकम्। अर्थश्चासौ परिभाषितः पारिभाषिको वा।

सैषा परिभाषा द्विविधा—लौकिकी तान्त्रिकी चेति। तत्र लौकिकव्यवहारसौकर्य्याद्यर्थं केनाप्याधुनिकेन कल्पिता नगनदीवननगरादिपरिभाषा प्रथमा। द्वितीया च तान्त्रिकव्यवहारसौकर्य्याय तन्त्रकारकल्पिता नदीवृद्धयादिपरिभाषा। गदाधरभट्टाचार्य्यादयस्तु तथाभूतं भेदमनादृत्य एकविधामेव परिभाषामाहुः। तदुक्तं गदाधरेण—'तत्राधुनिकसङ्केतः परिभाषा, तया चार्थबोधकं पदं पारिभाषिकम्; यथा नदीवृद्धयादिपदम्' इति। वयं पुनस्तान्त्रिकपरिभाषाया विशेषे विशेषतो बद्धादरास्तथाभूतं भेदमुररीकृतवन्तः।

नदीवृद्धयादिपदे तान्त्रिकपरिभाषाया विवरणं यथा -- व्याकरणशास्त्रे नदीपदे दीर्घेकारान्तदीर्घोकारान्तस्त्रीलिङ्गशब्दबोधजननीं वृद्धिपदे च आ-आर्-ऐ-औ-इत्येतद्बोधजननीं परिभाषां कल्पयित्वा दीर्घेकारान्त-दीर्घोकारान्तस्त्रीलिङ्गशब्द इति वक्तव्ये नदीशब्दम्, आ-आर्-ऐ-औ-इति वक्तव्ये च वृद्धिशब्दं वैयाकरणाः प्रयुञ्जन्ते, अन्यत्र चान्येऽपि तान्त्रिका विविधार्थप्रतिपादकान् विचित्रानेव परान् पारिभाषिकान् शब्दान्।

तथैव जनाः साधारणा अपि लौकिकव्यवहारादिषु लाघवादिकमपेक्षमाणा नगनदीवननगरादीनां नामसु विशेषपरिभाषां कल्पयित्वा तद्युक्तविशेषपदप्रयोगेण निर्वर्तयन्ति सन्ततमेव लोके विततान् लौकिकव्यवहारान्। तदेवं शास्त्रे च लोके च समानकक्षैव व्यपेक्षा परिभाषाया इत्यविवादम्।

तत्रायं विशेषः— यद् द्वादशेऽहनि पिता नाम कुर्य्यादिति श्रुत्यनुसारं पित्राद्याधुनिकपरिकल्पितरामश्यामादिनामगतमपि सङ्केतं तान्त्रिकाः परमेश्वरसङ्केतमेव व्यपदिशन्ति, न तु परिभाषाम्। तथाहि—परमेश्वरो नाम वेदकर्तेति न्यायसिद्धान्तः। तस्य द्वादशेऽहनि पिता नाम कुर्य्यादिति श्रुतिवाक्यार्थगोचरेच्छायां नामत्वरूपसामान्यधर्मेण पितृकृतानि रामश्यामादिनिखिलनामान्येव विषयतया प्रविष्टानि। तेन निरुक्तेषु रामश्यामादिनिखिलनामस्वेव परमेश्वरेच्छाविषयत्वरूपाया नैयायिकसम्मताजानिकसङ्केतात्मकशक्तेः सत्त्वेन पितृकृता रामश्यामादिरूपा वैयक्तिकसंज्ञा

अपि शक्तिबलेनैवार्थं प्रतिपादयन्तीति ता इमाः संज्ञा अपि तत्तदर्थेषु वाचकशब्दा एव, न तु पारिभाषिकशब्दाः। किन्तु आधुनिकजनविशेषकल्पितानामीश्वरेच्छाविशेषविषयतामनापन्नानामाधुनिकनगनदीवननगरादिनाम्नां सङ्केतो नेश्वरसङ्केतरूपशक्तिकोटिमवगाहितुं क्षमते।

अत्र वयं ब्रूमः—यदि परमेश्वरस्य नाम कुर्य्यादित्येतादृशसाधारणेच्छाया नामत्वरूपेण विषयत्वमुपादाय पितृकृतरामश्यामादिसंज्ञासु परमेश्वरसङ्केतः समुपपाद्यते, तदा 'शब्दादर्थंप्रत्ययो भवतु' इत्येवं साधारणेच्छायाः शब्दत्वरूपेण निखिलशब्देष्वेव विषयतायाः सत्त्वेन सर्वेष्वेव शब्देषु तत्तदर्थवाचकत्वप्रसङ्गः पदं कुर्य्यात्। अतः शब्दविशेषाणामानुपूर्वीविशेषपुरस्कारेणैव परमेश्वरसङ्केतः स्वीकर्तव्यः। तेन च पितृकृतरामश्यामादिसंज्ञासु नेश्वरसङ्केतः, किन्तु आधुनिकसङ्केत एवेति युक्तम्। गदाधरादिमतानुसारेण तु तत्र परमेश्वरङ्केत एवेत्यवश्यमभ्युपगन्तव्यम्। तदुक्तं गदाधरेण शक्तिवादे—'यत्तु तादृशेच्छया भगवदुच्चरितत्वं वाचकत्वम्, अपभ्रंशादयश्च नार्थप्रत्यायनेच्छया भगवदुच्चरिता इति नातिप्रसङ्ग इति, तन्न, अस्मदाद्युच्चरितपदेष्वव्याप्तेः। तज्जातीयत्वनिवेशेऽपि वेदस्थलाक्षणिकपदेष्वतिव्याप्तेः। सादि देवदत्तादिपदेऽव्याप्तेश्च। द्वादशेऽहनि पिता नाम कुर्यादिति वेदे नामपदस्य देवदत्तादिपरत्वेऽपि देवदत्त इत्यादिस्वरूपाणां भगवदनुच्चरितत्वादिति। अत्र सादिदेवदत्तादिपदे वाचकलक्षणाव्याप्तिप्रदर्शनेन तस्य वाचकत्वमेव गदाधरसम्मतमिति प्रतिपद्यते।

जगदीशस्तु शब्दशक्तिप्रकाशिकायां प्रथमतः 'उभयावृत्तिधर्मेण संज्ञा स्यात् पारिभाषिकी' इति पारिभाषिकसंज्ञालक्षणमाख्याय मतविशेषमनुसृत्याह— ये तु जात्यवच्छिन्नसङ्केतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुस्तेषां मते त्रैविध्यमन्यथा निर्वक्ति—'यद्वाधुनिकसङ्केतशालि स्यात् पारिभाषिकम्' इति। तदुदाहरणप्रदर्शनावसरे च 'यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि' इत्युक्त्वा 'आधुनिकस्तु सङ्केतो न शक्तिः, नित्यस्यैव तस्य तथात्वात्। न च पित्रादिना सङ्केतिते चैत्रादिपदे नित्यसङ्केतसत्त्वे मानमस्ति द्वादशेऽहनि पिता नाम कुर्य्यादिति श्रुतेः पितृकर्तव्यसङ्केतविधायकमात्रपरत्वात् चैत्रादिपदानां शक्तिमत्त्वे पूर्वपूर्वप्रयुक्तत्वापाताच्च तस्य तन्नियतत्वादित्युक्तत्वात्' इत्यादिग्रन्थमुपन्यस्य पित्रादिकल्पितनाम्नां पारिभाषिकत्वमेव प्रकटयाञ्चक्रे।

वस्तुतस्तु तत्र पारिभाषिकसंज्ञोदाहरणप्रदर्शनवेलायाम्—यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि, यथा वा शास्त्रकृद्भिः सिद्धयभावादौ पक्षतादि इति ग्रन्थे विकल्पेन शास्त्रकारकल्पितस्य सिद्धयभावादिरूपार्थे पक्षतादिनाम्न उदाहरणरूपेणोपन्यासात् प्रथमकल्पे जगदीशस्यानास्था प्रतीयते। तेन गदाधरसिद्धान्तेन सह तदीयसिद्धान्तस्य नास्ति विरोध इत्यपि शक्यं समुन्नेतुम्।

आस्तां यथा तथा वा आधुनिकजनविशेषप्रवर्तितानां नगनगरादिनाम्नामिव शास्त्रकारकल्पितविशेषार्थप्रतिपादकशब्दविशेषाणां पारिभाषिकत्वमेवेति सिद्धान्ते नास्ति विवादः ।

तत्र विभिन्नेष्वर्थेषु विभिन्नाकाराः शब्दा इव एकाकारा अपि केचन शब्दाः शास्त्रभेदेन विभिन्नार्थेषु परिभाषिता दृश्यन्ते । यथा एक एव प्रकृतिशब्दः सांख्य-सिद्धान्ते सत्त्वरजस्तमसां त्रयाणां गुणानां साम्यावस्थायाम्, वेदान्ते मायायाम्, न्यायवैशेषिकतन्त्रेऽदृष्टे परिभाष्यते । 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इत्यादौ साहित्यादितन्त्रे च स्वभावरूपार्थे प्रयुज्यते ।

एक एव सत्त्वशब्दः सौगततन्त्रेऽर्थक्रियाकारित्वे, सांख्यदर्शने सत्त्वाख्यगुण-विशेषे, न्यायवैशेषिकतन्त्रयोर्द्रव्यगुणकर्मत्रितयवृत्तिसत्ताख्यजातौ च समुपादीयते । सन्त्येवमन्येऽपि शब्दा ये विभिन्नेषु तन्त्रेषु विभिन्नार्थेषु परिभाषिताः ।

एवं सत्यपि सर्वेषामेव शास्त्राणां सम एव पारिभाषिकपदोपकरणत्वे सर्वेषु तेषु महानेव विशेषो वरीवर्ति नव्यन्यायशास्त्रस्य । तत्र यथैव सन्ति प्राचीनैरपि परिगृहीता नातिविचित्राः सामान्यविशेषसमवायेत्यादयः पारिभाषिकाः शब्दाः, तथैवातितरां विचित्रा नवीनाः सप्रयोजना दर्शनान्तरविलक्षणाः संख्यातीताः प्रति-योगित्वानुयोगित्वावच्छेदकत्वविषयत्वविषयित्वप्रकारत्वप्रकारित्वविशेष्यत्वविशेष्यि-त्वसंसर्गत्वकोटित्वनिरूपकत्वनिरूपितत्वप्रमुखाः पारिभाषिकाः शब्दविशेषाः । त एते विलक्षणाः पारिभाषिकाः शब्दा नव्यन्यायतन्त्रे यथाप्रयोजनं पदे पदे समुपात्ताः परिपुष्णन्ति तन्त्रान्तरापेक्षया महदेव वैलक्षण्यं नव्यन्यायशास्त्रस्य ।

न चैतन्मन्तव्यं यत् तत्त्वचिन्तामणिग्रन्थप्रजापतिः श्रीमान् मैथिलो गङ्गेशो-पाध्याय एव प्रथमप्रवर्तकस्तेषां नव्यन्यायपारिभाषिकशब्दानामिति । यतः सोऽयं तत्त्वचिन्तामणिग्रन्थकारो गङ्गेशस्त्रयोदशशकशताब्दीयः कुसुमाञ्जलिप्रभृतिग्रन्थ-कर्ता श्रीमानुदयनाचार्य्यस्तत्पूर्वकालीनो दशमशकशताब्दीयः । दृश्यते च तदीयन्याय-प्रसूनाञ्जलिप्रभृतिग्रन्थेषु प्रतियोगित्वावच्छेदकत्वादिपारिभाषिकशब्दविशेषाणां बहुत्रैवोपादानम् । किं बहुना, श्रीमानुदयानाचार्य्यः स्वीयन्यायप्रसूनाञ्जलिग्रन्थे 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' इति प्रतियोगितायाः स्वरूपमपि निरुक्त-वान् । यदवलम्बनेन गङ्गेशप्रमुखाः स्वीयतत्त्वचिन्तामणिपूर्वपक्षादिग्रन्थेषु सविस्तरं विचारमारचितवन्तः । तदेवं प्रतियोगित्वावच्छेदकत्वादयः पदार्थाः कथं नाम नव्य-न्यायपारिभाषिकपदार्थाः ? इति प्रश्ने वयमेवं ब्रूमो यत् सत्यपि तत्त्वचिन्तामणि-ग्रन्थापेक्षया प्राचीनेषु न्यायप्रसूनाञ्जलिप्रमुखग्रन्थेषु क्वाचित्के प्रतियोगित्वावच्छेद-कत्वादिपारिभाषिकपदविशेषाणां समुपादाने तत्त्वचिन्तामणिप्रभृतिषु नव्यन्यायमूल-ग्रन्थेषु तदीयव्याख्यानोपव्याख्यानादिरूपनव्यन्यायग्रन्थसन्तानेषु च तेषां शाखापल्ल-

वाद्युपस्कारेण सुसमृद्धत्वात् शास्त्रार्थपरिष्काराय पदे पदे नव्यन्यायतन्त्रे तदुपादानेन तस्य शास्त्रान्तरापेक्षया वैलक्षण्यविशेषसम्पादकत्वात्, नव्यन्यायतन्त्रादेव तादृशतादृशपारिभाषिकपदार्थसाहाय्येन स्वस्वशास्त्रार्थपरिष्कारनयस्य सबहुमानमादानेन शास्त्रान्तरव्याख्यानादिकर्तृभिरपि निजनिजनिबन्धानामतिगौरवस्याधानाद् भूयस्त्वेन च नव्यन्यायतन्त्रस्यैव तदालम्बनभूतत्वात् त एते प्रतियोगित्वादयः मुख्यतया पदार्था नव्यन्यायपारिभाषिकपदार्था इत्येव प्रथन्ते ।

केचिदपरे निपुणप्रेक्षकाः समुपक्षिपन्ति यत् न्यायपरमाचार्य्यः श्रीमानुदयनाचार्य्य एव बीजवापको नव्यन्यायसम्प्रदायस्येति । प्राचीनन्यायभाषादिवैलक्षण्येन सुप्रवृत्ता तदीयशास्त्रार्थानुशीलनशैली सुतरां नव्यन्यायविचारप्रकारमनुवर्तमाना दृश्यते । प्रतिपाद्यवस्तुपरिष्कारार्थश्च समाददे तत्र तत्रासौ प्राचीनसूरिभिरनुपदिष्टपूर्वानवच्छेदकत्वप्रतियोगित्वादीनभिनवकतिपयपारिभाषिकपदार्थान् । तदसावुदयनाचार्य्य एव बीजरूपेण प्रवर्तको नव्यन्यायनयस्येति स्थिते प्रतियोगितावच्छेदकत्वादीनां पदार्थानां नव्यन्यायपारिभाषिकपदार्थत्वोक्तिरनवद्यैव प्रतिभाति ।

अथेदानीं प्रतियोगित्वादिषु नव्यन्यायपारिभाषिकपदार्थेषु केचन क्रमेण विशेषतो विविच्यन्ते । तत्र प्रथमतः प्रस्तावः प्रतियोगित्वस्य । प्रतियोगित्वं नाम द्विविधम्—सांसर्गिक प्रतियोगित्वं तथा अभावीयप्रतियोगित्वम् । तत्र सांसर्गिकप्रतियोगित्वं संसर्गनिरूपितं प्रतियोगित्वम् । तच्च कुण्डे वदरं न तु वदरे कुण्डमित्यादिप्रतीतिसाक्षिकस्वरूपसम्बन्धविशेषः कश्चिदतिरिक्तः पदार्थो वा । बहुत्रैव समुपात्तमिदं नव्यन्यायग्रन्थेषु नव्यनैयायिकैः प्रयोजनानुसारम् । दृश्यते तत्त्वचिन्तामणेरनुमितिप्रकरणेऽनुमितिलक्षणार्थविचारे दीधितिविवृतौ गदाधरभट्टाचार्य्येणोपाध्यायसम्मतव्याख्यानमाचक्षाणेन सम्बन्धसम्बन्धविधया भासमानस्य तस्य सांसर्गिकप्रतियोगित्वस्य सांसर्गिकानुयोगित्वस्य च वहुकृत्वः कृतमुपादानम् ।

सम्बन्धसत्त्वं सम्बन्धिसत्त्वनियामकमित्यस्ति प्रसिद्धः सिद्धान्तो नैयायिकानाम् । तस्य परिष्कारे कर्तव्ये नूनमेवं वक्तव्यं यद् यत्प्रतियोगिको यः सम्बन्धो यत्र वर्तते तेन सम्बन्धेनासौ तत्र वर्तत इति । यत्प्रतियोगिक इत्यत्र प्रतियोगित्वं सांसर्गिकं प्रतियोगित्वमेव । यदि तत्प्रतियोगित्वमनन्तर्भाव्य सम्बन्धसत्त्वस्य तेन सम्बन्धेन सम्बन्धितया भातस्य सत्त्वनियामकत्वमुररीक्रियेत, तदा संयोगादिसम्बन्धवति जलादौ वह्न्यादेरसत्त्वेन व्यभिचारापातः स्यात् । प्रतियोगित्वमन्तर्भाव्य तन्नियमकल्पने च जलादौ सतोऽपि संयोगादेर्वह्न्यादिप्रतियोगिकत्वविरहेण न दोषः ।

एतच्च सांसर्गिकं प्रतियोगित्वं सामानाधिकरण्येन विशिष्टबुद्धेरवच्छेदकावच्छेदेन च विशिष्टबुद्धेर्मिथो वैलक्षण्यमनुकूलयति । तथाहि—संयोगेन वह्निमान्

पर्वत इति पर्वतत्वसामानाधिकरण्येन बुद्धौ संयोगनिष्ठा या संसर्गता सा केवलसंयोगत्वावच्छिन्ना। तदियं बुद्धिः संयोगत्वमात्रावच्छिन्नसंसर्गतानिरूपित-वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपिका।

पर्वतत्वावच्छेदेन तादृशबुद्धौ च संयोगनिष्ठा संसर्गता पर्वतत्वव्यापकवह्निप्रतियोगिकत्वसंयोगत्वधर्मद्वयावच्छिन्ना। तदसौ बुद्धिः पर्वतत्वव्यापकवह्निप्रतियोगिकत्वसंयोगत्वधर्मद्वयावच्छिन्नसंसर्गतानिरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपिका।

उभयत्रैव संसर्गतायां संयोगत्वाद्यवच्छिन्नत्वं प्रकारतायां संसर्गतानिरूपितत्वं विशेष्यतायां प्रकारतानिरूपितत्वं बुद्धौ च विशेष्यतानिरूपकत्वं नव्यन्यायपरिभाषातन्त्रसिद्धम्। संसर्गताप्रकारता-विशेष्यता नव्यन्यायपारिभाषिकपदार्थविशेषाः, ते तावदुपरिष्टाद् विशेषतो विवेचयिष्यन्ते।

अत्रेदं तत्वमवधेयम्—कदाचित् सामानाधिकरण्येन प्रतीतावपि वस्तुविशेषप्रतियोगिकत्वं संसर्गतावच्छेदकतया भासते, यथा वह्निप्रतियोगिकसंयोगेन द्रव्यवान् पर्वत इत्यादौ। अतः सामानाधिकरण्येन बुद्धौ कदाचित् संयोगत्वाद्यतिरिक्तधर्मस्यापि संसर्गतावच्छेदकविधया भानात् संयोगत्वादिमात्रावच्छिन्नसंसर्गताकत्वकृतो न सामानाधिकरण्येन बुद्धेर्विशेषः, किन्तु धर्मितावच्छेदकव्यापकप्रकारप्रतियोगिकत्वानवच्छिन्नसंसर्गताकत्वप्रयुक्त एव। तथाहि—धर्मितावच्छेदकसामानाधिकरण्येन बुद्धिर्धर्मितावच्छेदकव्यापकप्रकारीभूतधर्मप्रतियोगिकत्वानवच्छिन्नसंसर्गताका, धर्मितावच्छेदकावच्छेदेन बुद्धिश्च धर्मितावच्छेदकव्यापकप्रकारीभूतधर्मप्रतियोगिकत्वावच्छिन्नसंसर्गताका।

सामानाधिकरण्येनाऽवच्छेदकावच्छेदेन च बुद्धयोस्तथाविधं वैलक्षण्यं भावाभावबुद्ध्यादेर्मिथो विरोधितायामुपयुज्यते। ज्ञानद्वयमेव यत्र धर्मितावच्छेदकसामानाधिकरण्येन भावाभावौ विषयीकृत्य जायते, तत्र तस्य न मिथो विरोधित्वम्। किन्तु भावाभावयोरेकस्य द्वयोर्वा धर्मितावच्छेदकावच्छेदेनावगाहन एव भावाभावज्ञानयोर्मिथस्तथात्वम्। धर्मितावच्छेदकावच्छेदेन प्रतीतिश्च समपेक्षते नियमेन सांसर्गिकप्रतियोगित्वं संसर्गकोटाविति समासः।

बहुत्रैव लक्षणार्थंपरिष्कारादिना दोषनिरासाय अवच्छेदकत्वादिपदार्थानां पर्य्याप्तिनिवेशस्यावश्यकत्वेन तदर्थमपि वर्तते सांसर्गिकप्रतियोगित्वानुयोगित्वयोरपेक्षा। यथा—हेतु व्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिलक्षणस्य द्रव्यं विशिष्टसत्वादित्यादावव्याप्तिवारणाय तद्घटकीभूताया हेत्वधिकरणतायाः पर्य्याप्तिनिवेशेनैव निर्दोषः परिष्कारः कार्य्यः। तत्प्रकारश्च प्रकृतहेतुतावच्छेदकतात्वावच्छिन्न-

प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या आधेयता तन्निरूपिताधिकरणतैव प्रकृतहेत्वधिकरणता। आधेयतायां निरुक्तरूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथाहि—द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादिति द्रव्यत्वसाध्यगुणकर्मान्यत्वविशिष्टसत्त्वहेतुकानुमितिस्थले गुणकर्मान्यत्ववैशिष्ट्यं सत्तात्वं चेति द्वयं हेतुतावच्छेदकम्, तत्र हेतुतावच्छेदकता वैशिष्ट्यं सत्तात्वं चेत्युभयत्र पर्य्याप्तिसम्बन्धेन हेतुतावच्छेदकतात्वेन वर्तते। अतः पर्य्याप्तिसम्बन्धनिरूपिता सांसर्गिकी प्रतियोगिता हेतुतावच्छेदकतायामस्ति, सा प्रतियोगिता प्रकृतहेतुतावच्छेदकतात्वावच्छिन्ना, तन्निरूपकः प्रकृतपर्य्याप्तिसम्बन्धः, तन्निरूपिता अनुयोगिता हेतुतावच्छेदकद्वये वर्तते, तस्या अनुयोगिताया अवच्छेदकं रूपं प्रकृतहेतुतावच्छेदकीभूतवैशिष्ट्यसत्तात्वोभयगतं द्वित्वम्, अनुयोगिगतसंख्यादेरेव पर्याप्तिसम्बन्धानुयोगितावच्छेदकत्वनियमात्। आधेयता स्वावच्छेदकतात्वावच्छिन्नप्रतियो गिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तादृशरूपवृत्तिस्तदैव भवति यद्याधेयता निरुक्तवैशिष्ट्यसत्तात्वरूपधर्मद्वयेनावच्छिन्ना भवति, तथाभूताधेयतानिरूपिताधिकरणतारूपप्रकृतहेत्वधिकरणतायाः प्रकृतस्थले द्रव्य एव सत्त्वेन तत्र च द्रव्यत्वाभावरूपसाध्याभावासत्त्वेन नामुत्र व्याप्तिलक्षणाव्याप्तिसम्भवः।

एवं रीत्या यत्र यत्र दोषनिरासाद्यर्थं पर्य्याप्तिनिवेशः कार्य्यः, तत्र सर्वत्रैव तद्गर्भे सांसर्गिकप्रतियोगितायाः सांसर्गिकानुयोगितायाश्च प्रवेशोऽनुसन्धेयः।

अनयोः सांसर्गिकप्रतियोगित्वानुयोगित्वयोः स्वरूपनिरूपणमधिकृत्य व्याप्तिसिद्धान्तलक्षणदीधितिव्याख्यानावसरे निरुक्तं जगदीशेन यथा—'संयोगः पर्वते वह्नेः सम्बन्धो न तु वह्नौ पर्वतस्येत्यादिप्रतीत्या हि किञ्चित्प्रतियोगिककिञ्चिदनुयोगिकसम्बन्धत्वमनुभवसिद्धं कुत्रचिदेव संयोगादौ, न तु सर्वत्र। तच्च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत्' इति।

निरुक्तं प्रतियोगित्वमनुयोगित्वं च स्वरूपसम्बन्धविशेष इति कल्पे तस्य किंस्वरूपत्वमिति पर्य्यनुयोगस्य दुष्करसमाधानत्वादतिरिक्तपदार्थत्वमेव तयोः समीचीनमुत्पश्यामः।

न च सांसर्गिकं प्रतियोगित्वं वृत्तित्वरूपं सांसर्गिकमनुयोगित्वं चाधिकरणत्वरूपमेवेति शक्यते, निर्वक्तुम्, वृत्त्यनियामकसंसर्गनिरुपितयोरपि प्रतियोगित्वानुयोगित्वयोरभ्युपगमात्, तत्र तत्सम्बन्धावच्छिन्नवृत्तित्वाधिकरणत्वयोरप्रसिद्धेः।

स्थलविशेषे निरूपकत्वाद्यर्थेऽपि प्रतियोगिपदव्यवहारो दृश्यते, यथा—व्याप्तिपञ्चकस्य मथुरानाथकृतरहस्यटीकायाम् हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिकहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरुपितविशेषणताविशेषसम्बन्धेन'

इति। अत्र हेत्वधिकरणताप्रतियोगिकेति हेत्वधिकरणतानिरूपितेत्यर्थः। आधेयतानिरूपितेत्याधेयताप्रतियोगिकेत्यर्थं इति सम्प्रदायः।

सादृश्यादिवर्णनास्थलेऽपि निरूपकत्वाद्यर्थे प्रतियोगिपदव्यवहारो भवति, यथा—चन्द्रवन्मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्यवन्मुखमित्याद्यर्थे।

घटसंयोगवद् भूतलमित्यादौ संयोगाद्यंशे प्रतियोगित्वसम्बन्धेन घटादेर्विशेषणतया भानात् संयोगादिनिष्ठप्रकारतानिरूपिताया घटादिनिष्ठाया अवच्छेदकताया अवच्छेदकसम्बन्धरूपेणापि प्रतियोगित्वस्य भानं भवतीति ध्येयम्।

आपातदृष्टया सांसर्गिकं प्रतियोगित्वमनुयोगित्वञ्च सम्बन्धित्वरूपमिति शक्यते वक्तुम्, परं तस्य सम्बन्धित्वस्य विवरणे कर्तव्ये प्रतियोगित्वस्यानुयोगित्वस्य च परिहातुमशक्यत्वेनात्माश्रयदोषस्यावश्यं लब्धपदत्वम्। तदेवं सांसर्गिकं प्रतियोगित्वमनुयोगित्वं च पृथक् पदार्थावित्येव समीचीना स्थितिः।

अथेदानीमभावीयप्रतियोगित्वमधिक्रियते। तथाहि—यस्याभावः स प्रतियोगी। यथा—घटो नास्तीत्यभावस्थले घटस्यैवाभाव इति घटस्तदभावप्रतियोगी। प्रतियोगिन्शब्दोत्तरं भावार्थकेन त्वप्रत्ययेन प्रतियोगित्वशब्दः, तल्प्रत्ययेन च प्रतियोगिताशब्दो निष्पद्यते। प्रतियोगो विरोधः, सोऽस्यातीति प्रतियोगी, तस्य भावः प्रतियोगित्वमिति व्युत्पत्त्यनुसारं विरोधित्वं प्रतिपक्षत्वमित्यर्थ आयाति। प्रयुज्यते च तदनुसारं लोके बहुत्रैवासौ प्रतियोगिशब्दः।

अस्ति तस्य साहित्येऽपि तस्मिन्नर्थे प्रयोगो यथा—

> भावादभावाद् यदि नातिरिक्तः सम्बन्धिभिः स्वीक्रियते पदार्थः।
> जन्याविनाशि प्रतियोगिशून्यं श्रीलक्ष्मणक्षोणिपतेर्यशः किम्?॥

संग्रहेणास्य श्लोकस्य तात्पर्य्यं यथा—श्रीलक्ष्मणसेनाख्यस्य क्षोणीपतेर्यशो न भावपदार्थः, जन्यत्वे सत्यविनाशित्वात्; नाभावपदार्थः प्रतियोगिशून्यत्वात्। तदेवं तस्य भावाभावव्यतिरिक्ततृतीयविधपदार्थत्वं प्राप्तम्, तच्च नाभिमतं नैयायिकानाम्। तदत्र का गतिरिति कस्यचिद् वैदान्तिकस्य नैयायिकं प्रत्यधिक्षेपः। वेदान्तिभिस्तु सदसद्विलक्षणा अविद्या अङ्गीक्रियते। अत्र यशःपक्षे प्रतियोगिपदस्य प्रतिस्पर्द्धिरूपोऽर्थः।

तदेवं योगेन समुपात्ते प्रतियोगिशब्दस्य विरोधिरूपार्थे परिगृहीते प्रकृताभावासामानाधिकरण्यपर्य्यवसितं सहानवस्थायित्वलक्षणमेव प्रकृतं प्रतियोगित्वं प्रतिपन्नं भवति। एवञ्च सति गुणे गुणकर्मान्यत्वविशिष्टसत्ता नास्तीत्याद्यभावानां प्रतियोगिभूते विशिष्टसत्तादौ तत्प्रतियोगित्वं नोपपद्यते, विशिष्टसत्तायाः केवलसत्तायाश्च मिथो भेदविरहेण विशिष्टसत्ताभावाधिकरणे सत्तावति गुणादौ विशिष्ट-

सत्ताया वर्तमानतया विशिष्ठसत्तायां निरुक्तविरोधित्वानुपपत्तेः। विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमेन वैशिष्टचरूपेणापि तत्र तथाविधाभावसामानाधिकरण्याभावविरहात्।

किञ्च, प्रतियोगित्वस्य तथाविधत्वे सर्वत्रावृत्तिपदार्थे निखिलाभावप्रतियोगित्वप्रसङ्गो दुर्वारः स्यात्। समवायेन सत्ता नास्तीत्याद्यभावानां कालिकादिसम्बन्धेन सामानाधिकरण्यमुपादाय दोषप्रसङ्गस्तु प्रकृताभावीयसंसर्गविशेषप्रकृतप्रतियोगितावच्छेदकसंसर्गविशेषाभ्यां सामानाधिकरण्यस्य निवेशेनैव शक्यो निवारयितुम् भेदप्रतियोगिन्यव्याप्तिरपि सामानाधिकरण्यघटकवृत्तित्वाधिकरणत्वस्थले सम्बन्धित्वविवक्षया वारयितुं शक्या। तथाप्यवृत्तिपदार्थमात्रे निखिलाभावप्रतियोगित्वप्रसङ्गभयेन निरुक्तासामानाधिकरण्यरूपप्रतियोगित्वकल्पो वर्जनीयः। एतेन विशिष्टकेवलयोः पृथक्त्वस्वीकारेण विशिष्टसत्ता नास्तीत्यादौ विशिष्टसत्तादिषु प्रतियोगित्वोपपत्तावपि न तत्कल्पस्यापरिहेयतेति स्थितम्।

मणिकारः पुनरन्यथापि तत्त्वचिन्तामणिपूर्वपक्षग्रन्थे कल्पमिममुपन्यस्य सपरिकरं दूषितवान्, यथा—'प्रतियोगित्वं न विरोधित्वं सहानवस्थानलक्षणं गोत्वाश्वत्वयोरतथात्वात्, अन्योन्याभावप्रतियोगिन्यसत्त्वाच्च। किन्तु यथाऽधिकरणाभावयोः स्वरूपविशेषः सम्वन्धस्तथा प्रतियोगित्वमनुयोगित्वमपि' इति। अत्रापि पक्षे प्रतियोगित्वादेः प्रतियोग्यादिस्वरूपत्वे प्रतियोगिप्रतियोगित्वादीनामाधाराधेयभावादिप्रतिपत्त्यनुपपत्तिप्रभृतिदोषप्रसङ्गेन तदीयस्वरूपनिरूपणमशक्यमिति पृथक्पदार्थत्वमेवास्य निरवद्यम्।

केचित्तु प्रतिकूलसम्बन्धवत्वमभावीयप्रतियोगिवत्त्वमित्याहुः। तत्र सम्बन्धगतं प्रतिकूलत्वं प्रकृताभावनिरूपितमेव बोद्धव्यम्। तच्च सहानवस्थानलक्षणविरोधित्वरूपम्। सम्बन्धवत्वं सांसर्गिकप्रतियोगित्वसम्बन्धेन। एवञ्च संयोगेन घटो नास्तीत्याद्यभावस्थले प्रकृताभावो घटाद्यभावः, तत्प्रतिकूलः सम्बन्धो घटादिप्रतियोगिकः संयोगः। तन्निरूपितसांसर्गिकप्रतियोगित्वस्य घटादौ सत्त्वात् तत्र प्रकृताभावप्रतियोगित्वोपपत्तिरिति।

तेषामपि न समीचीनः पक्षः। तथाहि—समवायेन द्रव्यत्वं नास्तीत्याद्यभावस्थले समवायस्यैकत्वेन य एव द्रव्यत्वप्रतियोगिकः समवायस्तस्यैव गुणत्वकर्मत्वादिप्रतियोगिकसमवायत्वेन निरुक्तद्रव्यत्वाभाववति गुणादौ तस्य द्रव्यत्वप्रतियोगिकसमवायस्य वर्तमानत्वात्, द्रव्यत्वप्रतियोगिकसमवायस्य प्रकृताभावप्रतिकूलसम्बन्धत्वाभावेन द्रव्यत्वादौ तादृशाभावप्रतियोगित्वानुपपत्तिः।

किञ्च, समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकगगनाभावादिरूपकेवलान्वय्यभावस्थले व्यधिकरणसंयोगादिसम्बन्धावच्छिन्नगुणाभावादिरूपकेवलान्वय्यभाव-

स्थले च कस्यापि सम्बन्धस्य प्रकृताभावप्रतिकूलत्वाभावेन प्रकृताभावप्रतिकूलसम्व-न्धस्य गगनादौ गुणादौ च तन्निरूपितसांसर्गिकप्रतियोगित्वेन तद्वत्त्वस्याप्रसिद्धया गगनादेः प्रगियोगित्वमनुपपन्नं भवति ।

प्रकृतं प्रतिकूलत्वं यदि सहानवस्थानलक्षणमनुक्त्वा स्वज्ञानप्रतिबन्धकताव-च्छेदकप्रकारतावच्छेदकसंसर्गत्वलक्षणं तदुच्यते, तदा तत्र तत्र सम्बन्धगतप्रतिकूलत्वो-पपत्तावपि गगनादौ सादृशसम्बन्धप्रतियोगित्वाभावादनुपपत्तिः, व्याप्यादिसाधारण्ये-नातिप्रसक्तिश्चेत्यादिकं बहुतरं दूषणमनुसन्धेयम् ।

आचार्य्यास्तु—'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' इत्यभावीयप्रतियो-गितायाः स्वरूपं निरूपितवन्तः। तदेव स्वरूपं मणिकारोऽपि तत्त्वचिन्तामणिपूर्वपक्ष-ग्रन्थे सादरं समाददे । तार्किकशिरोमणिना दीधितिकारेणापि तत्रापाततः प्रतीय-मानस्य दोषस्य प्रयत्नेनैव कृतं निरसनम् । यथा –न चान्योन्याभावप्रतियोगि-तत्त्वावच्छेदकयोरप्रसक्त्यतिप्रसक्ती, विरहपदस्य तज्ज्ञानप्रतिबन्धकज्ञानविषयार्थ-कत्वात् । प्रतिबध्नाति हि तादात्म्येन प्रतियोगिज्ञानमन्योन्याभाववत्ताबुद्धिम् । प्रति-बन्धकत्वं चात्र एककालावच्छेदेन एकत्रावर्तमानत्वम् । अभावपदस्य च स्वाभाव-परत्वात्' इति ।

उक्तव्याख्यायां तार्किकशिरोमणिना आत्माश्रयदोषनिरसनाय कारणी-भूताभावप्रतियोगित्व-रूपं प्रसिद्धं प्रतिबन्धकत्वं परिहाय एककालावच्छेदेनैकत्रावर्त-मानत्वरूपं तत् परिगृहीतम् प्रतियोगिव्याप्यादावतिप्रसङ्गवारणाय चाभावपदस्य स्वाभावपरत्वमभिहितम् । एकत्रेति एकस्मिन्नात्मनीत्यर्थः। विभिन्नकालावच्छेदेन भावाभावज्ञानयोरेकस्मिन्नात्मनि वर्तमानतयाऽसम्भववारणाय यथा एककाला-वच्छेदेनेति निवेशितम्, तथैव कायव्यूहावस्थायामेककाल एव विभिन्नशरीरावच्छे-देन एकत्रात्मनि भावाभावज्ञानयोर्वर्तमानत्वादसम्भववारणाय एकदेशावच्छेदेने-त्यपि निवेशनीयम् । ज्ञानद्वयेऽनाहार्य्यत्वनिवेशोऽपि तद्दोषवारणायैवा-परिहार्य्यः।

एतावत्पर्य्यन्तानुधावनेन सत्यपि निरुक्तस्वरूपे दोषपरिशून्ये विरहादिपदस्य तादृशतादृशार्थविशेषे आधुनिकलक्षणास्त्रीकारदोषपरिहारासम्भवात् प्रतियोगित्वस्य कायिकमहागौरवास्कन्दितत्वदोषापाताच्च तस्य निरुक्तस्वरूपतामपहाय प्रतियो-गित्वं नाम कश्चिदरिक्तः पारिभाषिकपदार्थ इत्येव सिद्धान्तो ज्यायानिति प्रतिभाति । तार्किकशिरोमणिरपि व्याप्तिसिद्धान्तलक्षणमूलव्याख्यायां दीधितावाह—'विषयता-तत्त्वादिवत् प्रतियोगित्वाधिकरणत्व-तत्त्वसम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्यप्येकदेशिनः,' इति ।

नव्यनैयायिकप्रकाण्डेन श्रीरामभद्रसार्वभौमेण रघुनाथकृतपदार्थतत्त्वनिरू-पणस्य टीकायां विषयत्वविषयित्वप्रतियोगित्वानुयोगित्वावधित्वावधिमत्त्वाधारत्वा-

धेयत्वदैशिकविशेषणत्वकालिकविशेषणत्वविशेष्यत्वावच्छेदयत्वप्रभृतिधर्मेषु शिरोमणिसम्मतातिरिक्तपदार्थत्वं वर्णितम् ।

जगदीशतर्कालङ्कारस्तु सिद्धान्तलक्षणदीधितिव्याख्यानप्रसङ्गेन प्रतियोगितायाःस्वरूपमधिकृत्य वहुलमुक्त्वापि सुतरामपरितुष्ट इव शिरोमणेरवच्छेदकत्वनिरुक्तिग्रन्थस्य 'स्वरूपसम्वन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्ति भिन्नत्वेन' इति सन्दर्भव्याख्यानावसरे प्राह—'स्वरूपसम्वन्धात्मिकाया इति प्रतिव्यक्ति भिन्नत्वे हेतुः तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थः । तत्तत्प्रतियोगिमात्रस्वरूपत्वे सामान्याभावविशेषाभावीयप्रतियोगितयोरविशेषप्रसङ्गात्' इति । प्रतियोगितायाः प्रतियोगिमात्रस्वरूपत्वे जगदीशेनैव दोषो दर्शितः, तस्या अभावमात्रस्वरूपत्वेऽपि समनियताभावयोरैक्यसिद्धान्ते तद्रूपाभावतद्रसाभावादिप्रतियोगितयोरविशेषप्रसङ्गरूपो दोषः प्रतिपत्तव्यः । अतस्तथाविधोभयस्वरूपैवाभावीयप्रतियोगिता स्वीकृता ।

किन्तु कल्पे तावदस्मिन् महानेको दोषः पदमाधत्ते । यथा यत्र सत्तावान् नास्ति जातिमान् नास्ति इत्यादिरूपोऽभावः प्रत्येतव्यः, तत्र तादृशाभावप्रतियोगित्वं द्रव्ये कथमुपपद्यते ? प्रतियोगितायाः प्रतियोग्यभावोभयस्वरूपत्वात् । सत्तावतो जातिमतश्च गुणस्य द्रव्यमात्र एव सत्त्वात् तत्र सत्तावदभावजातिमदभावयोः वृत्तेः सुतरामसम्भवात्, अत्र सत्तावदभावत्वादिना रूपेण सत्तावदभावादेः स्थातुमशक्तत्वेऽपि प्रतियोगितात्वरूपेण द्रव्ये तादृशाभावस्य वृत्तौ न विरोध इत्यादिकं केषाञ्चित् समाधानं तु नातिरुचिकरमस्माकम् । तस्मात् प्रतियोगिताया अतिरिक्तपदार्थत्वमेव वयमनवद्यमुपादद्महे ।

'अभावप्रत्ययो हि विशिष्टवैशिष्ट्यावगाहिवोधमर्य्यादां नातिशेते' इति नियमेनाभावप्रत्ययमात्रस्यैव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैशिष्ट्यावगाहित्वस्यावश्यमभ्युपगन्तव्यत्वेन कञ्चित् सम्बन्धमन्तरेणाभावे प्रतियोगिवैशिष्ट्यस्यासम्भवेनाभावग्राहकमानेनैवाभावे प्रतियोगिसंसर्गरूपेण तस्याभावीयप्रतियोगित्वस्य सिद्धिः ।

तस्य प्रतियोगित्वस्याभावापेक्षित्वेन तदिदमभावेन निरूपितं भवति, तन्निरूपकश्चाभावः । प्रतियोगितात्वेनाखण्डोपाधिना सर्वप्रतियोगित्वानामैक्येऽपि स्वस्वावच्छेदकीभूतधर्मसम्बन्धभेदेन तदिदं भिद्यते । स्थलभेदेन धर्मविशेषाः सम्बन्धविशेषाश्च प्रतियोगित्वमेकैकं परेभ्यः प्रतियोगित्वेभ्यो व्यावर्तयन्ति । एवं चावच्छिनत्ति व्यावर्तयतीत्यादि यथा कथञ्चिद् व्युत्पत्त्या प्रतिपद्यमानमवच्छेदकत्वमवश्यमभ्युपेयम् । सत्यपि बहुष्वेव धर्मविशेषेषु तत्तत्प्रतियोगिताव्यावर्तकत्वसम्भवे प्रतियोग्यंशे भासमानव्यावर्तकधर्म एवावच्छेदकत्वोपपत्त्यर्थं तदिदमवच्छेदकत्वं पारिभाषिकमेवाभ्युपगन्तव्यम् ।

तच्च धार्मिकं सांसर्गिकं चेति द्विविधं व्यवतिष्ठते। तत्र प्रतियोग्यंशे विशेषणतया भासमानो व्यावर्तको धर्मः प्रतियोगितावच्छेदको धर्मः, तत्र वर्तमानमवच्छेदकत्वं धार्मिकमवच्छेदकत्वम्। येन सम्बन्धेनाभावः, स प्रतियोगितावच्छेदकः सम्बन्धः, तत्र वर्तमानमवच्छेदकत्वं सांसर्गिकमवच्छेदकत्वम्। प्रतियोगिता तेन धर्मेण तेन सम्बन्धेन चावच्छिन्ना भवति। अवच्छिन्नत्वं नाम अवच्छेदकतानिरूपितत्वमवच्छेद्यत्वाख्यं धर्मान्तरं वा। सांसर्गिकावच्छेदकतायाः ससर्गतेत्यपि संज्ञान्तरम्। तत्तदवच्छेदकतया समं प्रतियोगितायाः मिथो निरूप्यनिरूपकभावः। प्रतियोगितावच्छेदकधर्मनिष्ठा या धार्मिकी अवच्छेदकता सा कदाचित् किञ्चिद्धर्मावच्छिन्ना कदाचिच्च निरवच्छिन्ना। प्रतियोगितावच्छेदकधर्मांशे यदा कश्चिद् धर्मो विशेषणतया भासते, तदा तद्गता धार्मिकी अवच्छेदकता तेन धर्मेणावच्छिन्ना, यदा प्रतियोगितावच्छेदकधर्मांशे कोऽपि धर्मो विशेषणतया नैव भासते, तन्निष्ठा धार्मिको अवच्छेदकता निरवच्छिन्नाधर्मनिष्ठा धार्मिकी अवच्छेदकता नियमेन किञ्चित्सम्बन्धावच्छिना। संसर्गताख्या सांसर्गिकी अवच्छेदकता तु संसर्गसंसर्गस्य भानमभ्युपगच्छतामुपाध्यायादीनां मते संसर्गावच्छिन्ना, मतान्तरे तु संसर्गानवच्छिन्नैव। संसर्गतावच्छेदकीभूते धर्मे विशेषणताख्या काचिद् विषयता स्वीक्रियते। ये तु तत्रापि प्रकारत्वाख्यां विषयतामङ्गीकुर्वन्ति, तेषां संसर्गतावच्छेदकधर्मगता संसर्गतावच्छिना सा।

उदाहरणं यथा—संयोगेन घटो नास्तीत्यभावप्रतीतिस्थले घटः प्रतियोगी, तन्निष्ठा या प्रतियोगिता तस्या घटांशे विशेषणतया भासमानधर्मो घटत्वमवच्छेदकम्, अनुल्लिख्यमानाया जातेः स्वरूपतो भाननियमाद् निरुक्तघटत्वरूपधर्मांशे कस्यापि विशेषणस्याभानात् प्रागुक्तघटत्वगतमवच्छेदकत्वं निरवच्छिन्नम्। तस्य च घटत्वस्य घटांशे समवायेनैव सम्बन्धेन विशेषणत्वात् तन्निष्ठाऽवच्छेदकता समवायसम्बन्धावच्छिन्ना। संयोगस्तत्र प्रतियोगितावच्छेदकः सम्बन्धः तन्निष्ठा संसर्गतापराख्या सांसर्गिकावच्छेदकता संयोगत्वरूपधर्मावच्छिन्ना किञ्चित्संसर्गानवच्छिन्ना च। संसर्गसंसर्गस्य भानमभ्युपगच्छतां मते तु सा समवायसम्बन्धावच्छिन्ना। संयोगत्वनिष्ठा या संसर्गतावच्छेदकता सापि किञ्चिद्धर्मानवच्छिन्ना किञ्चित्सम्बन्धानवच्छिन्ना च। एवं स्थिते संयोगेन घटो नास्तीत्यभावस्य विशेषतः स्वरूपपरिचये दातव्ये संयोगत्वनिष्ठावच्छेदकतानिरूपितसंयोगनिष्ठसंसर्गतानिरूपितत्वे सति समवायसम्बन्धावच्छिन्नघटत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिता या प्रतियोगिता तन्निरूपकोऽभाव इति वक्तव्यम्।

संयोगेन घटो नास्तीत्यत्र संयोगेन घटत्ववान् नास्तीत्येवं घटत्वशब्दोल्लेखेन यत्र व्यवहारस्तत्र घटत्वस्य जातेरनुल्लिख्यमानत्वाभावेन स्वरूपतोऽभानाद् घटत्वनिष्ठावच्छेदकता न निरवच्छिन्ना, किन्तु घटत्वत्वावच्छिन्ना। अन्यत् सर्वं पूर्ववदेव

बोध्यम् । अनयैव दिशा यथासम्भवं प्रकारताविशेष्यताधेयताप्रभृतीनां वक्ष्यमाण-पारिभाषिकपदार्थानामपि धर्मसम्बन्धगतमवच्छेदकत्वं सामान्यरूपेणावधेयम् ।

निरुक्तरूपावच्छेदकत्वपदार्थेन विशेषप्रयोजनानुबन्धिना परिव्याप्तमिव निखिलं नव्यन्यायतन्त्रम् । निरुक्तावच्छेदकत्वमन्तरेण वहव एव न्यायसिद्धान्ता निर्दोषमुपपादयितुं न शक्यन्ते । तत्रादौ केचिदुदाह्रियन्ते यथा– प्रतियोग्यधिकरणतया सममभावस्य वस्तुतान्त्रिकं सहानवस्थानलक्षणं विरोधित्वमिति न्यायसिद्धान्तः । अवच्छेदकतामनुपादायापाततो यदि प्रतियोगिना सममेवाभावस्य विरोधित्वं निरुच्यते, तदा सत्त्व-विशिष्टसत्त्वादीनां मिथो भेदविरहेण सत्तादिमति गुणादौ गुणकर्मान्यत्वविशिष्टसत्ता नास्तीत्याद्यभावासत्त्वप्रसङ्गः । अतः प्रतियोग्यधिकरणतया सममभावस्य विरोधित्वं कल्प्यते । अवच्छेदकताया अकल्पनेन तत्रापि यदि प्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतया समं विरोधित्वम् तदा तद्दोषतादवस्थ्यम्, अतोऽवच्छेदकत्वमुपादाय स्वप्रतियोगितावच्छेदकानच्छिन्नाधेयतानिरूपिताधिकरणतया सममभावस्य विरोधित्वं निर्वचनीयम् । न चैवमपि गुणकर्मान्यत्वविशिष्टसत्ता नास्तीत्याद्यभावीयप्रतियोगिताया अवच्छेदकत्वस्य सत्तात्वादिधर्मेऽपि सत्त्वेन सत्तात्वाद्यवच्छिन्नाधेयतानिरूपिताधिकरणतावति गुणादौ गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभावस्य तथैवासत्त्वप्रसङ्ग इति वाच्यम्, अवच्छेदकतायाः पर्य्याप्त्यनुसरणेन तद्वारणात् । तत्र पर्य्याप्त्यनुसरणप्रणाली यथा— स्वनिरूपितप्रतियोगितावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या आधेयता तन्निरूपिता या अधिकरणता तया सममभावस्य विरोधित्वमिति । आधेयतायां निरुक्तरूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । एवं च प्रकृते गुणकर्मान्यत्वविशिष्टसत्ता नास्तीत्यभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकीभूते गुणकर्मान्यत्ववैशिष्टयसत्तात्वरूपप्रकृतप्रतियोगितावच्छेदकधर्मद्वयपर्य्याप्तद्वित्वे सत्तात्वमात्रपर्य्याप्तावच्छेदकतानिरूपिताधेयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य विरहेण निरुक्तसम्बन्धेन सत्तात्वमात्रपर्य्याप्तावच्छेदकतानिरूपिताधेयतायास्तादृशरूपवृत्तित्वाभावेन गुणादौ सत्यपि सत्तात्वमात्रावच्छिन्नाधिकरणत्वे प्रकृते निरुक्तरूपवृत्तिर्या गुणकर्मान्यत्ववैशिष्टयसत्तात्वोभयपर्य्याप्तावच्छेदकतानिरूपिताधेयता तन्निरूपिताया द्रव्यमात्रनिष्ठायास्तत्र गुणादावसत्त्वेनैव निरुक्तदोषनिरासः । एवमन्यत्राप्यवच्छेदकत्वानुसरणस्य विशेषणोपयोगित्वमनुसन्धेयम् ।

निरुक्तस्थलदिशा सर्वत्रैव आधेयत्वाधिकरणत्वयोर्मिथो निरूप्यनिरूपकभावः, परस्परमुभयस्योभयसापेक्षत्वात् । निरुक्तमाधेयत्वमधिकरणत्वं च प्रतियोगित्वानुयोगित्वादिवत् पारिभाषिकं पदार्थान्तरमेवेति विविधविचारपुरःसरं जगदीशतर्का-

लङ्कारप्रमुखः प्रतिपादितवन्तः। तदुक्तं शब्दशक्तिप्रकाशिकायां जगदीशेन—'अधिकरणपदस्य शक्यतावच्छेदकन्तु न सम्बन्धमात्रम्; घटाद्यात्मनस्तदधिकरणतापत्तेः। वृत्तिनियामकसम्बन्धस्तथेत्यपि न, कुण्डादौ वदरादेरिव वदरादावपि कुण्डादेरधिकरणत्वापत्तेः। वृत्तिनियामकस्याधिकरणतावच्छेदकत्वे पर्य्यवसानाच्च। नाप्याधेयतानिरूपकत्वमधिकरणत्वम्, तुल्यन्यायेनाधिकरणतानिरूपकत्वस्यैवाधेयतात्वेन परस्पराश्रयप्रसङ्गात्। परन्त्वाधेयतावत् पदार्थान्तरमेवाधिकरणत्वम्' इति। भवानन्दसिद्धान्तवागीशः स्वकृतकारकचक्रगन्थे प्राह—'प्रतियोगित्वानुयोगित्ववद् आधेयत्वमधिकरणत्वञ्च विलक्षणप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। स चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत्' इति।

तयोराधेयताधिकरणत्वयोर्धर्मिकावच्छेदकतानिरूपितत्वमुभयत्र तुल्यम्। सांसर्गिकावच्छेदकतानिरूपितत्वपर्य्यवसन्नं संसर्गावच्छिन्नत्वन्तु केवलमाधेयतायामेव न त्वधिकरणतायामपि, तावन्मात्रेणैवेष्टसिद्धेः।

न च विनिगमनाविरहेण आधेयतायाः सम्बन्धानवच्छिन्नत्वमधिकरणतायाश्च सम्बन्धावच्छिन्नत्वमास्तामिति वाच्यम्; सम्बन्धविशेषविशेषितवृत्तित्वस्याभावेन सम्बन्धविशेषविशेषितवृत्तित्वस्याधिकरणताया वस्तुतान्त्रिकविरोधिताकल्पनायां तत्सम्बन्धावच्छिन्नतत्प्रकारकबुद्धेस्तद्धर्मिकायास्तत्सम्बन्धावच्छिन्नवृत्तित्वस्याभावप्रकारिकाया बुद्धेश्च वैज्ञानिकविरोधिताकल्पनायामधिकरणतानिरूपितत्वस्याधिकस्य प्रवेशावश्यकत्वेन गौरवापातात्। तथाहि—वृत्तिताया आधेयतापराख्यायाः सम्बन्धावच्छिन्नत्वे संयोगसम्बन्धावच्छिन्नवृत्तित्वस्य अभावेन समं संयोगसम्बन्धावच्छिन्नवृत्तिताया अधिकरणत्वस्य विरोधित्वमित्येवं वस्तुतान्त्रिकं विरोधित्वं शक्यं कल्पयितुम्। वृत्तितायाः सम्बन्धानवच्छिन्नत्वेऽधिकरणतायाश्च सम्बन्धावच्छिन्नत्वे संयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपितवृत्तित्वस्याभावेन समं संयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपितवृत्तित्वस्याधिकरणताया निरुक्तविरोधित्वं कल्पनीयम्।

वृत्तित्वस्य सम्बन्धावच्छिन्नत्वे पूर्वोक्तबुद्धिद्वयस्य मिथः प्रतिबध्यप्रतिबन्धकभावलक्षणं वैज्ञानिकं विरोधित्वमपि—तत्सम्बन्धावच्छिन्नतत्प्रकारकबुद्धिं प्रति तत्सम्बन्धावच्छिन्नवृत्तित्वस्याभावप्रकारिका तद्विशेष्यिका बुद्धिः प्रतिबन्धिका, तत्सम्बन्धावच्छिन्नवृत्तित्वस्याभावप्रकारकतद्विशेष्यकबुद्धिं प्रति च तत्सम्बन्धावच्छिन्नतत्प्रकारकबुद्धिः प्रतिबन्धिकेत्येवं शक्यते कल्पयितुम्। वृत्तितायाः सम्बन्धानवच्छिन्नत्वेऽधिकरणतायाश्च सम्बन्धावच्छिन्नत्वे तत्सम्बन्धावच्छिन्नतत्प्रकारकबुद्धिं प्रति तत्सम्बधावच्छिन्नाधिकरणतानिरूपितवृत्तित्वस्याभावप्रकारकतद्विशेष्यकबुद्धिः प्रतिबन्धिका, तत्सम्बन्धावच्छिन्नाधिकरणतानिरूपितवृत्तित्वस्याभावप्रकारकतद्विशेष्यकबुद्धिं प्रति च तत्सम्बन्धावच्छिन्नतत्प्रकारकबुद्धिः प्रतिबन्धिकेत्येवं कल्पनीयम्।

एवञ्च पूर्वत्र प्रतिबन्धकतागर्भे उत्तरत्र च प्रतिबध्यतागर्भेऽधिकरणतानिरूपितत्वस्याधिकस्य भानाद् गौरवम्। अधिकरणतानिरूपितत्वांशपरिहारेण सम्बन्धमनन्तर्भाव्य विरोधित्वकल्पने तु संयोगेन वह्निमानित्यादिबुद्धेः समवायेनावृत्तिर्वह्निरित्यादिबुद्धेश्च मिथो विरोधित्वमापद्येत। निरुक्तवस्तुतान्त्रिकविरोधितायां सम्बन्धस्याप्यवच्छेदकत्वं सुतरामुपयुज्यते। सम्बन्धमनन्तर्भाव्य यदि घटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतया समं घटत्वावच्छिन्नप्रतियोगिताकाभावस्य विरोधित्वमित्येवं रीत्या केवलधार्मिकावच्छेदकतान्तर्भावेण निरुक्तविरोधित्वं निरुच्यते तदा संयोगेन घटाद्यधिकरणे भूतलादौ समवायेन घटो नास्तीत्याद्यभावानामप्यसत्त्वप्रसङ्गः। तस्मात् संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतया समं संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावस्य विरोधित्वमित्येवं रीत्या सर्वत्र विरोधित्वं कल्पनीयम्।

एवमेव भावाभावबुद्ध्यादीनां वैज्ञानिकविरोधितायामपि वर्तते धर्मसम्बन्धगतावच्छेदकत्वयोः सुतरामेव समपेक्षा। तथाहि—घटत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिबुद्धिं प्रति संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छेद्यप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिबुद्धिः प्रतिबन्धिकेत्येवं प्रतिबध्यप्रतिबन्धकभावो व्यवस्थितो वर्तते। तत्र धर्मसम्बन्धयोरवच्छेदकत्वमपहाय प्रतिबध्यप्रतिबन्धकभावे निर्वचनीये घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताशालिबुद्धिं प्रति घटाभावनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताशालिबुद्धिः प्रतिबन्धिकेत्येवं वक्तव्यम्। एवं सति संयोगेन द्रव्यवद् द्रव्यमित्यादिज्ञानानामपि भूतलत्वाद्यवच्छिन्नधर्मिकसमवायसम्बन्धावच्छिन्नघटप्रतियोगिकाभावप्रकारकबुद्धिप्रतिबध्यत्वप्रसङ्गः। एवमन्यत्राप्यनुसन्धेयम्। प्रकारतावच्छेदकधर्मसम्बन्धधर्मितावच्छेदकादीनामवच्छेदकत्वमन्तर्भाव्य प्रागुक्तरीत्या प्रतिबध्यप्रतिबन्धकभावव्यवस्थापने तु नास्ति दोषः। एवं कार्य्यकारणभावादिस्थलेऽपि धर्मसम्बधयोरवच्छेदकत्वस्य प्रयोजनमनुसन्धेयम्।

भावाभावबुद्ध्योः प्रतिबध्यप्रतिबन्धकभावे वर्तते कश्चिद् विशेषः। यथा—घटत्वादिसामान्यधर्ममात्रावच्छिन्नप्रतियोगिताकघटादिसामान्याभाववत्ताबुद्धिः प्रतिबध्नाति निर्विशेषेण सामान्यघटवत्ताबुद्धिं विशिष्टघटवत्ताबुद्धिं चेत्यनुभवेन घटसामान्याभाववत्ताबुद्धिप्रतिबध्यतावच्छेदकप्रकारतायामवच्छेदकविधया घटत्वेतरधर्मप्रवेशप्रतिषेधकं पन्थानमनुपादाय निरुक्तद्विविधबुद्धेरेव प्रतिबध्यत्वोपपादनार्थं घटत्वनिष्ठावच्छेदकताकप्रकारताकत्वमन्तर्भाव्यैव घटसामान्याभाववत्ताबुद्धिप्रतिबध्यता कल्पनीया। विशिष्टाभावबुद्धिस्तु प्रतिबध्नाति विशिष्टवत्ताबुद्धिमेव न तु सामान्यवत्ताबुद्धिमपीति तत्प्रतिबध्यतावच्छेदककोटिप्रविष्टप्रकारतायां वैशि-

ष्टचघटत्वादिधर्मद्वयाद्यवच्छिन्नत्वमेवोपादेयम् । सामान्याभाववत्ताबुद्धि प्रति सामान्यप्रकारकबुद्धिर्विशिष्टप्रकारकबुद्धिश्चेत्युभयोरेव निर्विशेषेण प्रतिबन्धकतया तत्र घटत्वादिसामान्यधर्मनिष्ठावच्छेदकताकप्रकारकत्वमन्तर्भाव्यैव प्रतिबन्धकता वक्तव्या ।

तत्रापि निरुक्तप्रतिबन्धकतावच्छेदकधर्माक्रान्तज्ञानधर्मिकाप्रामाण्यज्ञानादि-सत्त्वे प्रतिबध्यतावच्छेदकधर्माक्रान्तज्ञानोत्पत्त्या प्रसक्तस्य व्यभिचारस्य वारणाय निरुक्तरूपप्रतिबन्धकतावच्छेदकधर्माक्रान्तज्ञानधर्मिकाप्रामाण्यज्ञानादीनामुत्तेजकत्वं कल्पनीयम् । प्रतिबध्यतावच्छेदकगर्भे चानाहार्य्यत्वादीनां निवेशः कार्य्यः ।

उत्तेजकत्वं नाम प्रतिबन्धकताकुक्षौ प्रतिबन्धकतावच्छेदकीभूताभावप्रतियो-गित्वम्; कारणताकुक्षौ च कारणतावच्छेदकीभूताभावप्रतियोगित्वम् । स्वविरोधि-धर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वं नियताहार्य्यत्वम् । तदुदाहरणं यथा–निर्वह्निः पर्वतो वह्निमानित्यादौ । सामान्याहार्य्यत्वं नाम बाधनिश्चयविशिष्टत्वे सति इच्छा-विशिष्टप्रत्यक्षत्वम् । बाधनिश्चयवैशिष्टचं स्वाधिकरणसुखवृत्तित्वस्वसामानाधि-करण्यस्वाव्यवहितप्राक्क्षणवृत्तिप्रागभावप्रतियोगित्वैतत्त्रितयसम्बधेनेच्छावैशिष्टचञ्च स्वाव्यवहितोत्तरत्वस्वसामानाधिकरण्यस्वविशेष्यत्वैतत्त्रितयसम्बन्धेन । तदुदाहरणं यथा—वह्निमान् वह्न्यभाववांश्च पर्वत इत्यादिसमूहालम्बनज्ञानम्, वह्न्यभाववान् पर्वत इति ज्ञानोत्तरं वह्निमान् पर्वत इति ज्ञानञ्च । एवमन्यत् । निरुक्तप्रतिबध्यत्व-प्रतिबन्धकत्वोत्तेजकत्वाहार्य्यत्वपदार्था अपि नव्यन्यायपरिभाषिकपदार्था एव । अना-हार्य्यत्ववत् प्रतिबध्यतावच्छेदकतया लौकिकसन्निकर्षाजन्यत्वदोषविशेषाजन्यत्वयोरपि निवेशः कार्य्यः । साक्षात्कारित्वव्यञ्जकविषयिताशून्यत्वनिवेशेनैव तयोरुभयोरुपप-त्तिर्भवति । प्रतिबन्धकज्ञानगर्भेऽप्यनाहार्य्यत्वं निवेश्यम् । अव्याप्यवृत्तित्वज्ञानाभावो-ऽपि तत्र निवेश्यः । अव्याप्यवृत्तित्वं स्वाधिकरणवृत्त्यभावप्रतियोगित्वम् । अप्रामाण्यं नाम तदभाववति तत्प्रकारत्वम् । एवञ्च यदा घटवद् भूतलमिति निश्चयदशायाम् 'इदं ज्ञानं घटाभाववति घटप्रकारकम्' इत्येवमप्रामाण्यज्ञानं तदा नासौ निश्चयो घटाभाववद् भूतलमिति विपरीतबुद्धि प्रतिबध्नीयात् । तथैव यदा घटवद् भूतल-मिति निश्चयो निरुक्तरूपाहार्य्यलक्षणाक्रान्तो घटोऽव्याप्यवृत्तिरित्येवमव्याप्यवृत्ति-त्वज्ञानकालीनो वा तदापि नासौ प्रतिबध्नीयाद् विपरीतबुद्धिम् । अप्रामाण्यज्ञाना-नास्कन्दितस्याव्याप्यवृत्तित्वज्ञानाभावविशिष्टस्यानाहार्य्यात्मकनिश्चयस्यैव विपरीत-ज्ञानप्रतिबन्धकत्वनियमात् । अप्रामाण्यज्ञानस्य प्रतिबन्धकत्ववत् कारणतायामप्यु-त्तेजकत्वं सिद्धम् । तेन वह्निव्याप्यधूमवानिति परामर्शदशायां यदा इदं ज्ञानं वह्नि-व्याप्यधूमाभाववति वह्निव्याप्यधूमप्रकारकमित्यादिरूपमप्रामाण्यज्ञानं तदा तदुत्तरं न वह्निविधेयकानुमितिः । अप्रामाण्यज्ञानाभावविशिष्टस्यैव परामर्शस्य प्रकृतानुमिति-

जनकत्वात्। एवमेव वह्निव्याप्यधूमवान् वह्निव्याप्यधूमाभाववांश्च पर्वत इत्याहार्य्याकारपरामर्शादपि नानुमितिः। अव्याप्यवृत्तित्वज्ञानन्तु विपरीतज्ञानप्रतिबन्धकतास्थल एवोत्तेजकम्। अप्रामाण्यज्ञानस्योत्तेजकतायामयं हि विशेषो यथा यत्र निश्चयत्वरूपेण कारणता प्रतिबन्धकता वा तत्र ज्ञानत्वरूपेण संशयनिश्चयोभयसाधारणेनोत्तेजकता, यथा घटाभावादिबुद्धिं प्रति घटादिमत्तानिश्चयस्य प्रतिबन्धकतास्थले, अनुमित्यादौ परामर्शादेः कारणतास्थले च। तत्र तत्राप्रामाण्यज्ञानस्य संशयरूपत्वे निश्चयरूपत्वे च सममेव न विपरीतज्ञानप्रतिबन्धो न वा परामर्शादेरनुमित्यादिकार्य्यम्। यत्र तु निश्चयत्वभिन्नरूपेण संशयनिश्चयोभयसाधारणज्ञानत्वादिना कारणता प्रतिबन्धकता वा तत्र निश्चयत्वेनाप्रामाण्यज्ञानस्योत्तेजकता। यथा संशयपक्षतावादिमतेऽनुमितिं प्रति संशयस्य कारणतास्थले तथा ग्राह्यसंशयस्य प्रत्यक्षप्रतिबन्धकत्वादिस्थले। तत्र तत्र सत्यापि संशयात्मकाप्रामाण्यज्ञाने न संशयादनुमित्यनुत्पादो न वा ग्राह्यप्रत्यक्षाप्रतिबन्धः। किन्तु सत्येव निश्चयरूपाप्रामाण्यज्ञाने। एवमेवं बहुतरमत्रानुसन्धेयम्।

लक्षणादौ प्रतिबन्धकादिगर्भे उत्तेजकीभूतानामप्रामाण्यज्ञानाभावादीनामननुगतरूपेण निवेशं केचित् कुर्वन्ति, परे चाभावविशिष्टान्यत्वं ज्ञाने निवेश्यानुगतरूपेण सर्वेषामप्रामाण्यज्ञानाभावादीनां संग्रहं कुर्वन्ति। तत्राभाववैशिष्ट्यं स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतावत्त्व, स्वप्रतियोगिमत्त्वोभयसम्बन्धेन। स्वपदं संशयत्वाभावाहार्य्यत्वाभावाप्रामाण्यज्ञानाभावेत्यभावत्रयपरम्। स्वप्रतियोगित्वञ्च विशेष्यत्वसामानाधिकरण्योभय-स्वरूपैतदन्यतरसम्बन्धेन। संशयत्वाभावाहार्य्यत्वाभावस्थले संशयान्यत्वाहार्य्यभेदयोः प्रतिबन्धकतावच्छेदकत्वस्वीकारेऽन्यतरसम्बन्धघटकस्वरूपस्थाने तादात्म्यस्य निवेशः कार्य्यः।

कारणत्वाभिमतज्ञानांशे तादृशनिवेशस्थले तु प्रथमसम्बन्धघटक-स्वावच्छिन्नप्रतिबन्धकतामपहाय स्वावच्छिन्नकारणतेति वक्तव्यम्। अन्यत् सर्वं स्वयमूहनीयम्।

अथेदानीमुभयाभावस्थलीयप्रतियोगितावच्छेदकत्वमधिकृत्य किञ्चिदुपन्यस्यते, यथा—घटो नास्तीत्याद्यभावस्थले यथा घटत्वादयो धर्माः प्रतियोगितावच्छेदकास्तथा घटपटोभयं नास्तीत्याद्युभयाभावस्थले घटत्वं पटत्वमुभयत्वं चेत्यादित्रितयधर्माः प्रतियोगितावच्छेदकाः, तत्तद्धर्माणां सर्वेषामेव तुल्यतया प्रतियोग्यंशे विशेषणतया भासमानत्वात्। न च तत्र केवलमुभयत्वमेव प्रकृताभावप्रतियोगितावच्छेदकमस्त्विति वाच्यम्, सर्वत्रोभयाभावस्थल एव केवलस्योभयत्वस्य प्रतियोगितावच्छेदकत्व उभयत्वावच्छिन्नाधिकरणतया सममेव उभयत्वावच्छिन्नप्रतियोगिताकाभावविरोधस्य कल्पनीयत्वेन घटपटोभयानधिकरणे वह्निधूमादिरूपयत्किञ्चिदुभयाधिकरणे देशा-

दावपि घटपटोभयाभावसत्त्वानुपपत्तेः तत्रापि किञ्चिदुभयत्वावच्छिन्नाधिकरणतायाः प्रकृताभावविरोधिन्या वर्तमानत्वात् ।

किञ्च, उभयत्वमात्रस्य तादृशोभयाभावप्रतियोगितावच्छेदकत्व उभयवत्ता-बुद्धेरुभयाभाववत्ताबुद्धेश्च मिथः प्रतिवध्यप्रतिबन्धकभावेऽपि महानेव विप्लवः पदं कुर्य्यात् । न च सामानाधिकरण्येन घटविशिष्टपटत्वादिकमेव तत्र तत्र प्रतियोगिता-वच्छेदकमास्तामिति वाच्यम्, गौरवात् । मिथो विरुद्धघटत्वपटत्वोभयाभावादिस्थ-लेषु तादृशविशिष्टाप्रसिद्धेः । घटपटोभयपर्य्याप्तिविशिष्टमुभयत्वादिकमपि गौरव-ग्रस्तम् । एवञ्च तत्र तत्र घटत्वं पटत्वमुभयत्वं चेति त्रितयधर्मादावेव प्रतियोगिता-वच्छेदकत्वं युक्तम् ।

अवच्छेदकीभूतः सम्बन्धो द्विविधः --वृत्तिनियामको वृत्त्यनियामकश्च । तत्र येन सम्बन्धेन क्वचिदधिकरणे कश्चित् पदार्थ आधेयभावेन तिष्ठति स वृत्तिनिया-मकः सम्बन्धः, यथा --संयोगः समवायो दैशिकविशेषणता कालिकविशेषणता चेति । आश्रयत्वादीनामपि केषाञ्चित् सम्बन्धानां केचिद् वृत्तिनियामकत्वमिच्छिन्ति, निरु-क्तेभ्योऽन्ये सम्बन्धा वृत्त्यनियामकसम्बन्धाः । तैः पदार्थानां मिथ आधाराधेयभावो न भवति तैः केवलं तेषां मिथः सम्बन्धित्वं प्रतिपद्यते । ते च सम्बन्धाः स्वत्वस्वा-मित्वतादात्म्यप्रभृतयः साक्षात् सम्बन्धाः स्वाश्रयाश्रयत्वादिरूपपरम्परासम्बन्धाश्च । निरुक्तवृत्त्यनियामकसम्बन्धाः संसर्गाभावप्रतियोगिताया अवच्छेदकसंसर्गतां न प्रति-पद्यन्त इति केषाञ्चित् सिद्धान्तः । तदुक्तं गदाधरभट्टाचार्य्येण व्युत्पत्तिवादे—'स्वत्वा-दिसम्बन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नप्रति-योगिताकाभावाप्रसिद्धेः' इति । तेनोक्तं पुनस्तत्रैव—'तादृशसम्बन्धस्य वृत्त्यनियामक-तया संसर्गाभावप्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नाभावस्य प्रत्या-यनासम्भवात्' इति । तादात्म्यस्य सम्बन्धस्य वृत्त्यनियामकत्वेऽपि तस्यान्योन्याभाव-प्रतियोगितानवच्छेदकसम्बन्धत्वमिष्टमेवेति वृत्त्यनियामकसम्बन्धस्य विशिष्य संसर्गा-भावप्रतियोगितानवच्छेदकत्वोक्तिः ।

अन्ये तु व्याप्तिसिद्धान्तलक्षणग्रन्थे जगदीशस्य—'साधनवन्निष्ठान्योन्याभाव-प्रतियोगितायाः साध्यतावच्छेदकतादात्म्यसम्बन्धावच्छिन्नत्वे मानाभावस्य स्वयमेव बौद्धाधिकारटिप्पण्यामुक्तत्वात्' इत्यादिग्रन्थप्रामाण्येन तादात्म्यसम्बन्धस्यापि न प्रतियोगितावच्छेदकसम्बन्धत्वमिति वदन्ति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिता-काभावत्वमन्योन्याभावत्वमित्यन्योन्याभावलक्षणमुपेक्षमाणाश्च ते भेदत्वरूपमखण्डो-पाधिमेव तल्लक्षणमभ्युपगच्छन्ति । वयं तु बहुसम्मतत्वादिगुणेन तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वेऽपि तस्य भेदीयप्रतियोगितावच्छेदकसंसर्गत्वमुररीकुर्मः । मुक्तावली-कारो विश्वनाथोऽपि तदेव मतमुपादाय--'तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताका-भावत्वम्' इत्यन्योन्याभावलक्षणमाख्याय तद्भिन्नत्वेनैव संसर्गाभावं लक्षयामास ।

न च वृत्त्यनियामकसम्बन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकत्वे तत्तत्स्थलीयसंसर्गाभावबुद्धिभाववुद्ध्योर्मिथः प्रतिबध्यप्रतिबन्धकभावकल्पना निरवद्या कथमुपपद्यते, सम्बन्धानन्तर्भावेन तत्कल्पनाया विपुलविप्लवास्पदत्वादिति वाच्यम्; वक्ष्यमाणरीत्या तत्समाधानस्य सुकरत्वात्। तथाहि---वृत्त्यनियामकसम्बन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकत्वमित्यस्य तादृशसम्बन्धस्थले संसर्गाभाव एव न स्वीक्रियत इत्यत्र तात्पर्य्यम्। तत्सम्बन्धेन भावप्रतीतिः, तत्सम्बन्धेन सम्बन्धिविषयिणी अभावप्रतीतिश्च तत्सम्बन्धेन सम्बन्धिनो भेदविषयिणीति न काप्यनुपपत्तिरिति।

न च तादात्म्यसम्बन्धस्याप्यभावप्रतियोगितानवच्छेदकत्वसिद्धान्ते तत्र कः समाधिरिति प्रश्नो निरुत्तर इति वाच्यम्, तन्मते धनी चैत्र इत्यादिभावप्रतीतिस्थले स्वामित्वादिसम्बन्धेन धनसम्बन्धित्वादेः स्वरूपेण प्रकारतामभावप्रतीतिस्थले च स्वामित्वादिसम्बन्धेन सम्बन्धित्वस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रकारतामादायैव भावाभावज्ञानादेर्विरोधिताया उपपादयितुं शक्यत्वात्।

गदाधरप्रभृतिनव्यनैयायिकशेखरमणीनां तु वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वपक्ष एव सुसम्मतः। तदुक्तं गदाधरेण व्युत्पत्तिवादे---'वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे को दोषः? अथ जनकतादिसम्बन्धावच्छिन्नप्रतियोगिताकसंयोगाद्यभावस्यातिरिक्तस्य कल्पने गौरवमिति चेत्? न, तादृशाभावस्य संयोगजनकत्वाद्यभावसमनियतत्वेन तत्स्वरूपत्वात्, तस्य चोभयवादिसिद्धत्वात्। अतिरिक्तप्रतियोगिताकल्पने गौरवमिति चेत्, अस्त्वेतद् गौरवम्, उपदर्शितबहुविधलाघवेन ईदृशगौरवस्याकिञ्चित्करत्वादिति। एतेन वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकसम्बन्धत्वं नव्यानां सुसम्मतमेवेति प्रतिभाति।

शिरोमणिना व्याप्तिसिद्धान्तलक्षणं व्याचक्षाणेनावच्छेदकत्वनिरुक्तिप्रकरणे प्रथमतः स्वरूपसम्बन्धरूपावच्छेदकत्वस्यातिप्रसङ्गाद्यनापादके लघुधर्मे सम्भवे सति गुरुधर्मेऽस्वीकारेण तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वादिरूपं पारिभाषिकावच्छेदकत्वमुपवर्ण्य तदन्ते गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वमङ्गीकृतम्। यथोक्तं तेन---"गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान् नास्तीति प्रतीतिबलाद् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः' इति। तद्व्याख्यायाञ्च जगदीशेनोक्तं यथा---'कम्बुग्रीवादिमत्वावच्छिन्नस्य विशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकत्वेनाभावनिश्चयस्य विरोधित्वादिति ध्येयम्' इति। एतेन गुरुधर्मस्य न प्रतियोगितावच्छेदकत्वमिति मतमपास्तम्।

अस्त्यन्यविधमपि पारिभाषिकमवच्छेदकत्वम्, यद् दैशिककालिकभेदेन द्विधा भिद्यते। तत्र प्रथमं दैशिकमधिकरणीभूतस्य वस्तुन एकदेशमात्रगतमवच्छेदकत्वम्।

तच्च स्वरूपसम्बन्धविशेषरूपमतिरिक्तं वा । अग्रे वृक्षः कपिसंयोगी न तु मूल इत्यादिप्रतीतिरेव तत्र मानम् ।

कालिकं द्वितीयमवच्छेदकत्वञ्च यस्मिन् कालेऽधिकरणीभूते देशे वस्तुनः स्थित्यादिकं तत्कालनिष्ठम् । यथा—उत्पत्तिकाले पृथिव्यां गन्धो नास्ति तदुत्तरकाले गन्धोऽस्तीत्यादौ गन्धाभावस्य पृथिव्यामुत्पत्तिकाले सत्त्वात् तस्यावच्छेदक उत्पत्तिकालः, तदुत्तरकाले च तत्र गन्धस्य सत्त्वादुत्तरकालो गन्धस्यावच्छेदक इति । इदं दैशिकं कालिकं चावच्छेदकत्वं तत्तदवच्छेदेन सतः पदार्थस्याव्याप्यवृत्तितायामुपयुज्यते । उत्पत्तिकाले पृथिव्यां न गन्धः, किन्तु तदुत्तरकाले इत्यादिप्रतीतिसिद्धं स्वरूपसम्बन्धरूपम्, अतिरिक्तं वा तत् ।

केचित्तु घटो नास्तीत्यादिप्रतीतिसिद्धं घटनिष्ठप्रतियोगितासमानाधिकरणघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावमिव पटत्वेन घटो नास्तीत्यादिप्रतीतिसिद्धं घटनिष्ठप्रतियोगिताव्यधिकरणपटत्वाद्यवच्छिन्नप्रतियोगिताकाभावमपि स्वीकुर्वन्ति । तत्र पटत्वेन घटो नास्तीति प्रतीतौ घटः प्रतियोगी पटत्वस्य तदवृत्तित्वात् पटत्वं घटनिष्ठप्रतियोगिताया व्यधिकरणो धर्मः प्रकृतघटनिष्ठप्रतियोगितायास्तदवच्छिन्नत्वात् तन्निरूपकः प्रकृताभावः स्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः । एवं द्रव्यत्वेन गुणो नास्ति, गुणत्वेन द्रव्यं नास्तीत्याद्यभावाश्च तादृशा बोध्याः । तादृशतादृशाभावाः सर्वे केवलान्वयिनः स्वावृत्तिधर्मपुरस्कारेण कस्यापि कुत्रापि स्थातुमसामर्थ्येन निर्विरोधेन सर्वत्रैव तादृशतादृशाभावानां सत्त्वात् ।

न च प्रतियोगितावच्छेदकावच्छिन्नाधिकरणताया अभावविरोधित्वेन पटत्वेन घटो नास्तीत्याद्यभावप्रतियोगितावच्छेदकीभूतपटत्वाद्यवच्छिन्नाधिकरणतावति देशे तादृशाभावसत्त्वासम्भवात् कथं तादृशाभावानां केवलान्वयित्वमिति वाच्यम्, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावानां केवलान्वयित्वप्रयोजकनिखिलवस्तुवृत्तित्वनिर्वाहाय प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया समं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य विरोधित्वकल्पनात् । प्रतियोगितावच्छेदके निरुक्तधर्मवैशिष्टयं सामानाधिकरण्यसम्बन्धेन । एवञ्च प्रकृते प्रतियोगिभूतघटाद्यंशे प्रकारीभूतस्य घटत्वादिधर्मस्य प्रकृतप्रतियोगितावच्छेदकपटत्वादौ सामानाधिकरण्यसम्बन्धेन वैशिष्ट्याप्रसिद्ध्या विरोधिन्या अधिकरणताया अप्रसिद्धेरेव दोषनिरासात् । मणिकारप्रभृतयस्तु तादृशं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावं नाङ्गीकुर्वते । तदुक्तं व्यधिकरणतत्त्वचिन्तामणिग्रन्थे मणिकारेण—'प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः' इत्यादि ।

अन्यदप्यवच्छेदकत्वमवच्छेदकावच्छेदेन प्रतीतौ भासते । तथाहि—पर्वतो वह्निमानित्यादिप्रतीतिर्द्वेधा भवति—धर्मितावच्छेदकसामानाधिकरण्येन, धर्मितावच्छेदका-

वच्छेदेन चेति। तत्प्रतीतिद्वयस्य मिथो वैलक्षण्यं सांसर्गिकप्रतियोगित्वप्रकरणे किञ्चित् प्रतिपादितमधस्तात्। तत्रावच्छेदकावच्छेदेन प्रतीतौ धर्मितावच्छेदके किञ्चिदवच्छेदकत्वं भासते। तच्च तत्र प्रकारतावच्छेदक संसर्गांशे प्रतीयमानव्यापकतानिरूपितव्याप्यत्वादनर्थान्तरम्। यदनुभवेन वह्न्यभाववान् जलवान् जलवान् ह्रद इत्यादिज्ञानविशिष्टज्ञानानां वह्न्यभावव्याप्यवान् ह्रद इत्यादिज्ञानवदेव कल्पिता न्यायतन्त्रे वह्निमान् ह्रद इत्यादिबुद्धिप्रतिबन्धकता। तत्प्रकारो यथा—वह्नित्वावच्छिन्नप्रकारकह्रदत्वावच्छिन्नविशेष्यकबुद्धिं प्रति जलव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितजलावच्छिन्नविशेष्यताकनिश्चयविशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयः प्रतिबन्धक इत्येवम्। वह्न्यभाववान् जलवान् जलवान् ह्रदः, वह्न्यभाववान् घटवान् घटवान् ह्रद इत्यादिनानाविधनिश्चयानामेव वह्निमान् ह्रद इति बुद्धिं प्रतिबन्धकत्वस्यानुभवसिद्धतया तेषां सर्वेषामेकरूपेण संग्रहप्रकारो यथा--वह्निप्रकारकह्रदविशेष्यकबुद्धिं प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम्। निश्चये निश्चयवैशिष्टयं स्वीयवह्न्यभावत्वावच्छिन्नप्रकारतावृत्तिविशेष्यतावच्छेदकताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकत्व-स्वसामानाधिकरण्यै-तदुभयसम्बन्धेन। सामानाधिकरण्यञ्च एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपं ग्राह्यम्। प्रकारतावृत्तित्वं स्वनिरूपितत्व-स्वावच्छेदकधर्मव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नत्वैतदुभयसम्बन्धेन। प्रकारतायामवच्छेदकतावैशिष्टयं स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन। एषा निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धता नव्यन्यायतन्त्रस्यैको महान् विशेषः।

धर्मितावच्छेदकसामानाधिकरण्येन धर्मितावच्छेदकावच्छेदेन च बुद्धिस्थलीयप्रतिबध्यप्रतिबन्धकभावे विशेषो यथा--धर्मितावच्छेदकसामानाधिकरण्यमात्रेण भावबुद्धिर्भावव्याप्यवत्ताबुद्धिश्च प्रतिबध्नात्यवच्छेदकावच्छेदेनैवाभाववत्ताबुद्धिम्। धर्मितावच्छेदकसामानाधिकरण्यमात्रेणाभावबुद्धिरभावव्याप्यवत्ताबुद्धिश्च तथैव प्रतिबध्नाति धर्मितावच्छेदकावच्छेदेनैव भावबुद्धिम्। अनुमितौ साध्यसिद्धेः प्रतिबन्धकतायां त्वन्यादृशो विशेषः, यथा--सामानाधिकरण्यमात्रेण सिद्धिः सामानाधिकरण्यमात्रेणानुमितावेव प्रतिबन्धिका। अवच्छेदकावच्छेदेन सिद्धिस्तु सामानाधिकरण्यमात्रेण अवच्छेदकावच्छेदेन चानुमितौ प्रतिबन्धिका निर्विशेषम्।

निरुक्तप्रतियोगित्वानुयोगित्वावच्छेदकत्वादीनां नव्यन्यायपारिभाषिकपदार्थानां केचन विशेषा उक्ताः। सम्प्रति विषयत्वविषयित्वप्रकारित्वविशेष्यत्वविशेष्यित्वविधेयत्वविधेयित्वकोटित्वौत्कटयप्रभृतीनां नव्यन्यायपारिभाषिकपदार्थविशेषाणां केचिद् विशेषा उपन्यस्यन्ते। निरूपितत्वादयः प्रायेण सर्वत्रैवानुस्यूताः।

तत्रादौ विषयत्वनिरुक्तिः। विषयत्वं नाम ज्ञानेच्छाकृतिद्वेषाणामन्यतमेन केनापि निरूपितः स्वरूपसम्बन्धविशेषः पदार्थान्तरं वा। तदिदं यद्विषयकं ज्ञानादि, तत्रैव वर्तते। घटं जानामि घटमिच्छामीत्यादिप्रतीतिरेव तत्साक्षिणी। विषयतात्वं नाम निखिलविषयतागतोऽखण्डोपाधिः। विषयतायां ज्ञानादिनिरूपितत्वमेव, न तु तन्निरूपकत्वमपि। विषयताया अवान्तरभेदाः प्रकारत्वविशेष्यत्वप्रभृतयः। प्रकारताविशेष्यतादीनामस्ति परस्परमेव समो निरूप्यनिरूपकभावः, अतः प्रकारतानिरूपिता विशेष्यता, विशेष्यतानिरूपिता प्रकारतेत्येवमुभयथैव व्यवहारः। सविकल्पकज्ञानीयविषयताद्वयमेव तथा मिथो निरूप्यनिरूपकभावमवलम्बते। तद्विषयता एव प्रकारताविशेष्यतादिरूपाः। निर्विकल्पकज्ञाननिरूपिताप्यस्ति विषयता, सा प्रकारताविशेष्यतादिविलक्षणा। सा तु न कयाचिद् विषयतया निरूपिता, निर्विकल्पकज्ञाननिरूपिता तु भवत्येव, विषयताया ज्ञानेच्छाद्यन्यतमनिरूपितत्वनियमात्। विषयमात्रे विषयताया वृत्तितानियामको विषय इत्येवं व्यवहारनियामकश्च सम्बन्धो दैशिकविशेषणतैव। विषयताप्रभृतयः कदाचिद्धर्मरूपेण कदाचिद्वा सम्बन्धरूपेण प्रतीयते। तेषां संसर्गतानियामकः सम्बन्धो दैशिकविशेषणतैव। धर्मभावेन प्रतीतौ तु न नियमः। सैषा विषयता लौकिकी अलौकिकी चेति द्विविधा। लौकिकसन्निकर्षप्रयोज्या विषयता लौकिकी, सामान्यलक्षणाद्यलौकिकसन्निकर्षप्रयोज्या विषयता चालौकिकी।

नीलघटवद् भूतलमित्यादिज्ञानस्थले भूतलांशे प्रकारीभूते घटादौ यथा प्रकाराख्या विषयता वर्तते, तथैव तस्य घटादेर्नीलगुणविशेष्यतापन्नत्वात् तत्र घटादौ विशेष्यताख्या विषयता वर्तते। तत्र तयोरेकनिष्ठप्रकारताविशेष्यताख्यविषयतयोरभेदं जगदीशप्रमुखा नैयायिका लाघवात् स्वीकुर्वन्ति। तन्मते नीलघटवद् भूतलमिति ज्ञानस्य स्वरूपम्। नीलत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्ना या नीलगुणघटत्वधर्मद्वयावच्छिन्ना प्रकारता तन्निरूपितभूतलत्वावच्छिन्नविशेष्यताशालि ज्ञानमिति। तत्र घटगतप्रकारताविशेष्यतयोरैक्येन कार्य्यकारणभावप्रतिबध्यप्रतिबन्धकभावादिकल्पनावसरे नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिज्ञानत्वरूपेण शक्यते तस्योपादानं कर्तुमिति घटगतविशेष्यतायाः परिहारेण लाघवं भवति। अन्तरा भासमानपदार्थानां यावद् यावदाधिक्यं तावत् तावदेव लाघवस्यापि ज्ञेयमाधिक्यम्। एवमन्यत्रापि समानाधिकरणविषयतयोरभेदः प्रतिपत्तव्यः।

गदाधरभट्टाचार्य्यास्तु तत्त्वचिन्तामणेरनुमितिप्रकरणदीधितिविवृतौ तन्मतं समुल्लिख्य तत्र महान्तमेव दोषमुपन्यस्य तत्रान्यथैव सिद्धान्तमुपकल्पयामासुः। तदुक्तं तैः—'केचित्तु एकविशेष्यतापन्नस्य यत्रापरांशे प्रकारता तत्र तन्निरूपितप्रकारताविशेष्यतयोरभेद एव…तच्चिन्त्यम्, तथा सति रक्तदण्डवत्पुरुषवानयमित्यादि-

ज्ञानानां पुरुषादिप्रकारतानिरुपितदण्डादिविशेष्यताकत्वेन पुरुषाभाववान् दण्ड इत्यादिनिश्चयप्रतिबध्यत्वप्रसङ्गात्' इति। तत्रान्तरा भासमानपदार्थगताविषयताद्वयस्यावच्छेद्यावच्छेदकभावं भट्टाचार्य्या अभ्युपगच्छन्ति। तन्मते प्रकृतस्थले दण्डप्रकारताया दण्डगतविशेष्यतानात्मकत्वे पुरुषगतविशेष्यतायाश्च पुरुषप्रकारतानात्मकत्वेन न निरुक्तप्रसङ्गः।

वह्न्यभाववान् ह्रद इत्यादिप्रमाज्ञानेषु ह्रदादिविषयताया अस्ति कश्चिद् विशेषः। तथाहि—तत्र या ह्रदत्वाद्यवच्छिन्ना विशेष्यता सैव सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वावच्छिन्नापि, तद्धर्मावच्छिन्नविषयित्वस्यैव तद्धर्मावच्छिन्नप्रतियोगिकसंसर्गतया वह्न्यभाववान् ह्रद इति ज्ञानं विषयितया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नवदित्यादिप्रतीतेरेव तत्कल्पकत्वात्। यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वमित्यादिहेत्वाभासलक्षणव्याख्यानादौ यद्रूपविशिष्टविषयत्वस्य तथाविधस्यानुसरणेनैव शिरोमणिप्रभृतिभिस्तत्तल्लक्षणे निर्दोषत्वस्योपपादनात्।

विधिवादरहस्ये मथुरानाथेन कृतिरुपायाः प्रवृत्तेर्विषयतात्रयी समुपदिष्टा। तत्र एका साध्यत्वाख्या विषयता, सा यन्निष्ठकृतिसाध्यताज्ञानचिकीर्षादिना प्रवृत्तिस्तादृशसाध्यघटयागपाकादिनिष्ठा। अपरा उपादानत्वापरनाम्नी सिद्धत्वाख्या विषयता, सा सिद्धभूतकपालहविस्तण्डुलाद्युपायनिष्ठा। अन्या च उद्देश्यत्वाख्या विषयता, सा च यत्साधनताज्ञानाधीना चिकीर्षा तथाभूतजलाहरणस्वर्गौदनादिरुपफलनिष्ठा। एताः साध्यत्वादिविषयताः कृतिविषयताया अवान्तरभेदाः।

प्रकारत्वविशेष्यत्वप्रकारतावच्छेदकत्वविशेष्यतावच्छेदकत्वप्रभृतयो विषयताया अवान्तरभेदाः। तत्र प्रकारत्वं नाम किञ्चिद् धर्म्यंशे विशेषणतया भासमानत्वम्। विशेष्यत्वं किञ्चिद्धर्मस्य धर्मिरुपेण भासमानत्वम्। न तु ते सांसर्गिकप्रतियोगित्वानुयोगित्वरुपे, भ्रमत्वघटकप्रकारत्वविशेष्यत्वयोरसंग्रहापत्तेः। प्रकारतावच्छेदकत्वं प्रकारांशे विशेषणतया भासमानत्वम्। विशेष्यतावच्छेदकत्वं मुख्यप्रकारतानात्मकं विशेष्यांशे विशेषणतया भासमानत्वम्। प्रकारत्वावच्छेदकत्वयोरेकगतत्वेऽपि न क्षतिः। अवच्छेदकतानात्मकप्रकारत्वं मुख्यप्रकारत्वम्। प्रकारतानात्मकविशेष्यत्वञ्च मुख्यविशेष्यत्वम्। प्रकारतात्वविशेष्यतात्वादयः प्रकारताविशेष्यत्वादीनामनुगमका अखण्डोपाधयः। प्रकारता अवच्छेदकता च क्वचित् किञ्चिद्धर्मावच्छिन्ना, क्वचिच्च निरवच्छिन्नेत्युक्तप्रायमेवाधस्तात्। सम्बन्धावच्छिन्नत्वं तु सर्वत्र प्रकारतायामवच्छेदकतायां च नियतम्। विशेष्यतापि क्वचित् किञ्चिद्धर्मावच्छिन्ना क्वचिच्च निरवच्छिन्ना। विशेष्यतायाः सम्बन्धावच्छिन्नत्वेऽस्ति विवादः। तथाहि केचित् कथयन्ति—प्रकारत्वावच्छेदकत्वादयो विषयता एव सम्बन्धावच्छिन्नाः, न तु विशेष्यतापि तथा। अत एव पक्षविशेष्यकपरामर्शव्याप्यविशेष्यकपरामर्शयोरेकरूपेणानु-

मितिकारणत्वादिकल्पनायां संयोगादिसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नव्याप्यत्वावच्छिन्नविषयतानिरूपिताधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वेनानुमितिं प्रति निरुक्तायाः कारणताया उपपत्तिर्भवति । यदि प्रकारतावत् तत्र तत्र विशेष्यतापि सम्बन्धावच्छिन्ना भवति, तदा साध्यव्याप्यवान् पक्ष इति पक्षविशेष्यकपरामर्शस्थले पक्षविशेष्यताया आधेयत्वसम्बन्धातिरिक्तसंयोगादिसम्बन्धावच्छिन्नतया साध्यव्याप्यः पक्षे इति व्याप्यविशेष्यकपरामर्शस्थले च साध्यव्याप्यत्वावच्छिन्नविशेष्यत्वाख्यविषयतायाः संयोगसम्बन्धातिरिक्तप्रकृताधेयत्वसम्बन्धावच्छिन्नतया द्वयोरेव परामर्शयोरुक्तरूपकारणतावच्छेदकधर्माक्रान्तत्वं नोपपद्यते । तन्नास्त्येव विशेष्यतायाः सम्बन्धावच्छिन्नत्वमिति स्वीकार्य्यम् ।

अन्ये तु वदन्ति, यथा --ज्ञानीयप्रतिबध्यप्रतिबन्धकभावकार्य्यकारणभावादीनामनवद्यत्वसिद्धये प्रकारतैव सम्बन्धावच्छिन्ना न तु विशेष्यतापीति । एतदविद्याविजृम्भितम् । तथाहि --सामान्यसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्निसामान्याभाववत्तानिश्चयः प्रतिबध्नाति नियमेन संयोगेन वह्निमानिति बुद्धिमिव महानसीयसंयोगेन वह्निमानित्याकारामपि बुद्धिम् । अतस्तदुपपत्तये निरुक्तसंयोगत्वमात्रावच्छिन्नसंसर्गताकप्रतियोगिताकवह्निसामान्याभाववत्तानिश्चयप्रतिबध्यतावच्छेदककोटिप्रविष्टप्रकारताघटकसंसर्गनिष्ठावच्छेदकतायां संयोगत्वेतरधर्मप्रतिषेधस्य कर्तुमशक्यत्वेन स्वसंयोगिसंयोगेन वह्निमानिति प्रतीतिं प्रत्यपि निरुक्तवह्निसामान्याभाववत्तानिश्चयस्य प्रतिबन्धकप्रसङ्गः । एवमन्यत्रापि । तद्दोषवारणाय मध्यपातिनी संसर्गता स्वीकार्य्या । सा च प्रकारतानिरूपिता सती विशेष्यतानिरूपिता संसर्गता । एवञ्च मिथो निरूप्यनिरूपकभावस्य तुल्यत्वात् प्रकारताविशेष्यतोभयनिरूपितसंसर्गतानिरुपितत्वस्य प्रकारतायां विशेष्यतायाञ्च सममेव सत्त्वात् स्वनिष्ठसांसर्गिकावच्छेदकतारूपसंसर्गतानिरुपितत्वस्यैव च तत्संसर्गावच्छिन्नत्वरुपत्वाद् विशेष्यताया अपि सम्बन्धावच्छिन्नत्वसिद्धेरप्रत्यूहत्वात् ।

मध्यपातिन्या निरुक्तरुपायाः संसर्गताया अभ्युपगमे स्वसंयोगिसंयोगेन वह्निमानित्यादिप्रतीतौ संयोगेन वह्निर्नास्तीत्यादिसामान्याभाववत्तानिश्चयप्रतिबध्यत्वप्रसङ्गवारणप्रकारो यथा—प्रकृते संयोगत्वमात्रावच्छिन्नसंसर्गताकवह्नित्वमात्रावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरुपितविशेष्यतावच्छेद्याभावत्वावच्छिन्नप्रकारतानिरुपितस्वरुपत्वावच्छिन्नसंसर्गतानिरुपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयो वह्नित्वावच्छिन्नप्रकारतानिरुपितसंयोगत्वावच्छिन्नसंसर्गतानिरुपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धिं प्रतिप्रतिबन्धक इत्येवं रीत्या प्रतिबध्यप्रतिबन्धकभावः कल्प्यते । एवं सर्वत्र । तेन स्वसंयोगिसंयोगेन वह्निमान्

इत्यादिज्ञानस्थले संसर्गतायाः प्रकारताविशेष्यतोभयनिरुपितायाः अभावादेव न दोषप्रसङ्गः। तथाहि— स्वसंयोगिसंयोगेन वह्निमान् इत्यादिज्ञानेऽस्ति संसर्गताद्वयी, एका प्रथमसंयोगनिष्ठा, सा केवलप्रकारतानिरुपिता; द्वितीया च स्वसंयोगिसंयोगरुपद्वितीयसंयोगनिष्ठा सा केवलह्रदत्वावच्छिन्नविशेष्यतानिरुपिता। न तयोरेका काचिदपि वह्नित्वावच्छिन्नप्रकारता ह्रदत्वावच्छिन्नविशेष्यता चेत्युभाभ्यामेव निरुपिता। तत एव पूर्वकल्पितप्रतिवध्यप्रतिबन्धकभावानुसारेण न दोषप्रसङ्गः। एवमन्यत्रापि प्रतिपत्तव्यम्। महानसीयसंयोगेन वह्निमान् ह्रद इत्यादौ तु महानसीयसंयोगनिष्ठा या संयोगत्वावच्छिन्ना संसर्गता तस्या वह्निप्रकारताह्रदविशेष्यतोभयनिरुपितत्वेन निरुक्तप्रतिबध्यतावच्छेदकधर्माक्रान्तत्वेन निरुक्तनिश्चयप्रतिबध्यत्वस्यानपायात् कुत्रापि न दोषस्पर्शः।

स्वसंयोगिसंयोगेन वह्निमान् देश इत्यादिबुद्धिं प्रति तादृशसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावप्रकारकदेशादिविशेष्यकनिश्चयस्य प्रतिबन्धकत्वमगत्या प्रकारान्तरेण निर्वाच्यम्।

वस्तुतस्तु स्वसंयोगिसंयोगादिरुपपरम्परायाः संसर्गत्वे मानाभावात् तदनुरोधेन संसर्गताया निरुक्तरीत्या मध्यपातित्वस्वीकारस्यानौचित्यात् संसर्गतायां विशेष्यतानिरुपितत्व स्वीकारे कारणान्तराभावाच्च प्रकारतैव संसर्गावच्छिन्ना न विशेष्यतापीत्येव मतं साधीयः। तदेव मतमुपादाय पक्षविशेष्यकव्याप्यविशेष्यकपरामर्शयोरनुमितिं प्रति पूर्वप्रदर्शितरीत्यानुगतरुपेणैकविधकारणताकल्पनमुपपद्यते।

न च तन्मते विशेष्यतायामेव सम्बन्धावच्छिन्नत्वमङ्गीक्रियतां किं प्रकारतायां सम्बन्धावच्छिन्नत्वस्वीकारेणेति वाच्यम्, तत्तद्धर्मिकावृत्तित्वप्रकारकबुद्धेस्तत्तत्प्रकारकबुद्धेश्च मिथः प्रतिबध्यप्रतिबन्धकभावे लाघवानुरोधेन प्रकारतायां सम्बन्धावच्छिन्नत्वस्यावश्यकत्वात्। तथाहि—संयोगसम्बन्धावच्छिन्नस्य वृत्तित्वस्याभावप्रकारकघटत्वावच्छिन्नविशेष्यकबुद्धिं प्रति संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकबुद्धित्वेन, तथा संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकबुद्धिं प्रति संयोगसम्बन्धावच्छिन्नस्य वृत्तित्वस्याभावप्रकारकघटत्वावच्छिन्नविशेष्यकबुद्धित्वेन प्रतिबन्धकतेति रीत्या कल्पिते ज्ञानद्वयस्य मिथः प्रतिबध्यप्रतिबन्धकभावे पूर्वत्र प्रतिबन्धकतावच्छेदककोटौ घटत्वावच्छिन्नप्रकारतायां संयोगसम्बन्धावच्छिन्नत्वं निविष्टम्, प्रकारतास्थले विशेष्यताया एव सम्बन्धावच्छिन्नत्वस्वीकारे दोषवारणाय निरुक्तप्रतिबध्यप्रतिबन्धकभावकल्पनायां सम्बन्धविशेषानुसरणस्यावश्यमपेक्षणीयत्वेन निरुक्तघटत्वावच्छिन्नप्रकारतायां संयोगसम्बन्धावच्छिन्नविशेष्यतानिरूपितत्वस्यावश्यं निवेशनीयतया गौरवापातात्। एवमुत्तरत्र प्रतिबध्यप्रतिबन्धकभावेऽपि प्रतिबध्यतावच्छेदकोटिप्रविष्टघटत्वावच्छिन्नप्रकारतायां पूर्वोक्तकारणेनैव विशेष्यता-

निरूपितत्वनिवेशकृतं गौरवमनुसन्धेयम्। प्रकारताविशेष्यतयोरुभयोरेव सम्बन्धावच्छिन्नत्वमते तु नैतद्दोषाशङ्केति स्थूलदृशामप्यतिरोहितमेव।

प्रकारत्वविशेष्यत्वादिवद् विधेयत्वमपि विषयताया अवान्तरभेद एव। तदिदं विधेयत्वमनुमित्या आपत्त्या च निरूपितं भवति। यद्व्याप्यवत्ताज्ञानोत्तरमनुमितिरापत्तिर्वा तत्रैव विधेयत्वाख्यविषयता स्वीक्रियते, यथा वह्निव्याप्यधूमवान् पर्वत इति। वह्निव्याप्यवत्ताज्ञानोत्तरं जायमानाया अनुमितेर्वह्नौ विधेयत्वम्। निर्वह्निः स्याद् निर्धूमः स्यादित्यनेन सूचितान्निर्धूमत्वव्याप्यवत्ताया आरोपात्मज्ञानादुत्तरं जायमानाया निर्धूमत्वापत्तेर्विधेयत्वं निर्धूमत्वरूपापाद्ये। विधेयत्वं न प्रकारताविशेषः, पर्वते वह्निरित्यादिसाध्यविशेष्यकानुमितिस्थले विशेष्यमात्रभूते वह्नावपि विधेयताया अभ्युपगमात्। साध्यवदन्यावृत्तित्वादिरूपान्वयव्याप्तिरेवानुमित्युपयोगिनीति मते साध्यप्रसिद्धिमात्रस्यैव साध्यविशेष्यकानुमितिप्रतिबन्धकतया यदि साध्यविशेष्यकानुमितिर्नाभ्युपगम्यते, तदा विधेयत्वस्य प्रकारताविशेषरूपत्वं शक्यमभ्युपगन्तुम्।

उद्देश्यविधेयभावेन शाब्दप्रतीतिस्थलेऽपि विधेयरूपेण भासमाने पदार्थे विधेयता स्वीक्रियते।

कोटिता वह्निमान्न वेत्याद्याकारसंशयनिरूपितविषयताविशेषः। तत्र संशये वह्नौ तदभावे च प्रत्येकं कोटित्वाख्यविषयता। वह्निमान् जलवान् वा पर्वत इत्यादिरूपं भावद्वयकोटिकमपि संशयमामनन्ति। तत्र वह्नौ कोटित्वाख्यैका विषयता जले चापरा। परे त्वेकधर्मिकविरुद्धभावाभावकोटिकज्ञानस्यैव संशयत्वात् तत्रापि वह्नि-तदभाव-जल-तदभावेतिचतुष्कोटिकः संशय इति वदन्ति। एवमन्यत्रापि।

संशये कोटिद्वयप्रकारतानिरूपितैका विशेष्यता, समुच्चये तु विशेष्यता नैका। यथा वह्निमान् घटवांश्च पर्वतः। अत्र पर्वते एका विशेष्यता वह्नित्वावच्छिन्नप्रकारतानिरूपिता, घटत्वावच्छिन्नप्रकारतानिरूपिता चापरा। वह्निघटवत्पर्वतवान् देश इति वह्निघटयोरेकत्र द्वयमिति रीत्या ज्ञानस्थले यद्यपि वह्निघटगतप्रकारताद्वयनिरूपिता पर्वतनिष्ठैका विशेष्यता, तथापि विशेषणांशे संशयस्य मुख्यविशेष्यांशे च एकत्र द्वयमिति रीत्या भानस्यानङ्गीकारादेव संशयस्यैकत्र द्वयमिति रीत्या ज्ञानस्य च मिथो विशेषः प्रतिपत्तव्यः। अपरे तु संशये कोटिद्वयविषयतयोरवच्छेद्यावच्छेदकभावः, एकत्र द्वयमिति ज्ञाने तु नैकविशेष्यतानिरूपितप्रकारताद्वयस्य तथात्वमित्येव तयोरुभयोर्मिथो भेदकमामनन्ति।

मुख्यविशेष्यत्वं प्रकारतानात्मकं प्रकारत्वानवच्छेद्यं वा विशेष्यत्वम्। यथा वह्निमत्पर्वतवान् देश इत्यादौ देशादिनिष्ठं विशेष्यत्वम्। तत्र वह्नित्वावच्छिन्न-

प्रकारतानिरूपितं पर्वतत्वावच्छिन्नं विशेष्यत्वं तु देशत्वावच्छिन्नविशेष्यतानिरूपित-प्रकारतात्मकं मतभेदेन तदवच्छेद्यं वा, नातस्तद् विशेष्यत्वं मुख्यविशेष्यत्वम् ।

एवं मुख्यप्रकारत्वमवच्छेदकतानात्मकमवच्छेदकत्वानवच्छेद्यं वा प्रकारत्वम्। वह्निमत्पर्वतवान् देश इति पूर्वोक्तज्ञान एव पर्वतनिष्ठं प्रकारत्वम् । तत्रैव वह्निनिष्ठं प्रकारत्वं तु पर्वतनिष्ठप्रकारतानिरूपितावच्छेदकतात्मकं तदवच्छेद्यं वा, पर्वतरूप-प्रकारांशे वह्नेर्विशेषणतया भानात् अतस्तन्निष्ठप्रकारत्वं न मुख्यप्रकारत्वम् ।

उत्कटैककोटिकसंशयरूपायां सम्भावनायामेककोटावौत्कटचं नाम विषयता-विशेषः । सोऽयं विषयताविशेषः सामान्यसंशयात् सम्भावनाया विशेषं सम्पादयति ।

विषयित्वं विषयतानिरूपकत्वं स्वरूपसम्बन्धविशेषः पदार्थान्तरं वा । तदिदं ज्ञानादिसविषयकपदार्थगतम् । विषयित्वं धर्मविधया सम्बन्धविधया च प्रतीयते । तत्तद्धर्मावच्छिन्नविषयित्वमेव तत्तद्धर्मावच्छिन्नस्य संसर्गः । एकधर्मावच्छिन्नविष-यित्वमपरधर्मावच्छिन्नस्य संसर्गो न भवति ।

घटत्वादिजातीनां यथा समवायेन सम्बन्धेनानुल्लिख्यमानतादशायां स्वरूपतः प्रतीतिस्तथा विषयितासम्बन्धेनापि स्वरूपेण प्रतीतिर्भवति । यथा--इदं ज्ञानं विषयिता घट इत्यादौ । प्रकारित्वविशेष्यित्वविधेयित्वप्रभृतयोऽपि पारिभाषिक-पदार्थविशेषा ज्ञानादिगताः । यद्विषयतयोः परस्परं निरूप्यनिरूपकभावस्तद्विषयित-योरवच्छेद्यावच्छेदकभावः । यथा– घटवद् भूतलमित्यादौ घटत्वावच्छिन्नप्रकारता-भूतलत्वावच्छिन्नविशेष्यत्वयोर्मिथो निरूप्यनिरूपकभावसत्त्वाद् घटत्वावच्छिन्नप्रकारि-त्वभूतलत्वावच्छिन्नविशेष्यित्वयोर्ज्ञानादिनिष्ठयोः परस्परमवच्छेद्यावच्छेदकभावः ।

पर्य्याप्तिरेकः पारिभाषिकपदार्थविशेषो नव्यन्यायतन्त्रस्येति प्रसङ्गतः सूचित-मधस्तात् । सैषा पर्य्याप्तिस्तावदयमेको न द्वावित्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्ध-विशेषः । द्वित्वादीनां संख्यानां यथा समवायेन घटादौ सत्त्वं तथा पर्य्याप्तिसम्बन्धे-नापि । तत्रायं विशेषः—यथा समवायेन सम्बन्धेन द्वित्वादिकं द्वयघटकप्रत्येक-धर्मिण्यपि वर्तते, तेन घटपटगतद्वित्वादिस्थले समवायेन द्वित्ववान् घटः समवायेन द्वित्ववान् पट इत्यपि प्रतीतिः प्रमैव । पर्य्याप्त्याख्यस्वरूपसम्बन्धेन तु द्वित्वादेर्नैकत्र सत्त्वम्, किन्तु घटपटादिरूपे उभयत्रैव । अत एव तत्र घटपटौ द्वौ न तु घटो द्वावित्येव व्यवहारः । व्याप्तिपञ्चकरहस्ये तदिदमुपन्यस्तं मथुरानाथेन, यथा— 'उभयत्वमुभयत्रैव पर्य्याप्तम्, न त्वेकत्र' इति ।

जगदीशस्तु सिद्धान्तलक्षणदीधितिव्याख्यायामन्यथा प्राह, यथा—'प्रत्येकमु-भयत्र पर्य्याप्तिसम्बन्धेनासतोऽवच्छेदकत्वस्योभयत्र पर्य्याप्तिसम्बन्धेन सत्त्वायोगात्' इति । उक्तमवच्छेदकत्वनिरुक्तिव्याख्यानेऽपि तेनैव, यथा—'प्रत्येकवह्नौ पर्य्याप्ति-

सम्बन्धेनापि न तार्णातार्णोभयत्वादेरभावः, किन्तु घटादावेव । अन्यथा तत्सम्बन्धेन प्रत्येकावृत्तिधर्मस्य तत्सम्बन्धेन समुदायावृत्तित्वनियमादुभयत्रैव प्रत्येकं द्वित्वाभाव-सत्त्वादिमौ न द्वावित्यपि प्रतीत्यापत्तेः' इति ।

अनयोः सिद्धान्तयोस्तात्पर्य्यभेदो यथा—मथुरानाथनिरुक्तपूर्वसिद्धान्ते उभयत्वं यथा एकमात्रवृत्तिधर्मावच्छेदेन एकत्र नास्ति, तथा द्वयवृत्तिधर्मावच्छेदेनापि तदेकत्र नास्ति ।

जगदीशमते तूभयत्वादिकं यथा द्वयादिवृत्तिधर्मावच्छेदेनोभयादौ वर्तते, तथैकैकव्यक्तावपि तदवच्छेन वर्तते । एकैकव्यक्तावेकमात्रवृत्तिधर्मावच्छेदेन तु तत्पर्य्याप्तिसम्बन्धेन नास्ति । एकव्यक्तावपि पर्य्याप्तिसम्बन्धेन द्वित्वादेः सत्त्वेऽप्ययं द्वाविति प्रतीतेर्न प्रमात्वप्रसङ्गः । उद्देश्यतावच्छेदकावच्छिन्नानुयोगिताकपर्य्याप्तेरेव द्वित्वादि-प्रमात्वनियामकत्वोपगमात् । न केवलं व्यासज्यवृत्तिद्वित्वादिधर्माणामेव पर्य्याप्तिः, परन्त्वेकत्ववह्नित्वादीनामपि । तदुक्तं जगदीशेनावच्छेदकत्वनिरुक्तिव्याख्याने—'न चेदन्त्वावच्छेद्यपर्य्याप्त्यप्रसिद्धिः, एकत्ववह्नित्वादौ तत्सौलभ्यात् । एकत्वं वह्नित्वं चेदन्त्वावच्छिन्ने पर्य्याप्तम् न तु द्वित्वादिकमित्यनुभवस्य सर्वसिद्धत्वात्' इत्यादि । जगदीशेन पर्य्याप्तिमिमामधिकृत्य तत्रावच्छेदकत्वनिरुक्तिव्याख्याने बहुलमेव प्रकटितं तत्सर्वं तत एव प्रतिपत्तव्यम् ।

अथ द्वित्वादीनां व्यासज्यवृत्तिधर्माणां पर्य्याप्त्यनुयोगितावच्छेदकधर्मः कः ? उभयत्वादीनां तदभिन्नतया तेषां तत्पर्य्याप्त्यनुयोगितावच्छेदकत्वं न शक्यं वक्तुम् । अत्र केचिदाहुः —द्वित्वादयो व्यासज्यवृत्तिधर्माः संख्यारूपा उभयत्वादिधर्माश्चापेक्षा-बुद्धिविशेषविषयत्वरूपाः; अतस्तेषां मिथो भेदादेकेषामपरपर्य्याप्त्यनुयोगितावच्छेद-कत्वं नानुपन्नं प्रतिभाति । साम्प्रदायिकास्तु अपेक्षाबुद्धिविशेषविषयत्वस्य स्वरूप-सम्बन्धरूपस्य विषयभेदेन भिन्नतया तत्तदेकैकविषयवृत्तित्वेन दोषमनुसन्दधाना अव्यासज्यवृत्तिसमनियतधर्मस्यैव व्यासज्यवृत्तिधर्मपर्य्याप्त्यनुयोगितावच्छेदकत्व-मभ्युपगच्छन्ति । स हि धर्मोऽन्यतरत्वान्यतमत्वादिरेव । तेन घटपटगतद्वित्वस्य पर्य्याप्त्यनुयोगितावच्छेदकं घटपटान्यतरत्वं घटपटमठगतत्रित्वस्य पर्य्याप्त्यनुयोगिता-वच्छेदकं घटपटमठान्यतमत्वम् । अन्यतरत्वं भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, अन्यतमत्वञ्च भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । न चैवमन्यतरादावन्यतर-त्वादिरूपेण द्वावित्यादिप्रतीत्यापत्तिः, तस्या इष्टत्वात् । अत एव पर्वतो वह्निमानि-त्यादिप्रतिज्ञाघटितन्यायस्थले पकाराद्यन्यतमः प्रतिज्ञेत्यादि व्यवहारः साम्प्रदा-यिकैरनुमन्यते ।

अवच्छेदकत्वादीनामपि धर्माणामस्ति पर्य्याप्तिः सम्बन्ध इत्युक्तमेवाधस्तात् । यत्र यावन्तोऽवच्छेदकास्तत्र तावत् सकलवृत्तिधर्मावच्छिन्नानुयोगिताकपर्य्याप्ति-

सम्बन्धेनावच्छेदकतास्तत्त्वेन रूपेणावतिष्ठन्ते। यथा—घटपटोभयं नास्तीत्यभावस्थले प्रकृताभावस्य प्रतियोगितावच्छेदकधर्मा घटत्वं पटत्वमुभयत्वं चेति त्रितयधर्माः, तत्र त्रितयधर्मेष्वेव प्रकृतप्रतियोगितावच्छेदकतात्वेन रूपेण प्रतियोगितावच्छेदकता वर्तन्ते त्रित्वावच्छिन्नानुयोगिताकपर्य्याप्तिसम्बन्धेन। तदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपं तदवच्छेदकत्रयगता त्रित्वसंख्या। वह्निर्नास्ति घटो नास्तीत्यादिरूपवह्नित्वघटत्वाद्येकैकधर्ममात्रावच्छिन्नप्रतियोगिताकाभावस्थले त्वेकैकस्य वह्नित्वघटत्वादेरेव धर्मस्य प्रतियोगितावच्छेदकतया प्रतियोगितावच्छेदकतायाः पर्य्याप्त्यनुयोगितावच्छेदकं रूपं तत्र वह्नित्वादिगतमेकत्वम्। एवमेव सर्वत्र प्रतिपत्तव्यम्। अवच्छेदकत्वादीनां यत्र यत्र पर्य्याप्तिर्निवेश्यते तत्र तत्रावच्छेकतात्वावच्छिन्नप्रतियोगिताकत्वस्य घटकत्वेऽवच्छेदकतानिष्ठप्रतियोगिताकत्वमात्रस्य घटकत्वे च कश्चिद् विशेषो वर्तते। यथा—महानसीयवह्निर्नास्तीत्यादौ यत्र धर्मद्वयादिकं प्रतियोगितावच्छेदकं तत्र प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपं महानसीयत्ववह्नित्वगतं द्वित्वमेव। किन्तु प्रतियोगितावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं वह्नित्वादिगतमेकत्वमपि भवति। अत एव साध्याभाववदवृत्तित्वमिति व्यप्तिलक्षणादौ वह्निमान् धूमादित्यादौ महानसीयवह्निर्नास्तीत्यादिरूपमहानसीयत्ववह्नित्वधर्मद्वयावच्छिन्नप्रतियोगिताकसाध्याभावमादाय विषयितया महानसीयवह्निमान् तज्ज्ञानत्वात् प्रतियोगित्वसम्बन्धेन महानसीयवह्निमान् तदभावत्वादित्यादौ विषयितया वह्निर्नास्ति प्रतियोगितया वह्निर्नास्तीत्याद्यभावमादायाव्याप्तिवारणाय न्यूनेतरोभयवारकपर्य्याप्तिनिवेशस्यावश्यकतया साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगिता तन्निरूपकाभाव एव प्रकृते साध्याभावो निरुच्यते। निरुक्तरुपवृत्तित्वं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। स्वपदं प्रतियोगितापरम्। एवञ्च वह्निमान् धूमादित्यत्र वह्नित्वमात्रावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकताया वह्नित्वरूपैकधर्ममात्रगतत्वेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकं रूपं वह्नित्वगतमेकत्वम्। महानसीयवह्निर्नास्तीत्यभावादाने सम्बन्धघटकस्वपदोपात्तप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपं च महानसीयवह्नित्वगतं द्वित्वम्। तेन स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन प्रकृतधर्मद्वयावच्छिन्नप्रतियोगितायाः प्रकृतसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकीभूते वह्नित्वगतैकत्वेऽवर्तमानत्वादेव तादृशप्रतियोगितानि-

रूपकाभावस्य प्रकृतसाध्याभावत्वविरहेण न तत्राव्याप्तिः। तत्रैव यदि रूपवृत्तित्वघटकसम्बन्धगर्भे स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्तीत्यनुक्त्वा स्वावच्छेदकताप्रतियोगिकपर्य्याप्तीत्येतावन्मात्रं निवेश्यते, तदा महानसीयवह्निर्नास्तीत्यभावीयवह्नित्वगतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य वह्नित्वगतैकत्वेऽपि सत्त्वेन तादृशसम्बन्धेन प्रकृतप्रतियोगिताया निरुक्तरूपवृत्तित्वस्याक्षतत्वेनाव्याप्तेर्वारयितुमशक्यत्वाल्लक्षणदोषः स्यात्। तदेवं रूपवृत्तित्वघटकसम्बन्धदिशि पर्य्याप्तौ स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकत्वनिवेशनमितरवारकमिति ध्येयम्।

साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपगर्भे प्रतियोगितांशे साध्यतावच्छेदकतात्वावच्छिन्नत्वनिवेशनं न्यूनधर्मावच्छिन्नप्रतियोगिताया वारकम्। तथाहि— विषयितया महानसीयवह्निमान् तज्ज्ञानत्वात् प्रतियोगित्वसम्बन्धेन महानसीयवह्निमान् तदभावत्वादित्यादौ तद्धर्मपर्य्याप्तावच्छेदकविषयित्वस्यैव तद्धर्मावच्छिन्नस्य संसर्गतया तद्धर्मपर्य्याप्तावच्छेदकताकप्रतियोगित्वस्यैव च तद्धर्मावच्छिन्नस्य संसर्गतया महानसीयवह्नित्वावच्छिन्नविषयित्वस्यैव प्रकृते साध्यतावच्छेदकसंसर्गत्वात्, महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वस्यैव च साध्यतावच्छेदकसंसर्गत्वात् तेन तेन सम्बन्धेन वह्नित्वमात्रावच्छिन्नप्रतियोगिताकाभावो यद्यपि तज्ज्ञानतदभावादौ वर्तते तथापि वह्निर्नास्तीत्यभावीयप्रतियोगितायाः स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्नित्वगतैकत्वनिष्ठायाः प्रकृतसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे महानसीयत्ववह्नित्वगतद्वित्वेऽवर्तमानत्वेन न तन्निरूपकाभावमादाय प्रकृते दोषप्रसङ्गः। यदि तत्र तादृशरूपगर्भे साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्तिमनिवेश्य साध्यतावच्छेदकताप्रतियोगिकपर्य्याप्तिमात्रं निवेश्यते' तदा वह्नित्वगतसाध्यतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य वह्नित्वगतैकत्वे सत्त्वेन, तत्रैव च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्नित्वमात्रावच्छिन्नप्रतियोगितायाः सत्त्वेन निरुक्तव्याप्तिलक्षणाव्याप्तेरुक्तरूपाभावमादाय निरुक्तस्थले सम्भवन्त्या अपरिहार्य्यता स्यात्। एवं संसर्गतावच्छेदकताया अपि प्रकृते पर्य्याप्तिर्निवेश्या, यतो दोषवारणाय प्रकृतसाध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगिताच्छेदकरूपवृत्तिर्या प्रतियोगिता तन्निरूपकोऽभाव इत्येतत्स्वरूपत्वमपि प्रकृतसाध्याभावस्यापेक्षितम्। निरुक्तरूपवृत्तित्वं स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्यात्यनुयोगितावच्छेदकत्वसम्बन्धेन। स्वपदं प्रतियोगितापरम्। प्रागुक्तनिष्कर्षः साध्याभाव इत्यत्र प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वनिवेशस्व,

प्रकृतनिष्कर्षश्च तत्र प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनस्य । प्रकृतरूपेण संसर्गतावच्छेदकतायाः पर्य्याप्त्यनिवेशने संयोगेन वह्निमान् धूमादित्यादौ महानसीयसंयोगेन वह्निर्नास्तीत्याद्यभावमादाय महानसीयसंयोगेन वह्निमान् धूमादित्यादौ संयोगेन वह्निर्नास्तीत्याद्यभावमादाय प्रकृतव्याप्तिलक्षणस्याप्रसङ्गातिप्रसङ्गौ स्याताम् । तादृशपर्य्याप्तेरनिवेशे दोषप्रसङ्गस्य निवेशे च तद्वारणस्योपपत्तिः स्वयमेवोहनीया विशेषेणेति । एवं रीत्या सर्वत्रैव पर्य्याप्तिनिवेशस्थले समन्वयो बोध्यः । नहि सर्वत्रैव पर्य्याप्तिनिवेशस्थले न्यूनेतरोभयवारकपर्य्याप्तिर्नियमेन निवेशनीयां । किन्तु यथा प्रयोजनं क्वचिन्न्यूनवारिका क्वचिदितरवारिका क्वचिदुभयवारिका वा पर्य्याप्तिरनुसर्तव्येत्यवधेयम् । एष एव समासेन नव्यन्यायपारिभाषिकपदार्थविवेकः । अन्येऽपि सन्तो नव्यन्यायपारिभाषिकपदार्था विशेषजिज्ञासुभिः स्वयमनुसन्धेयाः ॥



# न्यायवैशेषिकदर्शनयोः पृथग्दर्शनत्वम्

म० म० श्रीकालीपदतर्काचार्यः, कलिकातानगरम् ।

न्यायवैशेषिकदर्शनयोः पृथग्दर्शनत्वमधिकृत्य किञ्चिदुपन्यस्यते—असारे विचित्रप्रकारे संसारे जीवा अजीवाश्चेति सामान्यतो द्विविधाः पदार्थाः समुपलभ्यन्ते। तत्र जीवाश्चेतनावन्तस्तदितरे त्वजीवा इति। चेतनावन्तोऽपि द्विविधा अन्तश्चेतनावन्तो बहिश्चेतनावन्तश्च। तत्रान्तश्चेतनावन्तो वृक्षलतातृणगुल्मप्रभृतयः, बहिश्चेतनावन्तश्च मानुषपशुपक्षिकीटप्रभृतयः। वृक्षादिशरीराण्यपि जीवानां प्राक्तनस्वकृतकर्मफलभोगाय समुपजायन्ते। तदुक्तं मनुना—

गुच्छगुल्मं तु विविधं तथैव तृणजातयः।
बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च॥

तमसा बहुरूपेण वेष्टिताः कर्महेतुना।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः॥ इति।

कपिलेनापि सूत्रितं सांख्यसूत्रे—'वृक्षतृणलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत्' इति। तत्रैव व्याख्यानप्रसङ्गेनोक्तमनिरुद्धेन वृत्तिकारेण—

अभिवादितविप्रो य आशिषं न प्रयच्छति।
श्मशाने जायते वृक्षो गृध्रकङ्कनिषेवितः॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥ इति।

तत्तद्योनिषु जनिमन्तो जीवाः क्लेशातिशयेन सम्पीड्यन्त इति निरुक्तरूपप्रभूतशास्त्रप्रमाणैरेव प्रतिपन्नं भवति। मनुष्यपशुपक्षिप्रभृतीनान्तु स्वात्मगतदुःखभोगः प्रत्यक्षेण परकीयात्मगतदुखभोगश्च गृहीतो भवति मानान्तरेण। तदेतत् सुतरामवितथमेव यत् सर्वं एव जीवाः क्लेशेन स्वल्पेनाधिकेन वा परिदूयन्त इति। नास्ति संसारपरिसरे तथाभूतश्चेतनः कोऽपि यत्र प्रतिकूलवेदनीयं किमपि दुःखं न पदमाधत्ते। तथाहि ये जनाः सुतरां दीनास्ते स्वच्छन्दतः स्वजनपोषणादिसामर्थ्यपरिहीणाः परिखिद्यन्ते। मध्यमवित्ता गृहमेधिनः कथञ्चन स्वजनपोषणादिसामर्थ्यशालिनोऽपि प्रभूतवित्तादिसाध्यविविधकाम्यविधिविधानासमर्थाः स्वार्थवियोगजेन सन्तापेनातिमात्रं परितप्यन्ते। स्वतः समृद्धतराणां महत्तरामृद्धिं बुध्यमानाश्च ततः स्वापकर्षपरामर्शेन विषादमासादयन्ति। उत्तरोत्तरमभिलषितशतैरुपद्रुताः सत्स्वपि

सुखविशेषेषु नात्यर्थं परितृप्यन्ति। एवमेवमन्यथान्यथाप्यन्ये नित्यमेव दुःखशतान्यभिविन्दन्ति। लौकिकैरुपायविशेषैः काले कथञ्चिद् विनिवृत्तेऽपि दुःखाभिघाते पुनः किञ्चिदुत्तरमेव जीवाः समभिभूयन्ते कारणविशेषादुद्भूतेन दुःखसङ्घातेन। तदेवमवधानेन विचारे क्रियमाणे सर्वं एवायं संसारो दुःखाधार एव प्रतिभायात्। तत एव च विशेषदर्शिनः सर्वमिमं संसारं हेयमवधारयन्ति। का वा कथा तावदैहिकप्रपञ्चस्य, पारलौकिकस्य स्वर्गस्यापि सकलसकामकाम्यावधेः समधिगम्य विशेषदर्शिनो दुःखानुविद्धत्वं हेयत्वमेव तस्य प्रतिपद्यन्ते। केवलममी तदेव वस्तु नितरामुपादेयमवधारयन्ति यस्मिन्नधिगते न भवत्यवभासो दुःखलेशस्यापि। स एष तुरीयः पुरुषार्थो मोक्षो नाम। यं परमपुरुषार्थं तान्त्रिकाः समुपदिशन्ति। सोऽयं केषाञ्चिद् भाग्यसमृद्ध्या सिद्धो विरुणद्धि स्तोकमपि दुःखसम्बन्धमित्यत्र सुतरामेवैकमत्यं सर्वतन्त्राणाम्। तस्य तथाभूतस्य परमपुरुषार्थस्य तदुपायस्य चोपदेशाय प्राचीनैर्महर्षिभिः सन्निबद्धानि श्रुतिप्रमाणकान्येव विभिन्नप्रस्थानानि दर्शनशास्त्राणि। तानि च सामान्यतया न्यायवैशेषिकसांख्यपातञ्जलमीमांसावेदान्तदर्शनसंज्ञाभिरभिधीयन्ते।

दृश्यतेऽनेनेति व्युत्पत्त्या करणसाधनो दर्शनमित्ययं सान्वयः शब्दः। विभिन्ना दर्शनशास्त्रकारा विभिन्नप्रस्थानानि विभिन्नानि दर्शनानि निर्माय विभिन्नरूपतत्त्वोपदेशेन जीवानां तत्त्वज्ञानमुत्पाद्य दुःखपङ्कनिमग्नानां तेषामात्यन्तिकदुःखनिवृत्तिं साधयन्ति। प्रतिदर्शनं विभिन्नानि तत्त्वानि। तान्येव दर्शनशास्त्राणां मिथो भेदं निर्वर्तयन्ति। तावता नैतन्मन्तव्यं यत् तत्तद्दर्शनप्रतिपाद्यानां निखिलवस्तूनामेव दर्शनान्तरप्रतिपाद्यवस्त्वपेक्षया वैलक्षण्यं दर्शनान्तराद् दर्शनस्य पृथक्त्वे समपेक्षितमिति। तथा सति कस्यापि दर्शनस्य कुतोऽपि दर्शनाद् भेदासिद्धेरेकमात्रमेव जगति दर्शनमापद्येत, प्रमाणात् प्रमेयसिद्धिः, प्रत्यक्षसाधनमिन्द्रियं दुःखं हेयं सुखमुपादेयमित्यादिष्वर्थेषु कस्यापि दर्शनस्य विसंवादाभावात्। एवञ्च स्वप्रतिपाद्यानां तत्त्वानामांशिकं वैषम्यमेव दर्शनान्तरात् पृथक्त्वे निदानभूतं दर्शनानामिति स्थितम्। तेनैव सत्यपि सर्वदर्शनसम्मतं प्रत्यक्षप्रामाण्यमुपादाय चार्वाकादिदर्शनेन सर्वेषामेव दर्शनानामैकमत्ये तत्तदपरदर्शनानुमतबहुलतत्त्वपक्षकक्षीकरणेन चार्वाकादिदर्शनानां प्रशस्ततत्तदास्तिकदर्शनवैलक्षण्यादप्रशस्तनास्तिकदर्शनत्वम्। कापिलसांख्यस्य निरीश्वरस्य परमेश्वरादितत्त्ववर्जं बहुलेष्वेव तत्त्वेषु सत्यपि मतसाम्ये ईश्वरतत्त्वाद्यधिकारेण वैषम्यात् पातञ्जलसांख्यदर्शनस्य सेश्वरस्य भिन्नदर्शनत्वम्। एवमेवबहुष्वेव प्रतिपाद्यार्थेषु द्वयोरेव न्यायवैशेषिकदर्शनयोः सत्यप्यविशेषे केषाञ्चन प्रतिपाद्यवस्तूनामभ्युपगमानभ्युपगमादिनिबन्धनं वैषम्यमेव साधयत्यनयोर्मिथः पृथग्दर्शनत्वम्।

प्रथमतस्तावद् दर्शनयोरनयोरारम्भ एव दृश्यते सुमहद् वैषम्यम्। तथाहि गौतमीयं न्यायशास्त्रं प्रारम्भे समुपदिशति—'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-

सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति ।

वैशेषिकदर्शनकारस्य कणादस्य वैशेषिकतन्त्रं समुपदिशति—'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' इति । निःश्रेयसं नाम द्वयोरेव न्यायवैशेषिकतन्त्रयोर्मुख्यतमोऽर्थः । तदुपायरूपेणोपदिष्टं वस्तु यद्युभयत्र विभिन्नरूपं स्यात् तदा तदेकमेव मूलं निमित्तीकृत्य पृथग्दर्शनत्वमनयोः शक्यसाधनं स्यात् ।

न चैतद् वक्तव्यं यत् प्रमाणप्रमेयेत्यादिन्यायसूत्रे समुपात्तेन प्रमेयपदेन यावतामेव प्रमेयवस्तूनां लाभात् कणादसमुद्दिष्टानां द्रव्यगुणकर्मसामान्यविशेषसमवायानामपि पदार्थानां तदन्तर्गतत्वेनैवोपादानान्न मिथो विरोध इति । यतो न्यायसूत्रकारेण गौतमेन सूत्रे यः प्रमेयशब्दः प्रयुक्तः तस्य 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति प्रथमाध्यायप्रथमाह्निकनवमसूत्रेण निरुक्तेषु द्वादशपदार्थेष्वेव परिभाषितत्वस्य सूचनात् । भाष्यकारेण वात्स्यायनेनापि तत्सूत्रभाष्ये 'अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्, तद्भेदेन चापरिसंख्येयम्, अस्य तु तत्त्वज्ञानादपवर्गः, मिथ्याज्ञानात् संसार इत्येतदुपदिष्टं विशेषेण' इत्येवमुक्तम् । अत्रैव वार्त्तिककारः प्राह—'अन्यदपि प्रमेयमस्ति यस्य तु तत्त्वज्ञानान्निःश्रेयसं तदिदं प्रमेयमिति तु शब्देन ज्ञापयति' इति । वार्त्तिकतात्पर्य्यकारो वाचस्पतिरपि तथैवाह, यथा—'येषां तत्त्वज्ञानातत्त्वज्ञानाभ्यामपवर्गसंसारो भवतस्त एत एव, न न्यूना नाधिका इत्यर्थः' इति । एतेषां सर्वेषामेव मते आत्मादिद्वादशपदार्थानतिरिक्तेषु न्यायसूत्रोक्तप्रमेयपदार्थत्वस्य सत्यामप्यनुमतौ निरुक्तानामात्मादिद्वादशपदार्थानामेव तत्त्वज्ञानस्य विशेषतो मोक्षसाधनत्वस्याभ्युपगमात् । कणादस्य तु मते द्रव्यादिषट्पदार्थतत्त्वज्ञानस्य मोक्षसाधनत्वोक्तया तदितरप्रमेयतत्त्वज्ञानस्यापि मोक्षसाधनताप्रत्ययेन न्यायवैशेषिकदर्शनयोः सिद्धान्तभेदस्यापरिहार्य्यता । तदनेन सिद्धान्तभेदेन न्यायवैशेषिकदर्शनयोर्मिथः पृथक्त्वं सोपपत्तिकं भवति ।

ये तु वैशेषिकदर्शनसिद्धान्ते द्रव्यादयः षडेव पदार्था अभावमादाय सप्तैव वा पदार्था अभ्युपगताः, न्यायदर्शने तु सूत्रकारोक्ताः प्रमाणप्रमेयादयः षोडशपदार्था इति । ततः स्वस्वाभ्युपगतपदार्थगणनायां संख्यावैषम्यमपि तयोः पृथक्त्वं प्रयोजयतीति वदन्ति, न तेषां रमणीयः पक्षः । न्यायसूत्रभाष्ये वात्स्यायनेन—'अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्' इत्यनेन सन्दर्भेण द्रव्यादीनां षट्पदार्थानामपि स्वदर्शनानुमतत्वस्य प्रतिपादनात् । न्यायसिद्धान्तमुक्तावलीकारेणापि—'एते च पदार्था वैशेषिके प्रसिद्धाः, नैयायिकानामप्यविरुद्धाः । प्रतिपादितञ्चैवमेव

भाष्ये' इत्युपन्यस्य सप्तपदार्थवादेन सह न्यायसिद्धान्तस्य विरोधपरिहारस्य कृतत्वादिति।

न्यायवैशेषिकदर्शनयोरन्यदपि मिथो भेदप्रयोजकं वैषम्यं यथा,–समवायो नाम घटादिप्रतियोगिकः कपालाद्यनुयोगिकः कश्चन सम्बन्धः सममेव नैयायिकैर्वैशेषिकैश्च समभ्युपेयते। यस्य स्वरूपम् 'अयुतसिद्धानामाधार्य्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः' इति वैशेषिकाः समामनन्ति। यु मिश्रणेऽमिश्रणे च इत्येवमुपदिष्टस्यामिश्रणार्थकस्य युधातोः क्तप्रत्ययेन युतपदसिद्धया युतसिद्धाः पृथक्सिद्धाः पृथगवस्थिता इति यावत्। न युतसिद्धा अयुतसिद्धाः परस्परपरिहारेण पृथगाश्रयाश्रयित्वमनापन्ना इत्यर्थः। तेषां मिथः सम्बन्धः समवाय इति। अयुतसिद्धानां सम्बन्धः समवाय इत्येतन्मात्रोक्तौ धर्मस्य सुखस्य च यः कार्य्यकारणभावः सम्बन्धः सोऽपि समवायः स्यात्। तयोरात्मैकाश्रितयोर्युतसिद्ध्यभावात् तदर्थमाधार्य्याधारभूतानामिति। आकाशस्याकाशपदस्य च वाच्यवाचकभावलक्षणः सम्बन्धः समवायः स्यादतस्तन्निवृत्त्यर्थमिहप्रत्ययहेतुरिति। सोऽयं संयोगादिनिखिलसम्बन्धविलक्षणः सम्बन्धविशेषोऽवयवावयविनोर्जातिव्यक्त्योर्गुणगणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च सम्बन्धः। तस्य सम्बन्धत्वे 'गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वाद्, दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनेन सिद्धान्तमुक्तावलीकारा मानमुपस्थापितवन्तः। सोऽयं समवायो लाघवादेक एव। नासौ प्रतियोग्यनुयोगिभेदेन भिन्नः। न च समवायस्यैकत्वे वाय्वादौ स्पर्शादीनां समवायेन सत्त्वानुरोधात् समवायसम्बन्धसत्त्वस्यावश्यमभ्युपगन्तव्यतया तस्यैव च रूपादिसम्बन्धत्वेन वाय्यादौ रूपादिमत्ताप्रतीतेः प्रमात्वप्रसङ्ग इति वाच्यम्; न्यायसिद्धान्तमुक्तावलीकारेण—'न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्' इत्यनेन तदाशङ्कायाः समाधानात्। अत्रायमभिप्रायः—उक्तमुक्तावलीसन्दर्भे रूपवत्ताबुद्धिप्रसङ्गः इत्यस्य, रूपवत्ताबुद्धिप्रमात्वप्रसङ्ग इत्येवार्थः कार्य्यः। अन्यथा वायौ समवायेन रूपवत्ताया भ्रमात्मकप्रतीतेः सर्ववादिसिद्धत्वादिष्टापत्तेः सम्भवात्। रूपसमवायसत्त्वेऽपि रूपाभावादित्यत्रेदमवधेयम्—नहि केवलसमवायत्वेन रूपसमवायत्वादिना वा समवायस्य रूपसम्बन्धत्वम्। किन्तु रूपनिरूपितत्वविशिष्टसमवायत्वावच्छिन्नाधिकरणताया एव रूपसम्बन्धत्वम्। सैषाधिकरणता वाय्वादौ नाभ्युपगम्यते। तत एव तत्र रूपाभावः।

नव्यास्तु तावताऽप्यपरितुष्यन्तः पृथिव्यां गन्धस्य समवायो न जले इत्यादिप्रतीतिं प्रमाणीकृत्य समवायमनेकमेवाहुः। वस्तुतस्तु समवायस्यैकत्वमेव न्यायवैशेषिकसम्प्रदाये सुप्रतिष्ठम्। तदालम्बनं च न्यायवैशेषिकतन्त्रयोः प्रकृतपृथक्त्वव्यवस्थापनमिति तस्यैकत्वसाधने प्रयासो नैव निष्फलो मन्तव्यः।

तस्य तथाभूतस्य समवायस्य प्रत्यक्षविषयत्वमिति नैयायिकाः। तदुक्तं कारिकावल्यां विश्वनाथेन—'प्रत्यक्षं समवायस्य विशेषणतया भवेत्' इति। रूपवान् घट इत्यादौ यथा चक्षुरादेः स्वसंयुक्तसमवायादिरूपपरम्परासम्बन्धेन विषयतया रूपप्रत्यक्षादिरूपकार्य्याधिकरणे वर्तमानत्वात् प्रकृतरूपादिप्रत्यक्षजनकत्वम्, तथैव रूपादिसमवाये स्वसंयुक्तविशेषणतासम्बन्धरूपपरम्परासम्बन्धेन विषयतया प्रत्यक्षरूपकार्य्याधिकरणे समवाये चक्षुरादेर्वर्तमानत्वात् तत्प्रत्यक्षजनकत्वम्। कार्य्यतावच्छेदकसम्बन्धेन कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणे कारणतावच्छेदकसम्बन्धेन नियमेन वर्तमानस्यैव कारणतावत्त्वात्। प्रकृते कार्य्यतावच्छेदकसम्बन्धो विषयता कारणतावच्छेदकसम्बन्धश्च स्वसंयुक्तविशेषणता।

वैशेषिकास्तु तस्य समवायस्य प्रत्यक्षविषयत्वं नानुमन्यन्ते। तदुक्तं मुक्तावलीकारेण—'वैशेषिकमते तु समवायो न प्रत्यक्षः' इति।

ननु सत्यपि समवाये स्वसंयुक्तविशेषणतारूपेन्द्रियसन्निकर्षेऽभाववत् कथं समवायस्य न प्रत्यक्षत्वमिति चेत्, कारणान्तराभावादिति गृहाण। तथाहि—सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षं कारणम्। भूतलादौ घटादिसंयोगस्थले सम्बन्धस्य द्विष्ठतया घटो भूतलञ्च यावदाश्रयौ। तयोः प्रत्यक्षसत्त्वाद् घटप्रतियोगिकघटानुयोगिकसंयोगरूपसम्बन्धस्य प्रत्यक्षत्वम्। घटत्वादेर्घटादौ समवायसम्बन्धस्थले तु समवायस्यैकमात्रतया तस्याश्रयो यथा दृश्यमानो घटादिस्तथाऽदृश्यमानो भाविभूतभटादिर्गगनाद्ययोग्यपदार्थोऽपीति तस्य तस्य प्रत्यक्षरूपकारणाभावेनैव न समवायस्य सम्बन्धस्य प्रत्यक्षम्।

यावदाश्रयप्रत्यक्षस्य सम्बन्धप्रत्यक्षे कारणत्वमनुक्त्वा यत्किञ्चिदाश्रयप्रत्यक्षस्य कारणत्वोक्तौ तु घटभूतलादिसंयोगवद् घटाकाशसंयोगादेरपि प्रत्यक्षप्रसङ्गः। संयोगस्य प्रतियोग्यनुयोग्युभयनिष्ठत्वेन घटादेः प्रतियोगिनस्तदाश्रयत्वात्। तस्य च प्रत्यक्षसत्त्वात्। यावदाश्रयप्रत्यक्षस्य कारणत्वसिद्धान्ते तु गगनादेरपि तत्र संयोगरूपसम्बन्धाश्रयत्वात् तस्य चाप्रत्यक्षत्वात् तत्प्रत्यक्षरूपकारणविरहेणैव घटगगनसंयोगप्रत्यक्षप्रसङ्गासम्भवात्। इत्येतन्मतं वैशेषिकाणाम्।

न्यायमते तु सामान्यरूपेण सम्बन्धप्रत्यक्षत्वं न यावदाश्रयप्रत्यक्षकार्य्यतावच्छेदकम्, सम्बन्धत्वस्यानुगतस्य निरूपयितुमशक्यत्वात्। सांसर्गिकविषयतावत्त्वादिरुपस्य घटत्वपटत्वादिसाधारणतया व्यभिचारप्रसङ्गेन तस्यापि परिहार्य्यत्वात्। किन्तु संयोगप्रत्यक्षत्वमेव यावदाश्रयप्रत्यक्षकार्य्यतावच्छेदकं निर्वाच्यम्। एवञ्च समवायप्रत्यक्षे यावदाश्रयप्रत्यक्षानपेक्षणान्न समवायस्य सम्बन्धरुपस्यापि प्रत्यक्षानुपपत्तिरिति नैयायिकदिनकररामरुद्रादिसम्प्रदायः।

वस्तुतस्तु सम्बन्धप्रत्यक्षे प्रतियोग्यनुयोगिसाक्षात्कारस्य हेतुत्वं सिद्धमेवास्ति, यदनुसारेण हेत्वाभाससामान्यनिरुक्तिप्रकरणे प्रथमं हेत्वाभासलक्षणं व्याचक्षाणेन गदाधरभट्टाचार्य्येण—'अतः सम्बन्धिपदं तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाय' इति सन्दर्भो निबद्धः। तदेवं घटाकाशादिसंयोगस्थले गगनादिरूपानुयोगिनः प्रत्यक्षाभावेनैव घटाकाशादिसंयोगप्रत्यक्षापत्तिवारणसम्भवे किं पुनर्यावदाश्रयप्रत्यक्षस्य कारणत्वकल्पनेन ? तस्मात् समवायसम्बन्धिनो योग्यस्य प्रतियोगिनो योग्यस्य चानुयोगिनः प्रत्यक्षेण समवायप्रत्यक्षस्य समुत्पादो निराबाध इति समवायो न प्रत्यक्ष इति वैशेषिकाणां राद्धान्तो न क्षोदक्षमतां धत्ते।

यदि च यावदाश्रयपदमेव प्रतियोग्यनुयोगिपरमित्युच्यते, तदापि न समवायस्य प्रत्यक्षानुपपत्तिः, यावत्त्वस्य तत्राविवक्षितत्वात्। यावदाश्रयपदस्य निरुक्तप्रतियोग्यनुयोगिपरत्वस्वीकारे पूर्वोक्तन्यायमतसिद्धे संयोगप्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वकल्पे प्रतियोग्यनुयोगिसाक्षात्कारस्य कार्य्यतावच्छेदकं संयोगप्रत्यक्षत्वम्, न तु सामान्यसम्बन्धप्रत्यक्षत्वमित्येव प्रतिपन्नं भवति। तथा च सति गदाधरपरिगृहीतायाः कार्य्यत्वरूपसम्बन्धसाक्षात्कारं प्रति तत्सम्बन्धप्रतियोग्यनुयोगिभूतपरामर्शानुमितिसाक्षात्कारनिष्ठकारणताया असङ्गतिः समापतति। सुप्रसिद्धं च नैयायिकसम्प्रदाये कार्य्यत्वादिरूपसम्बन्धसाक्षात्कारं प्रति प्रतियोग्यनुयोगिसाक्षात्कारस्य कारणत्वम्, आनुभविकतामपि नातिक्रामत्येतत्। मन्ये पूर्वोक्तदिशा नानाविधं विचारं कृत्वैव वैशेषिकदर्शनाचार्य्यप्रशस्तपादाचार्य्यप्रमुखैः समवायस्यातीन्द्रियत्वमन्यथैवोपपादितम्। तदुक्तं प्रशस्तपादाचार्य्येण प्रशस्तपादभाष्ये—'कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तते ? न संयोगः सम्भवति, तस्य गुणत्वेन द्रव्याश्रितत्वात्। नापि समवायस्तस्यैकत्वात्, न चान्या वृत्तिरस्तीति, न तादात्म्यात्। यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति, एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति, तस्मात् स्वात्मवृत्तिः। अत एवातीन्द्रियः, सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मसंवेदनाभावाच्च। तस्मादिह बुद्ध्यनुमेयः समवाय इति।'

अत्राहुः श्रीधराचार्य्या न्यायकन्दल्याम्—'समवायस्य वृत्त्यन्तरं नास्ति। तस्मादस्य स्वात्मना स्वरूपेणैव वृत्तिर्न वृत्त्यन्तरेणेत्यर्थः। अत एवातिन्द्रियः, सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्। यथा सत्तादीनां प्रत्यक्षेष्वर्थेषु वृत्तिरस्ति तेन ते संयुक्तसमवायादिन्द्रियेण गृह्यन्ते, नैवं समवायस्य वृत्तिसम्भवः। अतोऽतीन्द्रियोऽयम् संयोगसमवायापेक्षस्यैवेन्द्रियस्य भावग्रहणसामर्थ्योपलम्भात्। यदि समवायविषयमैन्द्रियकं संवेदनमस्ति, सम्बन्धभावाभिधानं प्रलापः। अथ नास्ति, तदेव वाच्यमित्यत्राह—स्वात्मसंवेदनाभावाच्चेति। यथेन्द्रियेण संयोगप्रतिभासो नैवं समवाय-

प्रतिभासः, सम्बन्धिनोः पिण्डीभावोपलम्भात्। अतोऽयमप्रत्यक्षः' इति। एवञ्च वैशेषिकनये समवायो न प्रत्यक्ष इत्येव राद्धान्तः।

नैयायिकनये त्वभावस्थले तत्तत्कालीनतत्तद्भूतलादिरूपाभावातिरिक्तस्वरूपसम्बन्धवत् समवायव्यतिरिक्तस्य तत्तदधिकरणादिरूपस्वरूपसम्बन्धस्य कल्पनेन वृत्त्यन्तरस्य सम्भवात् संयोगसमवायापेक्षस्यैवेन्द्रियस्य भावग्रहणसामर्थ्यानभ्युपगमाच्च वृत्त्यन्तराभावादिरूपबाधकविरहेण समवायस्य प्रत्यक्षत्वमेवेति समवायस्य प्रत्यक्षत्वाप्रत्यक्षत्वमूलं सुमहदेव वैषम्यं न्यायवैशेषिकदर्शनयोः, तन्मूलञ्च तयोर्मिथः पृथक्त्वम्।

उपस्कारकारास्तु 'प्रत्यक्ष समवाय इति नैयायिकाः। तदप्यनुपपन्नम्, समवायोऽतीन्द्रियः, आत्मान्यत्वे सत्यसमवेतभावत्वाद् मनोवत् कालादिवद्वा' इति सन्दर्भेणान्यथा समावायस्यातीन्द्रियत्वं प्रसाध्य सहैव च नैयायिकमते तस्य प्रत्यक्षत्वं प्रतिपाद्य तथैव न्यायवैशेषिकयोर्मतवैषम्यं सूचयामासुः।

अन्यत्रापि दृश्यते न्यायवैशेषिकदर्शनयोर्महद् वैषम्यम्। तद्यथा—आमघटानीनां पाकार्थं वह्निकुण्डे निक्षिप्तानां पाककर्मणि वैशेषिकाः पीलुपाकमङ्गीकुर्वन्ति, नैयायिकाश्च पिठरपाकम्। तत्र पीलुपाकमभ्युपगच्छतां वैशेषिकाणां सिद्धान्ते यदा घटादीनामवयवाः कपालादयो घटादिभिरवयविभिः सुतरामवष्टब्धाः सन्ति, तदा तेषु पाको नोपपद्यते, किन्तु ज्वलनज्वालासम्पर्केण यदा तावदवयविनो घटादयो नश्यन्ति, तदनन्तरमेव घटाद्यनवष्टब्धेषु स्वातन्त्र्येण वर्तमानेषु नित्येषु परमाणुष्वेव पाको जायते। ततः परं वह्निपक्वाः पूर्वविजातीयरूपादिशालिनः परमाणवः पुनर्मिथः संयुज्यन्ते। ततः परमाणुयुगलादिसंयोगेन द्व्यणुकादिसमुत्पादक्रमेण घटादिरूपमाहावयविपर्य्यन्ताः समुत्पद्यन्ते। वह्निसम्बन्धिसूक्ष्मभागानां च वेगातिशयेन श्यामघटादिरूपस्य पूर्वव्यूहस्य ध्वंसस्तथा रक्तघटादिरूपस्योत्तरव्यूहस्योत्पत्तिः। वह्न्यवयवानामतिशयितवेगवशात्तथा त्वरितं पूर्वव्यूहनाश उत्तरव्यूहसमुत्पादश्च, येन पूर्वव्यूहनाशादीनामनुपलब्धिः। उत्तरव्यूहे पूर्वव्यूहसादृश्यातिशयसत्त्वेन च तत्र भवति पूर्वव्यूहाभेदप्रतिपत्तिः। तत्र च पश्चिमव्यूहे कारणगुणप्रक्रमेण रूपाद्यात्मकपाकजगुणसमुत्पादः। पूर्वव्यूहनाशक्रमश्च यथा—आदौ घटादिकमामद्रव्यं पाकमुद्दिश्य वह्नौ निक्षिप्यते। ततो वह्निसम्बद्धे तस्मिन् वह्न्यभिघातेन तदारम्भकेषु परमाणुषु कर्माणि जायन्ते, ततो विभागाः, विभागतश्च मिथः संयोगनाशाः, संयोगविनाशतश्च कार्य्यद्रव्यघटादिनाशः। तदुक्तं प्रशस्तपादाचार्य्येण— घटादेरामद्रव्यस्याग्निना सम्बद्धस्य अग्नेरभिघातान्नोदनाद् वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते। तेभ्यो विभागाः, विभागतश्च संयोगनाशाः, संयोगनाशेभ्यश्च कार्य्यद्रव्यं नश्यति। तस्मिन् विनष्टे स्वतन्त्रेषु परमाणुष्वग्निसंयोगा-

दौष्ण्यापेक्षात् श्यामादीनां विनाशः पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात् पाकजा जायन्ते। तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद् द्व्यणुकादिप्रक्रमेण कार्य्यद्रव्यमुत्पद्यते। तत्र च कारणगुण-प्रक्रमेण रूपाद्युत्पत्तिः' इति।

द्व्यणुकादिप्रक्रमेणेत्यस्य परमाणुद्वयसंयोगाद् द्व्यणुकोत्पत्तिः द्व्यणुकसंयोगात् त्र्यणुकोत्पत्तिः, त्र्यणुकचतुष्टयसंयोगाच्चतुरणुकोत्पत्तिरित्यादिक्रमेणेत्यर्थो बोध्यः। परमाणुद्वयादित एव द्व्यणुकादिक्रमेणोत्पत्तौ नियममाहुः श्रीधराचार्य्याः, यथा पर-माणुप्रस्तावे न्यायकन्दल्याम्—'स चैको नारम्भकः, एकस्य नित्यस्यारम्भकत्वे कार्य्यस्य सततोत्पत्तिः स्यादपेक्षणीयाभावात्। अविनाशित्वञ्च प्रसज्येत। आश्रयविनाशस्या-वयवविभागस्य च विनाशहेतोरभावात्। त्रयाणामप्यारम्भकत्वमयुक्तम्, इह महतः कार्य्यद्रव्यस्योत्पत्तौ स्वपरिमाणापेक्षयाऽल्पपरिमाणस्य कार्य्यद्रव्यस्यैव सामर्थ्यदर्श-नात् त्र्यणुकं कार्य्यद्रव्येणैव जन्यते महापरिमाणत्वाद् घटवत्। एवं त्रयाणामेकस्य चारम्भकत्वे प्रतिक्षिप्ते द्वाभ्यामेव परमाणुभ्यामारभ्यते यत् तद् द्व्यणुकमिति सिद्धम्। द्व्यणुकैर्बहुभिरारभ्यत इत्यपि नियमः, न द्वाभ्याम्, तस्याणुपरिमाणोत्पत्तौ कारणसद्भावेनाणुत्वोत्पत्तावारम्भवैयर्थ्यात्। बहुषु त्वनियमः। कदाचित् त्रिभिरा-रभ्यत इति त्र्यणुकमित्युच्यते, कदाचिच्चतुर्भिरारभ्यते, कदाचित् पञ्चभिरिति यथेष्टं कल्पना। न च कार्यस्य व्यर्थता, यथा यथा कारणसंख्याबाहुल्यं तथा तथा महत्परि-माणतारतम्यस्योपलम्भात्। न चैवं सति द्व्यणुकानामेव घटारम्भकत्वप्रसक्तिः, घटस्य भङ्गेऽल्पतरतमादिभागदर्शनेन तथैवारम्भकल्पनात्। तदेवं द्व्यणुकादि-प्रक्रमेण क्रियते कार्य्यलक्षणा पृथिवीति सिद्धम्।'

अस्मिन् मते द्व्यणुकादिकं स्वविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद् भवतीति पर्य्यनुयोगस्य समाधानं मुक्तावलीप्रभृतिप्रदर्शितक्षणप्रक्रिया-पर्य्यालोचनेन विधेयम्।

वैशेषिकाणां परमाणावेव पाक इति विश्वनाथेनाप्युक्तं कारिकावल्याम्। यथा— तत्रापि परमाणौ स्यात् पाको वैशेषिके नये' इति। परमाणाविति परमाणा-वेवेत्यर्थः।

पिठरपाकवादिनां नैयायिकानां मते पुनः सर्वाणि घटाद्यवयविद्रव्याणि सच्छि-द्राणि। दृश्यते हि यदा घटादौ जलादिद्रवद्रव्यं किमपि स्थाप्यते तदा तस्य जलादि-रूपद्रवद्रव्यस्य अंशतो बहिः सम्पर्केण पार्श्वान्तरस्याप्यार्द्रीभावः सलिलादिना समुप-लभ्यते तत्र शैत्यञ्च। न खलु तत्र घटाद्यन्तर्वर्तितत्सलिलसम्बन्धमन्तरेण बहिर्वर्ति-सलिलान्तरासम्बन्धवति पार्श्वान्तरे कथमप्युपपद्यते शैत्यमार्द्रता च। शैत्यं हि यत् सा प्रकृतिर्जलस्येति। तदेवमन्यथा च घटाद्यवयविनां सच्छिद्रत्वमेव सोपपत्तिकं

भवति। अतो घटादीनां सच्छिद्रत्वादेव पाकाय बह्निकुण्डे निक्षिप्तानां तेषां छिद्रद्वारेण वह्नेः सूक्ष्मा अवयवा घटाद्यवयव्यवष्टब्धेष्वपि घटाद्यवयवेषु सम्बद्धास्तेषां पाकं कुर्वन्ति, अवयविनां पाकस्तु तत्र वह्निना समं साक्षात्सम्बन्धेनैव। अत एतन्मते घटाद्यवयविविनाशमन्तरेण घटाद्यवयव्यवष्टब्धेष्ववयवेषु तथाऽवयविषु पाकसम्भवोपपत्त्या तदभ्युपगमप्रयुक्तं वैशेषिकमतापेक्षया वैलक्षण्यम्।

प्रथमोक्तरीत्या पीलुपाकमङ्गीकुर्वतां वैशेषिकाणां मतापेक्षयाऽनन्तरोक्तनैयायिकसम्मतपिठरपाकमते महालाघवादिकं दृश्यते। तथाहि वैशेषिकाणां पीलुपाकसिद्धान्ते पूर्वव्यूहनाशः पश्चिमस्य व्यूहान्तरस्य समुत्पादः, तदनुरोधेन तत्प्रागभावादिकल्पना, पश्चिमव्यूहे पूर्वव्यूहभेद इत्यादिकम्, तथा तदनुषङ्गतः पश्चिमव्यूहे सोऽयमित्यादिरूपायाः पूर्वव्यूहाभेदावगाहिन्याः प्रत्यभिज्ञाया भ्रमत्वादिकं कल्पनीयमिति सुमहद् गौरवम्। नैयायिकमते तु तत्तदकल्पनात् सुतरां लाघवम्, तदेवंविधवैषम्यमपि न्यायवैशेषिकदर्शनयोर्मिथःपृथक्त्वे बीजम्।

अपरमप्यस्ति पृथक्त्वसाधकं न्यायवैशेषिकदर्शनयोः, तद्यथा—प्रमेयाणां सिद्धौ नियमेन प्रमाणानि समपेक्ष्यन्ते। तत्र प्रमाणविशेषाभ्युपगमे बिभिन्नानां तान्त्रिकाणां विभिन्नानि मतानि समुपलभ्यन्ते। यथोक्तं तार्किकरक्षायां वरदराजेन—

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः।
प्रत्यक्षमनुमानञ्च सांख्याः शब्दञ्च ते अपि॥
न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन।
अर्थापत्त्या सहैतानि चत्वार्य्याह प्रभाकरः॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥

तत्र न्यायसूत्रकारो गौतमः प्राह—'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति। एतेन गौतमीयन्यायमते प्रत्यक्षानुमानोपमानशब्दानां चतुर्णामेव पृथक् प्रामाण्यं समुपलभ्यते। तदेव च मतमवलम्ब्य गङ्गेशोपाध्यायेन प्रत्यक्षादिभेदेन खण्डचतुष्टयात्मकस्य नव्यन्यायशास्त्रमूलभूतस्य तत्त्वचिन्तामणिग्रन्थस्य निबन्धनेन नव्यन्यायशास्त्रेऽपि तानि चत्वार्य्येव प्रमाणानीति व्यवतिष्ठते।

भासर्वज्ञो नाम प्राचीननैयायिकस्तु स्वकृतन्यायसारग्रन्थे प्रत्यक्षानुमानागमरूपाणि त्रीण्येव प्रमाणानि समभ्युपगम्य 'एवमेतानि त्रीण्येव प्रमाणानि। एष्वेव उपमानार्थापत्तिसम्भवाभावैतिह्यादीनामन्तर्भावः' इत्यनेन सन्दर्भेण प्रत्यक्षानुमानागमानां त्रयाणामेव पृथक् प्रामाण्यमुपदिदेश।

वैशेषिकदर्शनप्रस्थाने तु प्रत्यक्षमनुमानं चेति द्वे एव प्रमाणे। शब्दस्योपमानस्य च गौतमाभ्युपगतस्य पृथक्प्रमाणस्य तत्र पृथक्प्रमाणत्वं नाभ्युपेयते, नाप्यनु-

मन्यते पृथक्प्रमाणत्वमर्थापत्त्यादीनाम् । तन्मते सर्वेषामेव तेषामनुमानप्रमाणान्तर्भावः । तदुक्तं प्रशस्तपादाचार्येण—'शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात् । यथा प्रसिद्धसमयस्यासन्दिग्धलिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपि' इति । अत्र समानविधित्वं समानप्रवृत्तिप्रकारत्वम् । तथाहि—यथा व्याप्तिग्रहणबलेनानुमानं प्रवर्तते तथा शब्दादयोऽपीत्यर्थः । शब्दोऽनुमानं व्याप्तिबलेनार्थप्रतिपादकत्वाद् धूमवदिति न्यायकन्दलीविवरणम् । शब्दस्य व्याप्तिबलेनार्थप्रतिपादनस्थले न्यायप्रयोगो यथा— गौरस्तितावान्, स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वादस्तिपदसमभिव्याहृतगोःपद—स्मारितत्वाद्वा । यद् यत् प्रथमोक्तहेतुमत् तदस्तित्ववत्, यथा घटः, यद् यद् द्वितीयोक्तहेतुमत् तदस्तित्ववत्. यथा चक्षुः । एवमेवंरीत्यैव वैशेषिका अनुमानप्रक्रियया शाब्दबोधमुपपादयन्तः शब्दप्रमाणस्य पृथक्प्रमाणत्वं खण्डयन्ति । अत एवोक्तं कारिकावल्यां विश्वनाथेन—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।। इति ।

गौतमीयन्यायसिद्धान्ते पृथक्प्रमाणमुपमानमिति पूर्वमेव समुद्दिष्टं सूत्रसमुल्लेखेन । तदिदमुपमानमपि नैव पृथक्प्रमाणं वैशेषिकाणाम् । उपमानस्वरूपं न्यायसूत्रकार एवमाह, यथा—'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्' इति । तस्यैव भाष्यं यथा—'प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरिव गवय इति । किं पुनरत्रोपमानेन क्रियते ? यदा खल्वयं गवा समानधर्मं प्रतिपद्यते, तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थो' इति । एतेनोपमानस्य स्वरूपं फलं च व्याख्यातम् । एतस्योपमानप्रमाणस्य प्रक्रिया विश्वनाथेन समुपदिष्टा । यथा—

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ।।
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानान्तु शक्तिधीरुपमा फलम् ।। इति ।

तदेवं गवयादौ गवादिसादृश्यज्ञानमुपमानप्रमाणम्, गवयो गवयपदवाच्य इति गवयगवयपदयोर्वाच्यवाचकभावज्ञानमुपमितिस्तत्फलमिति स्थितम् । सेयमुपमितिरनुमित्यादिविजातीया काचिदन्या प्रमितिर्नैयायिकानाम्, तत्प्रमाणमुपमानं चानुमानादिप्रमाणविलक्षणमेव प्रमाणं तेषाम् ।

वैशेषिकाणां तु सा प्रमितिर्नानुमितिविलक्षणा, किन्त्वनुमितिरूपैव, प्रमाणं चोपमानमनुमानमेव । तथा चोक्तम् 'एतेन शाब्दं व्याख्यातम्' इति सूत्रस्य व्याख्या-

यामुपस्कारकारेण—'गवयशब्दो गवयवाचकः, असति वृत्त्यन्तरे शिष्टैस्तत्र प्रयुज्यमानत्वात्, असति वृत्त्यन्तरे यः शब्दो यत्र शिष्टैः प्रयुज्यते स तस्य वाचकः। यथा गोशब्दो गोरित्यनुमानादेव गवयसंज्ञां परिच्छिनत्ति' इति।

श्रीधराचार्य्येणाप्युक्तं न्यायकन्दल्याम्—'यदपि गोसदृशस्य गवयशब्दवाच्यत्वज्ञानं तदप्यनुमानम्, तत्र तच्छब्दप्रयोगात्। यः खलु शब्दो यत्राभियुक्तैरविगानेन प्रयुज्यते, स तस्य वाचकः. प्रयुज्यते चारण्यकेनाविगाने गोसदृशे गवयशब्द इति, तस्माद् सोऽपि गवयशब्दवाच्य एवेति सामान्येन ज्ञानमनुमानमेव' इति।

'एतेन शाब्दं व्याख्यातम्' इति सूत्रव्याख्यायामेव शब्दप्रमाणस्याप्युपमानान्तर्भात्रमधिकृत्याहुरुपस्कारकारा यथा—'शाब्दं शब्दकरणकं ज्ञानमिति यन्नैयायिकादीनामभिमतं यदप्येतेन लैङ्गिकत्वेन- लिङ्गप्रभवत्वेनैव व्याख्यातम्। यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्षं लैङ्गिकं तथा शाब्दमपि। तथाहि—एते पदार्था मिथःसंसर्गवन्त आकाङ्क्षादिमद्भिः पदैः स्मारितत्वाद् गामभ्याजेति पदार्थसार्थवत्। तत्र हि आकाङ्क्षादिमत्पदकदम्बस्मारितत्वं पदार्थानां मिथः संसर्गवत्त्वव्याप्यं गृहीत्वैव संसर्गवत्त्वमनुमिनोति। किं कल्पनीयप्रमाणभावेन शब्देन' इति यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बत्वाद् गामभ्याजेति पदकदम्बवदित्यनुमानाज्ज्ञानावच्छेदकतयाभिमतविशेषसिद्धिः' इति च।

तत्र नैयायिका मन्यन्ते यत् तादृशपदस्मारितत्वेन हेतुना गवादावस्तित्वादेरनुमानेन शाब्दबोधस्य गतार्थतां वैशेषिका यदुपपादयन्ति तन्नोपपद्यते, तथाहि—पदजन्या हि पदार्थस्मृतिः स्वरूपसत्येव शाब्दबोधे प्रयोजिका, न तु तस्या ज्ञानमपि तत्र समुपयुज्यते। ततश्च यदा गवादौ पदस्मारितत्वाभावग्रहस्तत्रापि सिद्धस्तथा शाब्दबोधस्तादृशहेतुमत्ताग्रहेण शक्यो नोपपादयितुम्, पदस्मारितत्वाभावग्रहस्य पदस्मारितत्वरूपतादृशहेतुमत्त्वग्रहप्रतिबन्धकत्वेन प्रकृतपरामर्शानुपपत्त्या तत्र तथाविधानुमितेरुपपादयितुमशक्यत्वात्। एवं ज्ञानपूर्वकत्वाद्यभावग्रहदशायामपि स्मारितार्थसंसर्गज्ञानपूर्वकत्वसाधने दोषो बोध्यः। तथा पदैरस्मारितस्यापि तादृशपदस्मारितत्वग्रहेणान्वयबुद्धिप्रसङ्गः। एवंविधनानादोषापातवशादनुमानेन शाब्दधियो गतार्थता दुरुपपादा भवति।

अनुमानेन शाब्दबुद्धेर्गतार्थताकल्पे परेऽपि महान्तो दोषाः, यथा—'घटादन्यः' इत्यादिवाक्यस्थले घटप्रतियोगिकभेदप्रकारकनिरवच्छिन्नघटान्यनिष्ठविशेष्यताकशाब्दबोधस्यैव सर्वसम्मतत्वेन तस्यानुमित्या गतार्थत्वं कर्तुमशक्यम्, निरवच्छिन्नविशेष्यिकाया अनुमितेरनभ्युपगमात्। अतः शब्दज्ञानस्यातिरिक्तप्रमितित्वं शब्दस्य तज्ज्ञानस्य वा अनुमानव्यतिरिक्तप्रमाणत्वमवश्यमभ्युपगन्तव्यम्। तदुक्तं शब्दशक्ति-

प्रकाशिकायां जगदीशेन—'किञ्च घटादन्य इत्यादिवाक्याद् घटप्रतियोगिताकान्यत्वादिप्रकारेण निरवच्छिन्नविशेष्यताको घटान्यस्य बोधः सर्वजनसिद्धः । स चास्माकं तादृशानुपूर्वीकपदज्ञानत्वेन तथाविधान्वयबोधं प्रति हेतुत्वादुपपद्यते । परेषां तु भेदो घटप्रतियोगिकः, तत्साकाङ्क्षान्यपदस्मारितत्वादित्यादिरीत्या अनुमित्या न तन्निर्वाहः, पक्षविधयाऽन्यत्वस्य तत्र भानेऽप्यन्यत्वप्रकारेणान्यस्य तत्राभानात् । न च तत्रान्यपदमेव घटान्यत्वप्रकारेण घटान्यस्य लक्षकम् घटादित्यस्य व्यर्थतापत्तेः । अन्यथा घटोऽस्तीत्यादावपि घटादिपदस्यैवास्तित्वादिविशिष्टघटादिलक्षकत्वसम्भवात्, तत्राप्यस्तित्वघटयोरन्वयबोधापलापापत्तेः' इति । शब्दप्रमाणस्यानुमानप्रमाणान्तर्भावे तावदयमनन्यसाधारणो दोषः ।

अपि च शब्दस्यानुमानान्तर्भावपक्षे यत्र यत्र वाक्यादन्वयबोधस्तत्र सर्वत्रैव विशेषविशेषव्याप्तिज्ञानादिरूपं कारणं कल्पनीयम् । तच्चानुभवविरुद्धम्, व्याप्तिप्रतिसन्धानादिकमन्तरेण पदपदार्थज्ञानादिरूपकारणकलापादेव तत्र वाक्यार्थबोधस्यानुभविकत्वात् । अतो वैशेषिकमतमिदमनादेयम् ।

शाब्दस्य नियन्त्रितार्थत्वादिकमपि तस्यानुमित्यपेक्षया वैलक्षण्यं साधयति । अत एवोक्तं जगदीशेन— सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा' इति शब्दशक्तिप्रकाशिकायाम् ।

अन्योऽपि दोषो निरुक्तवैशेषिकसिद्धान्ते, यथा—शाब्दबोधे नियमेन प्रथमान्तपदार्थो मुख्यविशेष्यतामापद्यते । अनुमितौ तु पदसत्तायाः सार्वत्रिकत्वविरहेण नासौ नियमः । एवं नियमबलेन 'गौरस्ति' इत्यादिवाक्यजन्यशाब्दबोधेऽस्तित्वं प्रकारो गौरेव च विशेष्यो भवति, येन गौरस्तितावानित्येव तत्र शाब्दबोधः । अनुमितिस्तु यथा पर्वतो वह्निमानित्याद्याकारा पक्षमुख्यविशेष्यिका, तथैव साध्यमुख्यविशेष्यिका पक्षप्रकारिका पर्वते वह्निरित्याद्याकारापि भवति । तदेवमनुमानेन शाब्दस्य गतार्थतासिद्धान्ते गौरस्तीत्यादिवाक्याद् यथा गौरस्तितावानित्येवं गोविशेष्यकं ज्ञानं जायते, तथैव अस्तित्वं गवीयमित्येवं गोप्रकारकमस्तित्वविशेष्यकमपि ज्ञानं भवितुमर्हति । अतो गौरस्तीत्यादिवाक्यजन्यबोधस्य गोविशेष्यकत्वास्तित्वप्रकारकत्वनियमनिर्वाहार्थमपि शाब्दस्यानुमितिविलक्षणत्वमभ्युपेयम् । अत एव नैयायिकाः शब्दप्रमाणस्य वैशेषिकसम्मतानुमानगतार्थतायां दोषराशिं पश्यन्तः प्रमाणान्तरत्वमेव तत्राभ्युपगच्छन्तीत्यतोऽपि न्यायवैशेषिकदर्शनयोर्मिथः पृथक्त्वम् ।

अन्यदप्यस्ति वैषम्यं महदेवास्य दर्शनद्वयस्य यथा—नैयायिकानां सिद्धान्ते पञ्चरूपोपपन्नं लिङ्गमेवानुमितौ साध्यगमकतौपयिकमभ्युपगम्यते । पञ्चरूपाणि च तानि—पक्षसत्त्व-सपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि । यथोक्तं मथुरानाथेनावयवरहस्ये 'तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः' इति

मूलव्याख्यानावसरे—'समस्तरूपेति । पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वरूपपञ्चरूपविशिष्टलिङ्गप्रतिपादकमित्यर्थः' इति । तादृशपञ्चरूपवैपरीत्येन न्यायमतेऽसिद्धविरुद्धानैकान्तिकबाधितसत्प्रतिपक्षितसंज्ञाः पञ्च हेत्वाभासाः समभ्युपगम्यते । यथोक्तं मणिकारेण हेत्वाभाससामान्यनिरुक्तिप्रकरणे—'ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च' इति । गौतमीयन्यायसूत्रेऽपि कतिपयनामान्तरसमावेशेन त एव पञ्च हेत्वाभासाः समुद्दिष्टाः, यथा—'सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसमातीतकाला हेत्वाभासाः' इति ।

तत्र प्रकरणसमः सत्प्रतिपक्षः साध्यसमोऽसिद्धः अतीतकालो बाधितः । एतद्विवरणं विशेषजिज्ञासुभिर्विश्वनाथकृतन्यायसूत्रवृत्त्यादावनुसन्धेयम् ।

वैशेषिकास्तु त्रिरूपस्यैव लिङ्गस्य साध्यगमकतौपयिकत्वं स्वीकुर्वन्ति । त्रीणि रूपाणि च तेषां पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वं चेति । तदुक्तं भाष्ये प्रशस्तपादाचार्येण 'लिङ्गं पुनर्यत्—

अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते ।<br>तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ।। इति ।

अत्र अनुमेयेन सम्बद्धमित्यनेन पक्षसत्त्वस्य, प्रसिद्धञ्च तदन्वित इत्यनेन सपक्षसत्त्वस्य, तदभावे च नास्त्येवेत्यनेन विपक्षासत्त्वस्य लाभः । तत्तद्वैपरीत्येन हेत्वाभासानपि त्रिविधानेव वैशेषिका अभ्युपगच्छन्ति । तदुक्तं भाष्ये प्रशस्तपादाचार्येण, यथा—

विपरीतमतो यत् स्यादेकेन द्वितयेन वा ।<br>विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ।। इति ।

असिद्धमनुमेये साध्यविशिष्टपक्षे धर्मिणि नास्ति, अनैकान्तिकं विपक्षादव्यावृत्तमित्यनयोरेकैकेन लिङ्गरूपेण रहितत्वम् । विरुद्धं सपक्षे नास्ति विपक्षादव्यावृत्तं चेति तस्य द्वितयेन लिङ्गरूपेण रहितत्वम् । प्रकरणसमकालात्ययापदिष्टावनैकान्तिक एवान्तर्भवतः सन्दिग्धसाध्यधर्मिणि प्रकरणसमस्य वर्तमानत्वात्, निश्चितविपक्षे च कालात्ययापदिष्टस्य सत्त्वादिति न तयोः पृथगुपदेश इति वैशेषिकाणामभिप्रायः ।

अत्र यद्यपि सूत्रभाष्यादितस्तथा त्रिरूपस्यैव लिङ्गस्य साध्यगमकतौपयिकतायास्तथा तद्वैपरीत्येन असिद्धविरुद्धानैकान्तिकानां त्रयाणामेव च हेत्वाभासताया लाभेऽपि वृत्तिकारादिभिरत्र वैशेषिकसिद्धान्तेऽपि प्रागुक्तन्यायसिद्धान्तवद् निरुक्तपाञ्चरूप्यस्यैव साध्यगमकतौपयिकातायाः, पञ्चानामेव च विरुद्धानैकान्तिकासिद्धबाधितसत्प्रतिपक्षितानां हेत्वाभासताया अभ्युपगमस्य समुल्लेखश्रवणात्, हेत्वाभासप्रकारवैषम्यमूलं प्रकृतदर्शनयोः पार्थक्यं नैव शक्यते समुपपादयितुम्, तथापि

वृत्तिकारस्तु 'अप्रसिद्धोऽनपदेशोऽसन् सदिग्धश्चानपदेश' इति सूत्रोपात्तस्य चकारस्य अाधसत्प्रतिपक्षसमुच्चयार्थतामाह, तेन सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीत-कालाः पञ्च हेत्वभासा इति गौतमीयमतमेवानुधावतीत्युपस्कारपरिगृहीतस्य वृत्तिकारसन्दर्भस्यैव चरमभागे 'सूत्रकाराणं तु त्रयो हेत्वाभासा इत्यत्रैव निर्भरः' इति वृत्तिप्रतीकोपलम्भात् तत्रैव चोपस्कारकारस्य 'परन्तु' विरुद्धासिद्धसन्दि-ग्धमलिङ्गं काश्यपोऽब्रवीदित्याद्यभिधानात् सूत्रकारस्वरसो हेत्वाभासत्रित्वे। चकारस्तु उक्तसमुच्चयार्थं इति तत्त्वम्' इत्येतद्वचनादपि वैशेषिकसूत्रकारस्य मते हेत्वाभासास्त्रय इत्येव प्रतिपद्यते।

मथुरानाथस्तु वैशेषिकमतेऽनध्यवसितमपि तुरीयं हेत्वाभासमाह हेत्वाभास-सामान्यनिरुक्तिमणिरहस्ये, यथा—'असिद्धविरुद्धसव्यभिचारानध्यवसिताश्चत्वारो हेत्वाभासाः, अनध्यवसितोऽसाधारणः, न तु बाधप्रतिरोधौ हेत्वाभासाविति वैशेषि-कसिद्धान्त इति'।

यदपि व्योमवत्याख्यायां प्रशस्तपादभाष्यटीकायां व्योमशिवाचार्येण—'नन्वे-वमपि प्रकरणसमकालात्ययापदिष्टयोस्त्रैलक्षण्योपपत्तेर्गमकत्वप्रसङ्गः' इत्युक्त्वा तदनन्तरमेव 'अतश्चानयोर्व्यवच्छेदार्थमबाधितविषयत्वमसत्प्रतिपक्षितत्वं च समान-तन्त्रगतमभ्यूह्यम्, चकारस्यानुक्तसमुच्चयार्थत्वादिति ग्रन्थेन' हेत्वाभासविभजने गौतमीयतन्त्रसाम्यमेव वैशेषिकतन्त्रेऽपि समुपदिष्टम्, तत् सूत्रकारप्रभृतिप्रभूतमत-विरोधात् सूत्रकारमतापेक्षया मतान्तरादानस्य सुतरामनौचित्याच्च समुपेक्षणीयम्। तदेवं हेत्वाभासविभजने तथानुमापकलिङ्गरूपनिर्वचने च द्वयोर्दर्शनयोर्वैषम्यात् प्रकृतदर्शनद्वयस्य मिथो विशेषः सिद्ध एवेति नासिद्धम्।

संशयप्रकारभेदेऽपि दृश्यते कश्चिद् विशेषो न्यायवैशेषिकदर्शनयोः। तथाहि—गौतमीये न्याये 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति सूत्रे पञ्चविधः संशयः सूचितः। वैशेषिकतन्त्रे तावदु-पस्कारकारेण संशयस्य तत्पञ्चविधत्वं निरस्य एकविधत्वमेवोपदिष्टम्। तथा चोक्तं सविचारमुपस्कारकारेण –'समानतन्त्रे गौतमीयेऽनध्यवसायज्ञानस्यानभ्युपगमा-दसाधारणो धर्मः संशयकारणत्वेनोक्तः। विप्रतिपत्तेर्विरुद्धवाक्यद्वयस्यान्वयव्यतिरेक-शालितया संशयकारणत्वमुक्तम्। न्यायभाष्ये चोपलभ्यमानत्वं यत् संशयकारणमुक्तं सदप्युपलभ्यतेऽसदप्युपलभ्यत इत्युपलभ्यमानमिदं सदसद्वेति "तथा च पञ्चविधः संशय इति। तदेतत् सामान्यमेवेति सामान्यप्रत्यक्षादित्यनेनैव गतार्थम्। न्यायवार्त्ति-केऽपि यत् कारणभेदेन संशये त्रित्वमुक्तम्. तदपि न सम्भवति, व्यभिचारेण समान-धर्मादीनां त्रयाणां कारणत्वस्यैवासम्भवात्। तथा च संशयो न त्रिविधो न वा पञ्चविधः, किन्त्वेकविध एव। प्रकारान्तरेण तु द्वैविध्यं सूत्रकृदेव स्पष्टयति' इति। विशेषजिज्ञासुभिराकरग्रन्था अनुसन्धेयाः।

अपरमनयोर्दर्शनयोर्वैषम्यं यथा—वैशेषिकदर्शने शास्त्रकारकृतसङ्केतेनार्थ-शब्दाद् द्रव्यगुणकर्माणि त्रीणि प्रतिपद्यन्ते। तदुक्तं प्रशस्तपादभाष्ये— द्रव्यादीनां त्रयाणामपि सत्तासम्बन्धः सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्म-कर्तृत्वञ्च' इति। तद्व्याख्यायां श्रीधरः प्राह —'स्वसमयार्थशब्दाभिधेयत्वञ्चेति वैशेषिकैः स्वयं व्यवहाराय यः संकेतः कृतोऽस्मिन् शास्त्रेऽर्थशब्दाद् द्रव्यगुणकर्माणि प्रतिपत्तव्यानि, तेन द्रव्यादीनि त्रीणि निरुपपदेनार्थशब्देनोच्यन्त इति। न्यायतन्त्रे तु तस्याः परिभाषाया अभावात् तत्र नार्थशब्देन तेषां द्रव्यादीनां त्रयाणामभिधानमिति विशेषः।

केषाञ्चिन्नैयायिकविशेषाणां प्रमाणपुरुषविशेषाणाञ्च केषाञ्चिन्मतपरि-ग्रहेणान्यदपि वैषम्यमनयोर्दर्शनयोः शक्यमुपपादयितुम्, तद्यथा—प्राचीननैयायिको न्यायसारकारो भासर्वज्ञो ब्रवीति—'सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः' इति। तत्र सुखतद्भोगसत्त्वे प्रमाणमपि स एवाह यथा—'कुतो मुक्तस्य सुखोपभोग इति चेत् आगमात्। उक्तं हि—

सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
तं च मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः॥ इति।

अस्यार्थमाह न्यायसारतात्पर्यदीपिकाकारः। यथा–आत्यन्तिकमिति अति-शायि बुद्धिग्राह्यमिति ज्ञानवेद्यम्, अतीन्द्रियमिति आत्मप्रत्यक्षमिति। बुद्धिग्राह्य-मित्यनेन तदा सुखस्य तस्यानुभूतिरुपपादिता।

अनेन मोक्षदशायां दुःखात्यन्तनिवृत्तिरिव सुखस्यानुभूतिरपि गम्यते। सुखा-नुभूतेस्तत्रास्वीकारेण केवलदुःखात्यन्तनिवृत्तिस्वीकारे तस्या दुःखात्यन्तनिवृत्तेः सुखाभावसुखभोगाभावनियतत्वेन तदुपाये केषामपि प्रवृत्तेरसम्भवेन तदधिकारिण एव सुतरां दुर्लभाः स्युः। सुखस्य सुखभोगस्य च सकलजीवाभिलाषविषयत्वेन तद्विघटके प्रवृत्त्याधायकेष्टसाधनत्वादिज्ञानासम्भवात्। अतः सुखानुभूतिसहितैव दुःखात्यन्तनिवृत्तिर्मुक्तिरित्येव तत्सिद्धान्तः।

अन्यच्च शङ्करविजयग्रन्थे दृश्यते। शङ्कराचार्य्यस्य दिग्विजयप्रकरणे कश्चन नैयायिकः शङ्कराचार्य्यं प्रत्याह—भो! यदि सर्वज्ञ एवासि तदा निरूपय वैशेषिक-मुक्तिदशापेक्षया नैयायिकमुक्तिदशायाः को विशेष इति। भगवान् शङ्कराचार्य्यस्त-दुत्तरमभिदधानः प्राह—

अत्यन्तनाशे गुणसंहतेर्या स्थितिर्नभोवत्कणभक्षपक्षे।
मुक्तिस्त्वदीये चरणाक्षपक्षे सानन्दसंवित्सहिता विमुक्तिः॥ इति।

एतेन वैशेषिकप्रस्थाने आत्मनो निःशेषविशेषगुणसमुच्छेदे सति प्रलया-वस्थायां निखिलोपाधिविनिर्मुक्तस्य गगनस्येव स्वरूपमात्रेणावस्थितिर्मुक्तिदशायाम्।

तदा सुखस्य तदनुभूतेर्वा सत्त्वे सकलविशेषगुणसमुच्छेदानुपपत्त्या सुखं सुखानुभूतिर्वा नास्तीत्यवश्यमेव स्वीकार्य्यम् ।

नैयायिकनये तु मोक्षावस्थायामागमप्रमाणकस्य सुखानुभवस्य सत्त्वात् तद्दर्शनयोर्मिथो वैलक्षण्यस्य सिद्धिः । भगवान् शङ्कराचार्य्यः स्वकृते सर्वदर्शनसिद्धान्तसंग्रहग्रन्थेऽपि तमेव सिद्धान्तं प्रतिपादयाञ्चक्रे । यथा—

'नित्यानन्दानुभूतिःस्यान्मोक्षे तु विषयादृते' इति ।

किन्तु निरुक्तरूपो मुक्तौ सुखानुभूतिसिद्धान्तः सपरिकरं निराकृतो वात्स्यायनेन गौतमीयन्यायसूत्रे मोक्षसूत्रभाष्ये यथा—'नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते, तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते । तेषां प्रमाणाभावादनुपपत्तिः । न प्रत्यक्षम्, नानुमानमागमो वा विद्यते, नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति ।

न च भासर्वज्ञेन न्यायसारे 'सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्' इत्यादेः, 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिलक्ष्यते' इत्यादेश्चागमप्रमाणस्य मुक्तौ सुखानुभूतिसाधकस्य समुपन्यासात् 'तेषां प्रमाणाभावादनुपपत्तिः' इति भाष्यमनुपपन्नमिति वाच्यम्, भाष्यकारेण स्वत एव तादृशाशङ्कामुद्भाव्य यद्यपि कश्चिदागमः स्यान्मुक्तावात्यन्तिकं सुखमिति, सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते । दृष्टो हि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोके' इति भाष्यसन्दर्भेण तस्याः समाधानात् । तदेवं मोक्षदशायामानन्दानुभवसिद्धान्तस्य न्यायसारादौ भासर्वज्ञादिभिःपरिगृहीतस्यापि न्यायभाष्यकाराद्यननुमतत्वेन तमादाय दर्शनद्वयस्य वैषम्योपपादनमयुक्तं भाति । दार्शनिको महाकविः श्रीहर्षोऽपि गौतमानुमतमुक्तिदशायाः सुखानुभूतिरहितत्वसिद्धान्त एव श्रद्धामनुबध्य नैषधीयचरितमहाकाव्यस्य सप्तदशसर्गे प्राह—

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गौतमं तमवेत्यैव यथा वित्थ तथैव सः ।।

एवं नानाविधयुक्तिप्रमाणैरेव सुखानुभूतिविनिर्मुक्तस्य दुःखात्यन्तनिवृत्तिमात्रस्यैव गौतमन्यायसम्मतमुक्तित्वसिद्धेः सकलविशेषगुणसमुच्छेदादिरूपापवर्गवादिनां वैशेषिकाणामपि मुक्तिदशायां युक्तितर्कादिबलेन ततो विशेषाभावस्य सिद्धत्वाद् मुक्तिदशामुपजीव्य दर्शनद्वये प्रकृते सौसादृश्यस्यैव विद्यमानत्वात् ।

वस्तुतस्तु न्यायसारादिनिबन्धद्वारा भासर्वज्ञादिभिः प्रवर्तितः सम्प्रदायोऽपि सुप्रसिद्धः प्राचीनो न्यायसम्प्रदाय एव, ततस्तत्सम्प्रदायाभ्युपगतं मुक्तेः सुखसंवित्सहितत्वसिद्धान्तं न्यायसिद्धान्ततया परिगृह्य न्यायवैशेषिकदर्शनयोः पार्थक्योपपादनं नानुपपन्नमिति ध्येयम् ।

द्वित्वादौ विभागजविभागे च न्यायवैशेषिकदर्शनयोर्विशेषवैषम्यविरहेऽपि तत्तद्विषयस्यातिदुरूहस्य न्यायतन्त्रे विशेषविवरणस्यानुपादानाद् वैशेषिकतन्त्रे च तदुपादानादस्त्येव तत्कृतः कश्चिदुभयोर्विशेषः, येन सुचिरात् प्रभृत्याभाणकः प्रचरति विद्वत्समाजे यथा—

द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।
यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ।। इति ।

पाकजोत्पत्तिप्रक्रिया पूर्वमेव वर्णिता । द्वित्वोत्पत्तिविनाशादीनां विभागजविभागोत्पत्त्यादीनाञ्च विचित्रा प्रक्रिया प्रशस्तपादभाष्यग्रन्थादावस्ति सविशेषं वर्णिता, सा तत एव विशेषजिज्ञासुभिरधिगन्तव्या ।

उभयोर्न्यायवैशेषिकदर्शनयोर्मिथः पृथक्त्वप्रयोजकाः कतिचन विशेषधर्मा यथामति प्रतिपादिताः, अन्ये तत्र तत्रावहितैरवधारणीया इति ।

वैशेषिकन्यायनयौ प्रसिद्धौ तौ भूरिसाम्येन सामानतन्त्रे ।
बहुत्र वैषम्यवशात्तयोश्च सिद्धा पृथग्दर्शनता समाजे ।।

।। इति शम् ।।



# प्राचीनन्यायनव्यन्याययोः सैद्धान्तिकं पृथक्त्वम्

म० म० श्रीकालीपदतर्काचार्यः, कलिकातानगरम् ।

प्राच्यन्याये तथा नव्यन्याये सिद्धान्तगोचरम् ।
यत् पृथक्त्वं समुद्भूतं तदत्र परिकीर्त्यते ।।

भारते वर्षे बहोः कालात् पूर्वमेव प्रवृत्तिः संवृत्ता नानाविधानां विद्यानाम् । या इमाः प्रथमतः संक्षेपेण आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती' इत्येवं चतुर्धा समुपदिष्टाः । अनन्तरञ्च ततो विस्तरेण—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।

इत्येवं चतुर्दशधा । तदनन्तरमप्यायुर्वेदाद्युपवेदचतुष्टयसमभिव्याहारेण तावदष्टादशधा । सर्वा एवैता विद्याः सुचिरादेव समवर्तन्त समासतः सिद्धाः । दुरधिगमा हि तासां प्रवृत्तिराद्या, तथापि ये तासां विस्तरेणोपदेष्टारस्त एव तत्तद्विद्याप्रवर्तका इति प्रकीर्त्यन्ते । तदुक्तं न्यायमञ्जर्यां जयन्तभट्टेन—"आदिसर्गात् प्रभृति वेदवदिमा विद्याः प्रवृत्ताः, संक्षेपविस्तरविवक्षया तु तांस्तांस्तत्र तत्र कर्तॄनाचक्षते" इति । अत एव सत्यामपि पूर्वतः प्रभृत्येव सिद्धायां न्यायादिदर्शनविद्यायां गौतमप्रमुखानेव महर्षिमुख्यान् न्यायादिदर्शनप्रजापतीनर्वाञ्चः समामनन्ति । पद्मपुराणे पार्वतीं प्रति शिवोक्तिरपि श्रूयते । यथा—

प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततः परम् ।।

कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ।। इत्यादि ।

न्यायशास्त्रं युक्तिशास्त्रम्, तदिदं सुतरामुपयुज्यते । सर्वत्रैव निर्णये लौकिकार्थानां विचारविधौ च तान्त्रिकतत्त्वानाम् । तदुक्तं भाष्ये वात्स्यायनेन---"सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ।।" इति ।

न्यायशास्त्रमिदं स्वप्रवृत्तिसमयादारभ्य सुचिरं यावदेकमेव वेदाविरोधिमननशास्त्रमासीत्, तत्सहायभूतं चाभूत् । पदार्थतत्त्वपरामर्शे तत् समानतन्त्रं कणाद-

प्रवर्तितं वैशेषिकं शास्त्रम्, निर्विशेषणञ्च तन्न्यायशास्त्रमित्येव व्यवहारगोचरतामाससाद। भूयान् कालस्तथैव न्यायशास्त्रस्य तस्य व्यतीयाय। तावत्कालाभ्यन्तरे वात्स्यायनो गौतमीयन्यायसूत्रसन्तानस्य प्रशस्यं भाष्यं प्रणिनाय भारद्वाजः पाशुपत उद्द्योतकरो बौद्धादिविरुद्धबुद्धिप्रदत्तप्रतिक्षेपसम्मर्दमर्दनाय भाष्यस्य तस्य वार्त्तिकं प्रवर्तयाञ्चक्रे। ततः सर्वतन्त्रस्वतन्त्रो वाचस्पतिप्रतिमो वाचस्पतिः प्रवर्त्तयामास भाष्यवार्तिकतात्पर्य्यटीकाम्। सूर्य्य इव सन्तमसनिषूदनो नैयायिकप्रवीणः श्रीमानुदयनाचार्य्यः श्रद्धाविद्धो न्यायसिद्धान्तेषु समिद्धया बुद्धया संदृब्धवान् निरवद्यां तात्पर्य्यपरिशुद्धिम्, निबन्धसन्तानं चान्यं न्यायसम्बन्धिनं सुदक्षाणां प्रतिपक्षाणामक्षोभेण प्रतिक्षेपदक्षम्। तावत्पर्य्यन्तं ये ये न्यायतन्त्रग्रन्थाः समजायन्त तानवलम्ब्य सुमहानेको न्यायसम्प्रदायो विद्याधिकारे सुप्रतिष्ठितः समवर्तिष्ट। सोऽयं तावदेकधैव प्रवर्तमानो निरुपपदं न्यायसम्प्रदाय इत्येव प्रख्यातिमगात्।

अथ यदा गङ्गेशोपाध्यायो न्यायसूत्रीयं प्रत्यक्षादिप्रमाणचतुष्टयमेव मुख्यतया समवलम्बमानः प्रभूतपारिभाषिकपदार्थाद्यनुसृत्या सुतरां नवीनपद्धत्या शास्त्रार्थंसार्थविचारानुसारं तत्त्वचिन्तामणि नाम न्यायग्रन्थसन्तानमुकुटमणिं प्रणिनाय, ततः प्रभृत्येव न्यायसूत्रप्रवृत्तिकालादारभ्य गङ्गेशप्रवर्त्तिततत्त्वचिन्तामणिसरणिप्रचारकालात् पूर्वपर्य्यन्तं सुप्रतिष्ठितस्य न्यायसम्प्रदायस्य प्राचीनन्यायसम्प्रदाय इति गङ्गेशप्रवर्त्तितस्य नवीनसरणिसनाथस्य न्यायसम्प्रदायस्य च नव्यन्यायसम्प्रदाय इति प्रसिद्धिरजनिष्ठ। गङ्गेशस्य तत्त्वचिन्तामणिग्रन्थं नितरां दुरधिगमार्थं परिष्कर्तुकामा नैयायिकोत्तमाः समासेन विस्तरेण वा बहव एव तदीयव्याख्यानोपख्यानादिकं विहितवन्तः, प्रतिष्ठां नीतवन्तस्तत्सम्प्रदायम्। तत्र नवद्वीपप्रदीपो वासुदेवसार्वभौमस्तार्किकशिरोमणी रघुनाथो भवानन्दसिद्धान्तवागीशो मथुरानाथतर्कवागीशो जगदीशतर्कालङ्कारो गदाधरभट्टाचार्य्यप्रमुखाश्च तार्किकश्रेष्ठा विशेषतः समुल्लेखमर्हन्ति। जानकीनाथचूडामणिकणादतर्कवागीशहरिरामतर्कवागीशप्रमुखाः परेऽपि केचन विचक्षणास्तार्किकाः प्रणीतवन्तः कांश्चन प्रसिद्धान् नव्यन्यायनिबन्धान् यदुपाश्रयणेन नवीनन्यायसम्प्रदायः प्रतायमानः परितः परां प्रतिष्ठामध्यासिष्ट। तत्र न्यायसूत्रप्रवृत्तिकालं तत्त्वचिन्तामणिग्रन्थप्रथमप्रचारकालं चान्तरा समुत्पन्नेषु न्यायग्रन्थेषु तदीयसिद्धान्तपरिग्रहेण प्रणीतेषु चापरेष्वपि न्यायग्रन्थेषु ये सिद्धान्ताः परिगृहीतास्त एव प्राचीनन्यायसिद्धान्ताः। गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणिनिबन्धनिबन्धनानन्तरं तदीयव्याख्यानोपव्याख्यानादिरूपेण प्रणीतेषु गङ्गेशप्रवर्त्तितनवीनरीत्या तदीयविलक्षणसिद्धान्ताद्यालम्बनेन स्वतन्त्रतया प्रणीतेषु च न्यायप्रकरणग्रन्थादिषु ये सिद्धान्ता ग्रन्थकृद्भिरुपनिबद्धास्त एव नव्यन्यायसिद्धान्ताः। एकस्मिन्नेव सम्प्रदाये कालभेदेन ग्रन्थकर्तृविशेषस्य यो विभिन्नः सिद्धान्तः सोऽपि तत्सम्प्रदायसिद्धान्त एव मन्तव्यः।

यद्यपि प्राचीनन्यायमुपजीव्यैव प्रवृत्तिरजनिष्ट नव्यन्यायस्य, तथापि समीक्षा-विशेषवशात् क्वचित् क्वचित्तयोः सिद्धान्ते किञ्चित् किञ्चित् पार्थक्यं समजनिष्ट। तद्यथाप्रतिभानं प्रतिपादयितुं प्रयत्नं कुर्वे। यथा—

जयन्तभट्टकृता न्यायमञ्जरी प्राचीनन्यायस्यैको मुख्यग्रन्थः। गौतमीयन्याय-सूत्रस्य लक्षणांशविशेषविवरणार्थमेव तन्निबन्धनात्। तदुक्तं ग्रन्थप्रारम्भ एव जयन्तभट्टेन—

अक्षपादप्रणीतो हि विततो न्यायपादपः।
सान्द्रामृतरसस्यन्दफलसन्दर्भनिर्भरः ॥

वयं मृदुपरिस्पन्दास्तदारोहणपङ्गवः।
न तद्विभूतिप्राग्भारमालोकयितुमप्यलम् ॥

तदेकदेशलेशे तु कृतोऽयं विवृतिश्रमः।
तमेव चानुगृह्णन्तु सन्तः प्रणयवत्सलाः ॥ इति।

तत्र न्यायमञ्जर्यां जयन्तभट्टेन कारकसाकल्यादनर्थान्तरभूतायाः सामग्र्याः करणत्वमुपदिष्टं प्रमाणनिरूपणप्रकरणे। तदुक्तं तेन—"अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विदधती बोधाबोधस्वभावा सामग्री प्रमाणम्। बोधाबोधस्वभावा हि तस्य स्वरूपम्। अव्यभिचारादिविशेषणार्थोपलब्धिसाधनत्वं लक्षणम्" इति, 'तस्मात् कर्तृकर्मविलक्षणा संशयविपर्य्ययरहितार्थबोधविधायिनी बोधाबोधस्वभावा सामग्रीं प्रमाणमिति युक्तम्" इति च। तत्र साधकयुक्तिप्रकटनं बाधकयुक्तिनिरसनञ्च बाहुल्येनैव कृतं तत्रभवता जयन्तभट्टेन तत्रैव। तस्य तस्य समासतः सूचनं क्रियते। यथा—प्रमाणशब्दः प्रमीयते येनेति व्युत्पत्त्या करणसाधनो वर्तते। तेन प्रमायाः करणं प्रमाणमिति सिद्धम्। करणञ्च साधकतमम्। तथाहि—यद्यपि कार्य्यस्य सिद्धौ बहुन्येव कारणानि व्याप्रियन्ते, तथापि तेषु कार्य्यसिद्धौ यत् प्रकृष्टोपकारकं तदेव करणं भवति। प्रमाया उत्पत्तौ प्रकृष्टोपकारिका कारकसाकल्यभूता सामग्री। प्रकर्षश्चासौ कारणान्तरापेक्षया कश्चिदतिशयः : स च कारणेषु मध्ये यत्सत्त्वे फला-वश्यम्भावस्तत्रैव कल्प्यते। यस्मिन् कस्मिंश्चित् कारणे सत्यपि तत्र कारणान्तर-विरहश्चेन्नोपजायते कार्यम्। सर्वत्र समानेयं व्यवस्था। तस्मात् किञ्चिदेकं कारणं कारणान्तरापेक्षया नार्हत्यतिशयवद् भवितुम्। कारणसमुदायरूपा सन्निहिता चेत् सामग्री, नियमेन समुत्पद्यते कार्य्यम् सामग्र्यां सन्निहितायां निखिलानामेव कार-णानां नियमेन सन्निधानात्। एवञ्च फलसमुत्पादाविनाभाविसत्ताकत्वादिरूपावश्य-ककार्य्यजनकत्वात्मकस्य प्रतिकारणव्यक्त्यपेक्षया कल्पितस्यातिशयस्य सामग्र्यामेव कारणस॰दायरूपायां सत्त्वात् तस्या एव करणत्वस्य युक्तिसिद्धतया प्रमासामग्र्येव प्रमाणम्, न तु प्रत्येकं चक्षुरादीति जरन्नैयायिकानां न्यायमञ्जरीकृतामाकूतम्।

न च सामग्र्या निखिलकारणसमष्टिभूताया एकत्वेन सर्वेषाञ्च कारणानां तत्रैवान्तर्भावात् तदतिरिक्तापेक्ष्याभावात् किमपेक्षत्वमतिशयस्येति वाच्यम् ? सामग्र्याः कारणधर्मत्वेन नैव सा कारणानां स्वरूपाणि हन्तुमीष्टे। तस्मात्तदवस्थायामपि कारणानां स्वरूपसत्त्वात् तत्तद्व्यक्तिस्वरूपापेक्षयैवातिशयः शक्यते समुपादातुम्। एतेन प्रमितेरालम्बनस्यापि सामग्र्यन्तःपातितया प्रमात्रादेरपि तदन्तर्गततया प्रमितिनिरालम्बनत्वादिशङ्कापि निरस्ता।

ननु सर्वस्यैव दृश्यते व्यवहारः श्रोत्रेण शृणोमि चक्षुषा पश्यामीत्येवम्; नहि कश्चन प्रयुङ्क्ते सामग्र्या शृणोमि सामग्र्या पश्यामीति। ततश्चक्षुरादीनामेव करणत्वं युक्तम्, न तु सामग्र्या इति चेन्न; संहतिरूपायाः सामग्र्याः संहन्यमानवस्तुव्यतिरेकेण व्यवहारविषयत्वाभावादेव सामग्र्या पश्यामीत्यादिव्यवहारस्याभावात्। नहि तथा व्यवहारविरहे तस्याः करणत्वाभावो मूलम्। चक्षुषा पश्यामीत्यादिप्रयोगे चक्षुरादेः करणत्वेन व्यपदेशस्तु फलोपजननाविनाभाविस्वभावत्वरूपसामग्रीगतकरणधर्मसमारोपनिबन्धन इति ध्येयम्। एवञ्च फलायोगव्यवच्छिन्नं कारणं करणमिति करणलक्षणानुसारं प्रमायोगव्यवच्छिन्नं कारणं प्रमाणमित्येव प्रमाणलक्षणं समासतः सिद्धं भवति। गौतमीयसिद्धान्तेऽपि तदेव प्रमाणस्वरूपमिति कुसुमाञ्जलावुदयनाचार्य्यः स्पष्टमेव कारिकायामाह। यथा—

मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते॥ इति।

तदेतन्मतमन्यत्रापि परिगृहीतमुपलभ्यते। तथाह्यन्नंभट्टेन तर्कसंग्रहग्रन्थे "अनुमितौ व्याप्तिज्ञानं करणं परामर्शश्च व्यापारः" इति प्रसिद्धं सिद्धान्तमनभ्युपेत्य "फलायोगव्यवच्छिन्नं कारणं करणम्" इत्येतन्मतमुपजीव्यैव लिङ्गपरामर्शस्यानुमितौ करणत्वमुपदिष्टम्। यथा— "स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्" इति। तत्रैव दीपिकाख्यटीकायाम्—"व्यापारवत् कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्" इति यः सन्दर्भो वर्तते, तस्य व्याख्यानमाचक्षाणेनाख्यातं नीलकण्ठेन यथा—"इति मत इति। फलायोगव्यवच्छिन्नं कारणं करणमिति मते तु परामर्श एव करणमिति ध्येयम्" इति। फलायोगव्यवच्छिन्नं कारणमित्यस्यार्थो यथा तत्रैव भास्करोदयाख्यव्याख्यायाम्—"फलेन अनुमित्यात्मकेन अयोगः असम्बन्धस्तेन व्यवच्छिन्नम् अयुक्तम् अव्यवधानेन फलयुक्तमिति यावत्। तथा च साक्षात् कारणं करणं परामर्श एवेति फलितोऽर्थः" इति।

अत्रेदमवधेयम्—यत् फलायोगव्यवच्छिन्नं कारणं करणमिति सिद्धान्तमुपजीव्यैव नूनं जयन्तभट्टः सामग्र्याः करणत्वसिद्धान्तमुररीचकार। तत्र सिद्धान्तद्वयी

प्रचीनन्यायसम्प्रदायसिद्धा प्रतिपद्यते। तत्रैकः सिद्धान्तः "फलायोगव्यवच्छिन्नं कारणं करणम्" इति स्वीकारेण करणस्वरूपविषयकः, द्वितीयश्च सामग्र्या एव करणत्वम्, न तु सामग्रीघटकस्य कारणव्यक्तिविशेषस्य चक्षुरादेरिति प्रमाणस्य तत्स्वरूपानुसारेणैव कुसुमाञ्जलौ 'तन्मे प्रमाणं शिवः, इत्यत्र परमेशस्य शिवस्य प्रमाणत्वव्यहारः कृत उदयनाचार्य्येण। उपपादितश्च ग्रन्थारम्भे नियमेन समादरणीयं मङ्गलाचरणं न्यायदर्शनप्रथमसूत्रे महर्षिणा गौतमेन परमेशप्रतिपादकप्रमाणशब्दप्रयोगेण।

नव्यन्यायसम्प्रदाये तु तदेतत् सिद्धान्तद्वयमेव नाभ्युपगम्यते, तत्र व्यापारवत्कारणत्वस्य करणलक्षणत्वाच्चक्षुरादेः प्रत्येकश्च प्रत्यक्षादौ करणत्वस्याभ्युपगमात्। तदुक्तं कारिकावल्यां विश्वनाथेन—

> महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम्।
> विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः॥ इति।

तत्रैव सिद्धान्तमुक्तावल्याम्---"करणमिति—असाधारणं कारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्" इति। अनुमानस्थले "व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्" इति, उपमानस्थले—

> सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम्।
> वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते॥ इति,

शाब्दस्थले च "पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः" इति निबद्धं विश्वनाथेन। तत्र तत्र सर्वत्रैव करणस्य व्यापारं प्रदर्शयता विश्वनाथेन "व्यापारवत् कारणं करणम्" इति करणलक्षणे स्वीया सम्मतिः सूचिता, प्रत्येकमिन्द्रियादिकं करणत्वेन व्यपदिशता च प्रत्येकमिन्द्रियादिकमेव प्रत्यक्षादौ करणं न तु सामग्रीत्यप्युपक्षिप्तम्।

यद्यपि तत्त्वचिन्तामणिग्रन्थेऽनुमाननिरूपणप्रकरणे तत्र-- "व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः, तत्करणमनुमानम्, तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति वक्ष्यते" इति व्यापाररहितस्य लिङ्गपरामर्शस्य करणत्वबोधकं मणिकारवचनं विरुद्धतया भासते, तथापि परामर्शग्रन्थस्यान्तिमे भागे मणिकारेणैव निबद्धस्य "परामर्शस्य तु न व्यापारान्तरमस्ति चरमकारणत्वादिति न तत्करणम्" इत्यस्य "किन्तु व्याप्तिज्ञानं करणं परामर्शो व्यापारः" इत्यस्य च संवादमभिलक्ष्य तत्रत्य लिङ्गपरामर्शपदस्य व्याप्तिज्ञानमिति मथुरानाथेनार्थस्य विवरणान्न विरोध इति। तदुक्तं मथुरानाथेन—"तच्चेति। अनुमानञ्चेत्यर्थः। लिङ्गपरामर्शो व्याप्तिज्ञानम्, परामर्शस्य व्यापाराभावेनाकरणत्वात्" इति। अपि च नव्यन्यायपरमाचार्य्येण गदाधरभट्टाचार्येणापि अनुमिति-

प्रकरणे मणिदीधितिविवृतौ—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यत्रात्म-शरीरादिव्यावृत्तं प्रमित्यसाधारणकारणत्वमेव प्रमाणपदेन विवक्षितम्" इत्यनेन, ततः किञ्चिदुत्तरञ्च "फलायोगव्यवच्छिन्नव्यापारवत्कारणत्वं करणत्वम्, न तु कारणत्वमात्रम्। तथा सति छिदानुपधायककुठारादिव्यक्तेरपि तत्करणताप्रसङ्गेन तत्कुठारेण छिनत्तीति प्रयोगापत्तेः। तदर्थञ्च स्वनिरूपककार्य्यतावच्छेदकसम्बन्धेन कार्य्याधिकरणे तत्कार्य्योपधायकव्यापाराव्यवहितप्राक्क्षणावच्छेदेन स्वावच्छेदक-सम्बन्धेन वर्तते यत् तद्वृत्तित्वविशिष्टं कारणत्वम्। स्व कारणता" इत्यनेन च सन्दर्भेण व्यापारवत्कारणत्वस्यैव करणलक्षणत्व प्रतिपादितम्।

ननु चक्षुषा द्रव्यप्रत्यक्षजननस्थले लौकिकविषयत्वं कार्य्यतावच्छेदकसम्बन्धः कारणतावच्छेदकसम्बन्धश्च संयोगः। अत एवोक्तम् 'द्रव्यग्रहस्तु संयोगात्' इति। योऽसौ कारणतावच्छेदकः संयोगसम्बन्धः स एव तत्र व्यापारः, तदव्यवहितप्राक्-क्षणश्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगी तदुत्पत्तिक्षणप्रागभावाधिकरणसमय-प्रागभावानधिकरणीभूतक्षण एव। एवञ्च तस्य संयोगस्य तदव्यवहितपूर्वक्षणे कार्य्याधिकरणे द्रव्यरूपे विषये सत्त्वाभावात् तेन सम्बन्धेन द्रव्ये चक्षुःसत्त्वस्यानुप-पत्तेः कथं प्रकृते चक्षुषः करणत्वनिर्वाहः? तत्कार्य्योपधायकव्यापाराव्यवहितप्राक्-क्षणावच्छेदेन कार्य्याधिकरणे वृत्तित्वस्य करणत्वाभिमतपदार्थगतस्य तद्घटकत्वा-दिति चेदत्र निपुणाः प्राहुः. यथा—प्रकृतेऽव्यवहितप्राक्क्षणत्वमुत्पत्तिक्षणसाधारणं विवक्षितम्। तच्च तादृशव्यापारप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तादृशव्यापाराधिकरणसमयध्वसानधिकरणक्षणत्वम्। इत्थञ्च तदुत्पत्तिक्षणपूर्वक्ष-णस्येव तदुत्पत्तिक्षणस्यापि तदव्यवहितप्राक्क्षणपदेन लाभान्न प्रागुक्तरीत्या चक्षुषः प्रकृतकरणत्वानुपपत्तिः। निरुक्तविवृत्युक्तं फलायोगव्यवच्छिन्नत्वं व्यापारांशे वि-शेषणम्। तस्यैव विवरणम् 'तत्कार्योपधायके' ति। अनेनैव विशेषणेन छिदानुप-धायके कुठारे छिदाकरणत्वातिप्रसङ्गो वार्य्यते। एवमन्यत्रापि नव्यानां तादृशकरणत्व-सिद्धान्तानुसरणमनुसन्धेयम्।

सामग्र्याः करणत्वसिद्धान्ते तस्याः कस्यापि व्यापारस्याभावेन व्यापारव-त्कारणत्वलक्षणस्य नव्यमतानुमतकरणत्वस्य तत्र कथमप्युपपादयितुमशक्यतया सामग्रीकरणतावादो नव्यमतबाह्य इति ध्येयम्। तेन जरन्नैयायिकजयन्तभट्टस-म्मतसामग्रीकरणतावादस्य प्राचीनन्यायसिद्धान्ततया व्यक्तिविशेषकरणतावादस्य च नव्यन्यायसिद्धान्ततया तन्मूलकं नव्यन्यायप्राचीनन्याययोः सैद्धान्तिकं पृथक्त्वं सिद्धमेवेति बोध्यम्।

नव्यप्राचीनन्याययोरन्यत्राप्यस्ति वैषम्यं यथा— "हेतुर्ना कारणं बीजम्" इति कोषात् कारण एव हेतुशब्दस्य शक्तिः सिद्धा। तस्य हेतुज्ञानकारणतापक्षे वह्न्या-द्यनुमितौ धूमादेर्हेतुत्वव्यवहारे हेतुशब्दस्य जनकज्ञानविषयरूपार्थे लक्षणापत्तिदो-

षपरिजिहीर्षया केचित् प्राचीना अनुमितौ ज्ञायमानस्य हेतोः कारणत्वं कल्पयन्ति परामर्शविरहदशायां हेतोर्धूमादितो वह्न्याद्यनुमितिप्रसङ्गभङ्गाय च परामृश्यमानत्वेनैव हेतोः कारणत्वमभ्युपगच्छन्ति । तत्प्रकारो यथा —पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नविधेयकानुमितिं प्रति ज्ञानीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नप्रकारतावत्त्वेन तथा ज्ञानीयपर्वतत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नविशेष्यतावत्त्वेन धूमस्य कारणत्वम् । तेन वह्निविधेयकपर्वतपक्षकधूमलिङ्गकानुमितौ-वह्निव्याप्यधूमवान् पर्वतः, वह्निव्याप्यो धूमः पर्वत इत्येवं पक्षविशेष्यकव्याप्यप्रकारकपरामर्शस्य तथा पक्षप्रकारकव्याप्यविशेष्यकपरामर्शस्य कारणत्वमुपपद्यते । अप्रामाण्यज्ञानास्कन्दितज्ञानादिप्रतिषेधार्थमप्रामाण्यज्ञानाभावादीनां ज्ञानांशे निवेशो नियमेन यथायथमपेक्षित एव । अथवा अप्रामाण्यज्ञानाद्यभावविशिष्टज्ञानीयाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नपक्षतावच्छेदकावच्छिन्नविषयतानिरूपितहेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नविषयतावत्त्वेनैकरूपेणैव द्विविधपरामर्शस्थले हेतोः कारणत्वं कल्पनीयम् । निरुक्तप्रकारतावत्त्वेन निरुक्तविषयतावत्त्वेन च रूपेण हेतोः प्रकृतकारणत्वस्य कल्पनात् प्रदर्शितरूपपरामर्शसत्त्वदशायामेव प्रकृते हेतौ तथा तथा विषयतायाः सत्त्वात् परामर्शाभावदशायां न प्रकृतानुमितेरुत्पत्तिप्रसङ्गः । निरुक्तकार्य्यकारणभावे कालिकविशेषणताया एव कार्य्यतावच्छेदककारणतावच्छेदकसंसर्गते स्वीकार्य्ये । एकपुरुषीयपरामर्शदशायामपरपुरुषस्यानुमितिवारणाय कार्य्यभूतायामनुमितौ कारणतावच्छेदककोटिप्रविष्टज्ञानांशे तत्तत्पुरुषीयत्वमपि निवेश्यम् ।

नव्यनैयायिकास्तु तमिमं लिङ्गकारणतासिद्धान्तं विविधदोषानुविद्धं पश्यन्तो नानुमन्यन्ते । तथाहि -कार्य्यसमुत्पादे कारणस्य कार्य्याव्यवहितपूर्ववर्तित्वं समपेक्षितं नियमेन । अनन्यथासिद्धत्वे सति नियतपूर्ववर्तित्वस्य कारणलक्षणत्वात् । एवञ्च वर्तमानधूमादिलिङ्गकानुमितिस्थले प्रकृतानुमितिरूपकार्य्याव्यवहितपूर्वं तादृशधूमादिहेतोः सत्त्वेऽप्यतीतानागतधूमादिहेतुकानुमितिस्थले वर्तमानप्रकृतानुमित्यव्यवहितपूर्वः निरुक्तधूमादिहेतोः कार्य्याधिकरणे सत्त्वासम्भवेन व्यभिचारस्य दुर्वारत्वात् । एतदेवोक्तं मणिकृता परामर्शग्रन्थे, यथा—"अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनान्न लिङ्गं तद्धेतुः, व्यापारपूर्ववर्तितयोरभावात्" इत्यादि । "लिङ्गं तु करणं नहि, अनागतादिलिङ्गेन न स्यादनुमितिस्तदा" इत्यादिग्रन्थेन विश्वनाथादिभिरपि कृतस्तत्सिद्धान्तप्रतिषेधः । एवं च ज्ञायमानस्य हेतोरनुमितिकारणत्वसत्त्वासत्त्वसिद्धान्तभेदोऽपि नव्यन्यायप्राचीनन्यायवैषम्यं साधयति ।

ज्ञायमानस्य हेतोः कारणत्वमिव केचित् प्राञ्चो विपरीतनिश्चयविषयतापन्नस्य वह्न्यभावादेर्विषयस्य विपरीतबुद्धिं प्रति प्रतिबन्धकत्वं कल्पयन्ति। तत्प्रकारो यथा--वह्नित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धिं प्रति ज्ञानीयह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारतावत्त्वेन प्रतिबन्धकता। अत्रापि प्रतिबध्यज्ञानांशेऽनाहार्य्यत्वादिकं प्रतिबन्धककोटयन्तर्गतज्ञाने च अप्रामाण्यज्ञानाभावादिकं निवेशनीयम्। तत्तत्पुरुषीयत्वस्य ज्ञानद्वयांशे तथा प्रतिबध्यतावच्छेदकसम्बन्धप्रतिबन्धकतावच्छेदकसम्बन्धतया कालिकविशेषणताया निवेशोऽपि कार्य्यः। प्रकारतावच्छेदकादिसम्बन्धनिवेशनमपि यथायथं करणीयम्। अत्रापि विषयताया बोधसमानसमयतया विपरीतनिश्चयासत्त्वदशायां न वह्न्याभावादेर्विषयस्य वह्न्यादिप्रकारकज्ञानप्रतिबन्धकत्वप्रसङ्गः, तदानीं वह्न्यभावादौ तादृशविषयताया अभावेन तद्रूपेण तस्य प्रकृतप्रसङ्गस्थले विरहात्। एतन्मतमपि न नवीनानामनुमतम्। यतः प्रतिबन्धकं नाम यत्र क्षणे यत्र प्रतिबन्धकतावच्छेदकेन संसर्गेण तिष्ठति तदव्यवहितोत्तरक्षणे एव तत्र प्रतिबध्यतावच्छेदकसंसर्गेण तत्प्रतिबध्यं ज्ञानादिकं नोत्पद्यते। यत्र क्षणे तस्य प्रतिबन्धकस्याभावस्तदुत्तरे चोत्पद्यते। इत्थञ्च यत्र अतीतानागतादिविषयको विपरीतनिश्चयः, तद्विषयीभूतोऽतीतानागतादिः पदार्थः प्रतिबन्धकत्वेनाभिमतस्तत्र अतीतानागतादेर्विषयस्य साम्प्रतिके विपरीतनिश्चयक्षणे विरहात् तादृशविपरीतनिश्चयाव्यवहितोत्तरं प्रतिबध्यत्वाभिमतज्ञानोत्पत्तिप्रसङ्गः। अत एव ज्ञायमानस्य विषयस्य प्रतिबन्धकत्वमपि ज्ञायमानस्य हेतोरनुमितिकारणत्ववदेव न शक्यं कल्पयितुम्। ज्ञानस्य तथात्वे तु अतीतानागतादेर्विषयस्य तदानीमभावेऽपि तद्विषयकज्ञानसत्त्वे तदानीं बाधकाभावादेव न निरुक्तानिष्टप्रसङ्गः। किञ्च, ज्ञायमानस्य हेतोरनुमितिहेतुताकल्पे तथा ज्ञायमानस्य विपरीतार्थस्य ज्ञानप्रतिबन्धकताकल्पेऽतिप्रसङ्गभङ्गाय तत्तत्पुरुषीयत्वनिवेशस्य ज्ञानांशेऽपेक्षणीयत्वेन पुरुषभेदनिबन्धनकार्य्यकारणभावादिगौरवमपि तत्तत्कल्पपरित्यागे बीजमनुसन्धेयम्।

अन्यदपि न्यायद्वयस्य मिथो भेदसाधकं यथा—नव्यनैयायिका व्याप्यपक्षोभयवैशिष्ट्यावगाहिपरामर्शस्यानुमितिकारणतामभ्युपगच्छन्ति। तदुक्तं पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमनुमितिहेतुरिति परामर्शमूलव्याख्याने मथुरानाथेन—"पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्यव्याप्यत्वावच्छिन्नविषयताशालिनिश्चयत्वमेवानुमितिकारणतावच्छेदकमिति भावः" इति। तत्र केचित् प्राचीननैयायिका मन्यन्ते यत्—"निरूक्तकारणतावच्छेदकगर्भप्रविष्टा साध्यव्याप्तिर्हेतुव्यापकसाध्यसामानाधिकरण्यरूपा, साध्याभावादिघटितव्याप्त्यन्तराणां केवलान्वयिसाध्यकसद्धेतावनुपपत्तेः। तत्सामानाधिकरण्यांशमनन्तर्भाव्य साध्ये हेतुव्यापकताज्ञानमेवानुमितिहेतुरित्येव लाघवात् कल्पनीयम्," इति। तदुक्तं मणिकारेण परामर्शग्रन्थे—

"अन्ये तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वम् तत्सामानाधिकरण्यञ्च व्याप्यत्वम्, तथा च लाघवाद् व्यापकताज्ञानमनुमितिहेतुः। साध्यस्य पक्षधर्मव्यापकताज्ञानञ्च परामर्शः। न तु साध्यव्याप्तस्य पक्षधर्मताज्ञानं साध्यव्याप्यवत्पक्षज्ञानं वा गौरवात्। अत एव यो यो धूमवान् सोऽग्निमानित्युदाहरणवाक्ये साध्यायोगव्यवच्छेदेन धूमव्यापकता वह्नेरुपदर्श्यते। अन्यथा वह्निमानेव धूमवानित्यन्ययोगव्यवच्छेदेनोदाहरणशरीरं स्यात्। दोषोऽपि व्यभिचारादिर्न पक्षधर्मव्यापकं साध्यमित्येवोद्भाव्य इति।

उक्तमते लाघवमनुसन्धाय अनुभवापलाप एतदपेक्षयापि लाघवातिशयस्य साध्यवदन्यावृत्तित्वादिज्ञानस्यानुमितिहेतुताकल्पे सम्भवात् कल्प एष नैव न्याय्यतामावहति। अत एव लाघवानुरोधेन नानुभवापलापेन कोऽपि कल्पः स्वीकार्य्य इति नव्यनैयायिकास्तन्मतं नानुमन्यन्ते। तदुक्तं परामर्शरहस्ये मथुरानाथेन—"अत्रेदमस्वरसबीजम्—यद्यनुभवमपलप्य लाघवाद् व्यापकतापरामर्श एव हेतुरुपेयते, तदाऽस्मादप्यतिलघुतया साध्यवदन्यावृत्तित्वरूपव्याप्यत्वपरामर्श एव हेतुरुचितः। केवलान्वयिनि च तद्भ्रमादेवानुमितिर्नान्यथा। न चैवं यो यो धूमवानित्युदाहरणानुपपत्तिरिति वाच्यम्, वह्निमानेव धूमवानित्यस्यैवोदाहरणत्वात्। न चैवं कथकसम्प्रदायविरोध इति वाच्यम्, युक्तेर्दार्ढ्यें सति तस्याकिञ्चित्करत्वात्। प्राचीनैरेतत् सूक्ष्मानालोकनेनैव तदभ्युपगमात्। अन्यथा तवापि वह्निव्याप्यधूमवानयमित्युपनयविरोधात् सर्वतवृत्तिधूमव्यापको वह्निरित्येतस्यैवोचित्वादिति दिक्" इति।

तार्किकशिरोमणिरपि केवलान्वय्यनुमानग्रन्थे हेतुव्यापकताज्ञानस्यानुमितिहेतुतामतं दृढमेव निराचकार। यथा– 'व्यापकताज्ञानादेवानुमितिरिति च नानुभविकम्, न वा यौक्तिकम्। ज्ञानत्वत्वादिना ज्ञानत्वादेर्व्यापकतावच्छेदकत्वग्रहे ज्ञानादिमानित्यनुमितेरयोगात्। अन्यथा जातित्वेनानुभवत्वव्यापकगुणत्वव्याप्यजातित्वादिना वा तथात्वग्रहेऽपि तत्प्रसङ्गात्" इति।

अत एव साध्ये हेतुव्यापकताज्ञानस्य साध्यतावच्छेदके हेतुव्यापकतावच्छेदकत्वज्ञानस्य वा प्राचीनमतविशेषसिद्धमनुमितिहेतुत्वं न नव्यन्यायसम्प्रदायानुमतमिति तदभ्युपगमानभ्युपगमकृतमुभयोः सम्प्रदाययोर्वैलक्षण्यं सिद्धम्।

अन्यत्राप्यास्ति सैद्धान्तिकं पार्थक्यं नव्यन्यायप्राचीनन्याययोः। तद्यथा—नव्यन्यायसिद्धान्ते समानप्रकारकयोरेव भावाभावज्ञानयोर्मिथः प्रतिबध्यप्रतिबन्धकभावः स्वीक्रियते। समानप्रकारकत्वं चाभावांशपरिहारेण बोद्धव्यम्। तेन वह्निमान् पर्वत इति ज्ञानस्य वह्न्यभाववान् पर्वत इति ज्ञानस्य च मिथः समानप्रकारकत्वोपपत्त्या मिथः प्रतिबध्यप्रतिबन्धकभावोपपत्तिः। तेन च वह्निमान् पर्वत इति ज्ञानस्य यथा वह्न्यभाववान् पर्वत इति ज्ञानेन सह मिथः प्रतिबध्यप्रतिबन्धकभावः, न

तथा वह्निः पर्वतवृत्तित्वाभाववान् वह्निः पर्वतनिष्ठाभावप्रतियोगीत्यादिज्ञानैः सममिति नव्यन्यायमतम्। तन्मते वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकबुद्धिं प्रति वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयस्य प्रतिबन्धकत्वम्, वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धिं प्रति च वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वमित्येतन्मात्रम्।

प्राचीनन्यायसिद्धान्ते तु वह्निमान् पर्वत इति बुद्धिर्यथा वह्न्यभाववान् पर्वत इति बुद्धिं प्रतिबध्नाति, तथैवानुभवबलाद् वह्निः पर्वतवृत्तित्वाभाववान् वह्निः पर्वतनिष्ठाभावप्रतियोगीत्यादिबुद्धिमपि। अतस्तत्र तत्र विभिन्नरूपप्रकारताविशेष्यतादिसमुल्लेखेन पृथक्तया एकैकप्रतिबध्यप्रतिबन्धकभावो निर्वचनीयः। सर्वत्रैव प्रकारतावच्छेदकधर्मसम्बन्धनिवेशोऽवहितैः स्वयमूहनीयः। तत्र प्रतिबध्यतावच्छेदकगर्भेऽनाहार्य्यत्वदोषविशेषाजन्यत्वलौकिकसन्निकर्षाजन्यत्वानां तथा प्रतिबन्धकतावच्छेदकगर्भेऽनाहार्य्यत्वाप्रामाण्यज्ञानाभावादीनां निवेशः सुतरामावश्यक एव।

उक्तप्राचीनन्यायसिद्धान्तमनुसृत्यैव पक्षताप्रकरणे प्राचीनमतसिद्धसंशयपक्षताकल्पे वह्निमान् पर्वत इत्यद्याकारानुमितिस्थले पक्षविशेष्यकसाध्यप्रकारकनिश्चयनिवर्त्यताघटितपक्षतालक्षणस्य पर्वतो वह्निमान्न वेति संशयवदेव वह्निः पर्वतवृत्तिर्न वा, वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्यादिनानाविधसंशयेष्वेव तार्किकाः सत्त्वमुपपादयन्ति। समानप्रकारकयोरेव भावाभावज्ञानयोर्मिथः प्रतिबध्यप्रतिबन्धकभावाभ्युपगमे वह्निमान् पर्वत इत्यादिरूपपक्षविशेष्यकसाध्यप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायास्तत्समानप्रकारके पर्वतो वह्निमान्न वेत्यादिरूपैकैकविधसंशय एव सत्त्वेन तन्मात्रस्यैव तत्र तत्र पक्षतात्वं स्यात्, नेतरेषां वह्निः पर्वतवृत्तिर्न वेत्यादीनामप्यसमानप्रकारकाणां संशयानाम्। परन्तु संशयपक्षतावादिमते तादृशतादृशानुमितिस्थले तत्र तत्र पक्षतात्वमिष्टमेव तार्किकाणाम्।

तदुक्तं मथुरानाथेन पक्षतारहस्ये—'समवायसम्बन्धेन साध्यसन्देहवत्त्वं पक्षत्वमित्यर्थः। अनुमितिजनकस्यास्य पक्षपदप्रवृत्तिनिमित्तत्वाभावेन पक्षानिष्ठत्वेऽपि क्षतिविरहात्। साध्यसन्देहपदं च पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकसम्बन्धसंसर्गकसाध्यतावच्छेदकावच्छिन्नप्रकारकनिर्णयनिवर्तनीयसंशयपरम् तेन पक्षः साध्यवान्न वा साध्यं पक्षे न वा, साध्यं पक्षवृत्ति न वा, साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्यादीनां सर्वेषां सन्देहानामप्रसिद्धसाध्यकस्थले इतरत् पृथिवीनिष्ठान्योन्याभावप्रतियोगि न वेत्यादिसाध्यप्रतियोगिविशेष्यकसन्देहानाञ्च संग्रहः, सन्देहपक्षतावादिमामेतदन्यतमसन्देहादेवानुमितिस्वीकारात्। न च साध्यं पक्षे न

वेत्यादिसंशयो न तादृशनिर्णयनिवर्त्यः, समानप्रकारकनिर्णयस्यैव प्रतिबन्धकत्वादिति कुतस्तेषां संग्रह इति वाच्यम्, सन्देहपक्षताावादिनां प्राचां भिन्नप्रकारकनिर्णयस्यापि प्रतिबन्धकत्वात्'' इति। एवञ्च ज्ञानीयप्रतिवध्यप्रतिवन्धकभावे तथा मतभेदोऽपि प्राचीननव्यन्याययोः सैद्धान्तिकं पृथक्त्वं समुपपादयति।

एतदनुषङ्गेण प्राचीननव्यन्याययोरन्यदपि पार्थक्यप्रयोजकमात्मानं लभते, यथा—प्राचीनैः प्रकृतपक्षे प्रकृतसाध्यवत्तानिश्चयनिवर्त्यसंशयरूपा पक्षता स्वीकृता, नव्यन्यायतन्त्रप्रजापतिर्मणिकारस्तु तन्मतं दूषयित्वा सिषाधयिषाविरहविशिष्टसिद्धयभावरूपामेव पक्षतां नव्यन्यायतन्त्रसिद्धान्तरूपेण परिजग्राह। नव्यन्यायसम्प्रदाये सैव पक्षता निरूढपदा वरीवर्त्ति। उत्तरोत्तरं सूक्ष्मधियां विचारणया तत्र किञ्चिद्विशेषोदयेऽपि तत्परिणतिरूपैव तत्कल्पनेति तत्रैव नव्यन्यायविदुषां सविशेषो निर्भर इति। एवञ्च ज्ञानीयप्रतिवध्यप्रतिबन्धकभावे प्रदर्शितपूर्वसिद्धान्तभेद इव पक्षतास्वरूपविषये तथा सिद्धान्तभेदोऽपि द्वयोर्न्यायसम्प्रदाययोः पारस्परिकं पृथक्त्वं प्रयोजयति।

एवमेव प्रकरणसमहेत्वाभासमधिकृत्याप्यस्ति प्राच्यनव्यन्याययोः सैद्धान्तिकं पृथक्त्वम्। तथाहि प्राचीनन्यायमते तुल्यबलविरोधिसाध्यसाधकपरामर्शकालीनप्रकृतपरामर्शविषयत्वं स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा प्रकरणसमः। तेन यदा प्रकृतसाध्यसाधकपरामर्शस्य विरोधिसाध्यसाधकपरामर्शस्य च सहैव संवलनम्, एकत्राप्रामाण्यज्ञानादिना च नोभयोः परामर्शयोर्विषमबलत्वम्, तदैव प्रकरणसमो हेत्वाभासः। न तु तादृशतुल्यबलपरामर्शद्वयासंबलनदशायाम्। तत्संबलनदशायां त्वन्यदा सद्धेतुरप्याभासमानो हेतुः। तन्मते प्रकरणसमस्यानित्यदोषत्वम्। तदुक्तं न्यायसूत्रवृत्तिकृता विश्वनाथेन —'अयञ्च दशाविशेषे दोष इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेकेत्यवधेयम्'' इति।

नव्यन्यायनये तु साध्याभावव्याप्यवत्पक्षः प्रकरणसमहेत्वाभासः। तस्यैव सत्प्रतिपक्ष इति संज्ञान्तरम्। नव्यनये स एष नित्यो दोषः, दशाविशेषानधीनत्वात्। तदुक्तं हेत्वाभाससामान्यनिरूक्तिरहस्ये मथुरानाथेन "साध्याभावव्याप्यवान् पक्षः सत्प्रतिपक्षः,वृत्तिमत्त्वादियथाकथञ्चित्सम्बन्धेन तद्वान् हेतुः सत्प्रतिपक्षितः। एतज्ज्ञानञ्च साक्षादेवानुमितिविरोधि, तदभावनिश्चयवत् तदभावव्याप्यनिश्चयस्यापि तद्विशिष्टबुद्धिप्रतिबन्धकत्वात्। उदाहरणन्तु ह्रदो वह्निमान् धूमादित्यादि बाधितमात्रमेव। सद्धेतुस्तु कदाचिदपि न सत्प्रतिपक्षितः। बाधितस्तु कदापि नासत्प्रतिपक्षित इति तु नव्याः" इति।

प्राचां नैयायिकानां मतमपि तत्रैव प्राह मथुरानाथो यथा—प्राञ्चस्तु "समानबलप्रकृतपक्षविशेष्यकसाध्याभावव्याप्यवत्स्वपरामर्शकालीनप्रकृतपक्षविशेष्यकसा-

ध्यव्याप्यवत्त्वपरामर्शः सत्प्रतिपक्षः। विषयतासम्बन्धेन तद्वान् हेतुः सत्प्रतिपक्षितः। अयञ्च स्वरूपसन्नेव साक्षादनुमितिविरोधी अत एव सद्धेतुरपि साध्याभावव्याप्यवत्तापरामर्शकाले सत्प्रतिपक्षितः। बाधितोऽपि तदभावदशायां कदाचिदसत्प्रतिपक्षित इत्याहुः" इति। एवमसाधारणहेत्वाभासविषयेऽपि नव्यप्राचीनमतयोर्वैषम्यमनुसन्धेयम्।

सत्प्रतिपक्षहेत्वाभासे नव्यप्राचीनमतयोस्तथा वैषम्यमनुसन्धायैव सत्प्रतिपक्षप्रकरणे नव्यमतानुसारं तार्किकशिरोमणी रघुनाथः सत्प्रतिपक्षविभाजकलक्षणमाह। यथा--"प्रकृतपक्षसाध्यवैशिष्टयग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्टयग्रहविरोधिरूपोन्नायकत्वम्" इति। एतद्विशेषविवरणं गदाधरविवृत्यादावनुसन्धेयम्।

न्यायसम्प्रदायद्वयस्यापरमपि सैद्धान्तिकं पार्थक्यं यथा--वह्निव्याप्यधूमवान् पर्वतः वह्निव्याप्यालोकवान् पर्वत इत्यादिनानाप्रकारपरामर्शेभ्य एव पर्वतादौ वह्न्यादिविधेयकानुमितेरनुभवसिद्धतया तादृशतादृशहेतुकनिखिलपरामर्शानामेव तादृशानुमितिहेतुत्वस्य कल्पनात् तेषु यत्किञ्चिदेकविधपरामर्शेन तादृशानुमित्युत्पादे विभिन्नप्रकारकापरपरामर्शरूपकारणविरहप्रयुक्तव्यभिचारस्य वारणाय वह्निव्याप्यधूमपरामर्शाव्यवहितोत्तरजायमानतादृशानुमितिं प्रति वह्निव्याप्यालोकपरामर्शत्वेन नव्याः कारणतां कल्पयन्ति। प्राचीनन्यायपरमाचार्य्या उदयनाचार्य्यास्तु परामर्शकार्य्यतावच्छेदककोटौ तादृशतादृशपरामर्शाव्यवहितोत्तरजायमानत्वरूपगुरुतरधर्मनिवेशमकुर्वाणाः साध्यव्याप्यहेतुविशेषाणां तत्र तत्रानुमितौ पक्षांशे धर्मितावच्छेदकविधया नियमेन भानमङ्गीकृत्य लिङ्गोपहितलैङ्गिकभानरूपविशेषपक्षपातिनः साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्येवमेव सर्वत्र नियमेनानुमितिमनुमन्यमानाः परामर्शविशेषाणां कार्य्यतावच्छेदककोटौ साध्यव्याप्यहेतुविशेषविषयकत्वप्रवेशनेनैव निरुक्तव्यभिचारं निवारयन्ति।

नव्यास्तु तन्मते विविधं दोषं परामृशन्तो नियमेनानुमितेस्तथाकारत्वं नानुमन्यन्ते। तथाहि----नियमेनानुमितेस्तथाकारत्वस्वीकारे पक्षतावच्छेदकावच्छेदेन साध्यानुमितिस्थले साध्यतावच्छेदकसंसर्गतावच्छेदकगर्भे साध्यांशे धर्मितावच्छेदकैकदेशव्यापकत्वभानमवश्यं स्वीकार्य्यतां यायात्, तच्च सुतरामप्रामाणिकम्। धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते, न तु तदेकदेशावच्छिन्नत्वमपीति नियमात्। अथ च निरुक्तलिङ्गोपहितलैङ्गिकभानवादिमते धर्मितावच्छेदकैकदेशव्यापकत्वस्य संसर्गांशे भानानङ्गीकारे यत्र शुद्धपर्वतत्वाद्यवच्छेदेन साध्यवत्तानिश्चयस्तत्र सामानाधिकरण्येन बाधनिश्चयसाध्यनिश्चययोः सत्त्वेऽपि पक्षे साध्यानुमितिप्रसङ्गः। सामा-

नाधिकरण्येन सिद्धेः सामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन बाधनिश्च-यस्य चावच्छेदावच्छेदेनानुमितिं प्रति प्रतिबन्धकत्वेन सामानाधिकरण्येन साध्य-निश्चयस्य प्रतिवध्यतावच्छेदककोटौ धर्मितावच्छेदकव्यापकत्वानवच्छिन्नसंसर्गता-कत्वस्य संयोगत्वादिमात्रावच्छिन्नसंसर्गताकत्वस्य वा निवेशेन सामानाधिकरण्येन बाधनिश्चयप्रतिवध्यतावच्छेदककोटौ च पर्वतत्वादिव्यापकत्वस्य प्रवेशात् साध्य-व्याप्यहेतुमान् पक्षः साध्यवानित्येवंरूपाया अवच्छेदावच्छेदेन परामर्शोत्तरं जायमा-नाया अनुमितेः प्रकृतसिद्धिबाधनिश्चययोः कस्यापि प्रतिबध्यतावच्छेदकानाक्रान्त-त्वेन तत्रानुमितिर्न शक्यते बाधितुम्। अतः सामानाधिकरण्येन साध्यनिश्चयस्य सामानाधिकरण्येन बाधनिश्चयस्य च सत्त्वे पर्वतत्वाद्यवच्छेदेन परामर्शोत्तरमनुमिते-र्वारणायैव संसर्गांशे धर्मितावच्छेदकैकदेशव्यापकत्वभानमभ्युपगन्तव्यम्। तदभ्युप-गमे च प्रकृतानुमितेः पर्वतत्वादिरूपैकदेशव्यापकत्वावच्छिन्नसंसर्गताकत्वघटितसामा-नाधिकरण्यावगाहिबाधनिश्चयप्रतिवध्यतावच्छेदकधर्माक्रान्तत्वेन नातिप्रसङ्गः।

न चैवं निरुक्ताचार्य्यमते परामर्शानुमित्योः कार्य्यकारणभावे महता लाघवेन वरमभ्युपेयतां लिङ्गोपहितलैङ्गिकभानं तदनुरोधेन च धर्मितावच्छेदकैकदेशव्यापक-त्वभानं संसर्गकोटौ लाघवातिशयस्य वस्तुसाधकताया बहुत्रैव न्यायनये सिद्धत्वादिति वाच्यम्, द्रव्यं वह्निमद् धूमादित्यादिस्थले वह्निव्याप्यधूमवद् द्रव्यं वह्निमदित्यादि-प्रतीतिषु भ्रमत्वापत्तेः। न च तत्र लिङ्गोपहितलैङ्गिकभानमभ्युपगच्छतामाचार्य्याणां मते भ्रमत्वमिष्टमेवेति वाच्यम्, तादृशस्थले तन्मते तत्र बाधस्वीकारात्। अत्र च नीलभूतलं घटाभाववदिति निर्णयदशायां रक्तभूतलं घटवदिति ज्ञानानुदयप्रसङ्गः। एकदेशव्यापकत्वावच्छिन्नसंसर्गतास्वीकारेण तस्य भूतलत्वावच्छेदेन घटाभाववत्ता-ज्ञानसमशीलत्वादित्यप्येकदेशव्यापकत्वस्वीकारे बाधकम्।

धर्मितावच्छेदकैकदेशव्यापकत्वावच्छिन्नसंसर्गताया अभ्युपगमे कल्पनागौरव-मप्यापतति। यथा—तादृशसंसर्गतायाः स्वीकारे नीलपर्वतत्वावच्छिन्नविशेष्यिकायां पर्वतत्वमात्रावच्छिन्नविशेष्यिकायां चानुमितौ तुल्यतयैव संसर्गांशे पर्वतत्वव्यापक-त्वस्य भानेन पर्वतत्वावच्छेदेनानुमितिस्थल एव नीलपर्वतत्वावच्छिन्नविशेष्यकत्वप-र्वतत्वमात्रावच्छिन्नविशेषकत्वादिभेदेनानेककार्य्यकारणभावकल्पना कार्य्या। तादृश-संसर्गताया अस्वीकारपक्षे तु पर्वतत्वावच्छेदेनानुमितेः पर्वतत्वमात्रावच्छिन्नविशेष्य-कत्वनियमेनैकविध एव तत्र कार्य्यकारणभावः परामर्शानुमित्योरिति महालाघवम्। एतत् सर्वमालोच्यैव नव्यास्तथा धर्मितावच्छेदकैकदेशव्यापकत्वावच्छिन्नसंसर्गतां नाङ्गीकुर्वन्ति। न चाचार्य्यमतेऽप्यन्वयव्याप्तिव्यतिरेकव्याप्तिज्ञानयोर्व्यभिचार-वारणाय परामर्शकार्य्यतावच्छेदकेऽव्यहितोत्तरत्वनिवेशनमपरिहार्य्यमिति वाच्यम्, साध्यवदन्यावृत्तित्वरूपान्वयव्याप्तिमात्रस्यैवानुमितिप्रयोजकत्वाभ्युपगमेन तत्परि-

हारस्य सुकरत्वात् । इत्थं चात्र बहुष्वेव सिद्धान्तेषु मतद्वयस्य पृथक्त्वं व्यवतिष्ठते । तत्तत् सुधीभिरवधानेन बोद्धव्यम् ।

पदस्वरूपनिर्णयेऽपि नव्यप्राचीननैयायिकसम्प्रदाययोः सिद्धान्तगतो भेदो दृश्यते । यथा--"ते विभक्त्यन्ताः पदम्" इति न्यायसूत्रं प्राचीनन्यायसम्प्रदायानुमतं पदलक्षणमाह । तत्र भाष्यमपि--"यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति । विभक्तिर्द्वयी—नामिकी आख्यातिकी च, ब्राह्मणः, पचतीत्युदाहरणम्" इति प्राह । एतेन सुप्समभिव्याहृतस्यैव नाम्नः तिङ्समभिव्याहृतस्यैव धातोश्च पदत्वमुपदिष्टम् । तच्च वैयाकरणानामनुमतमपि नानुमतं नव्यनैयायिकानाम्, तैर्वृत्तिमत एव पदत्वस्य स्वीकारात् । तन्मते पचतीत्यत्र नैकं पदम्, किन्तु पदद्वयम् । विक्लित्तिजनकव्यापाररूपार्थे वृत्तिमान् पच्धातुरेकं पदम्, कृतिरूपार्थे वृत्तिमान् तिङ्प्रत्ययश्चापरं पदम्, मिथः सम्भूय विशिष्टार्थप्रतिपादकतया चानयोर्वाक्यत्वम् । नव्यनैयायिको विश्वनाथस्तु न्यायसूत्रेण सह नव्यन्यायसिद्धान्तस्य विरोधपरिहाराय विभक्त्यन्तपदस्य 'विभक्तिर्वृत्तिः, अन्तः सम्बधः, तेन वृत्तिमत्त्वं पदत्वम्" इत्येवमर्थनिर्णयेन मतद्वयस्य मिथः संवादमुपपादयामास । तथापि सूत्रभाष्यसम्प्रदायस्यैव प्रसिद्धप्राचीनन्यायसम्प्रदायत्वेन ग्रहीतुमुचितत्वात् प्रकृते विषये प्राचीननव्यन्यायसम्प्रदाययोः सिद्धान्तवैषम्यमेव स्वीकार्यम् ।

सिद्धान्तमुक्तावलीकारविश्वनाथप्रमुखास्तान्त्रिका मङ्गलाचरणस्य फलविषयेऽपि प्राचीननव्यसिद्धान्तयोर्वैषम्यमाहुः । तद्यथा--'अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र फलजिज्ञासायां सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते ... विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः । नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्" इति ।

विशेषपदार्थस्वीकारेऽपि दृश्यते प्राचीननव्यन्यायसिद्धान्तयोर्वैषम्यम् । तद्यथा – प्रमेयसूत्रे भाष्यकारेण वात्स्यायनेन—"अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्" इत्यनेन कृतो विशेषपदार्थाभ्युपगमः श्रूयते । तेन विशेषपदार्थः प्राचीनन्यायानुमत इति सिद्धम् । मुक्तावलीकाराणाम् "नवीनास्तु विशेषेऽतिरिक्ते मानाभावः, यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपीत्याहुः" इति वचनेन तत्र विशेषपदार्थे नव्याननुमतत्वमुपलभ्यते । तदेवं नव्यप्राचीनन्याययोरत्रापि प्रतिपद्यते विशेषः ।

किञ्च, तार्किकशिरोमणी रघुनाथो नाम नव्यनैयायिकशेखरमणिः प्रधानसमाश्रयस्तम्भो नव्यन्यायसम्प्रदायस्य । स एष प्राचीनन्यायसिद्धान्तानपहाय स्वातन्त्र्येण विविधानेव पदार्थानुररीकृत्य पदार्थतत्त्वनिरूपणं नाम ग्रन्थान्तरमेव

निबबन्ध । तत्रासौ दिक्कालयोरीश्वरानतिरिक्तत्वम्, गगनस्यापि तथात्वम्, श्रोत्रस्य कर्णशष्कुल्यवच्छिन्नेश्वरस्वरूपत्वम् मनसोऽसमवेतभूतत्वम्, परमाणुद्व्यणुकयोरस्वीकारेण त्रसरेणावेव विश्रामः परमेश्वरस्य परिमाणाभाववत्त्वम्, भूतत्वमूर्तत्वयोर्जातिविशेषत्वम्, पृथक्त्वस्य भेदादनर्थान्तरत्वम्, परत्वापरत्वयोर्गुणान्तरत्वाभावः, विशेषस्य पदार्थान्तरत्वप्रतिषेधः, चित्ररूपाभावः, रूपादीनामव्याप्यवृत्तित्वम्, द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वस्यैव कारणत्वं न तु रूपवत्त्वस्यापि, द्रव्यादित्रिकवृत्तिसत्ताख्यजातेरसत्त्वम्, गुणगतगुणत्वजात्यस्वीकारः, शक्तेरतिरिक्तपदार्थत्वम्, कारणत्वकार्यत्वादीनां पदार्थान्तरत्वम्, संख्याया गुणत्वाभावः, समवायस्य नानात्वम्, ज्ञानविषयताप्रभृतीनां पदार्थान्तरत्वम्, वैशिष्टचस्यापि तथात्वम्--इत्येतत् सर्वं प्राधान्येन प्रतिपादयामास । तेषु बहूनि वस्तूनि मुक्तावलीप्रभृतिष्वपि परिगृहीतान्युपलभ्यन्ते - शिरोमणिकृतस्य तत्तत्पदार्थखण्डनादेर्युक्तयः पदार्थतत्त्वनिरूपणस्य श्रीरघुदेवन्यायालङ्कारभट्टाचार्य्यकृतपदार्थखण्डनव्याख्यायां तथा श्रीरामभद्रसार्वभौमविरचितपदार्थतत्त्वनिरूपणटीकायामनुसन्धेयाः ।

शिरोमणिना सामान्यलक्षणाप्रत्यासत्तिर्नाभ्युपेयते, साध्याभाववदवृत्तित्वमेव लाघवाद् व्याप्तिः स्वीक्रियते । एवमन्यदप्यूह्यम् ।

सर्वं एवैते नव्यन्यायसिद्धान्ताः । शिरोमणिना तत्र खण्डिताः सिद्धान्ताः प्राचीनन्यायसिद्धान्ताः । तत्कृतं सुगममेव पार्थक्यमुभयोः सिद्धान्तगतमिति ।

अन्यदपि दृश्यते पार्थक्यमनयोः सैद्धान्तिकं यथा--विरूपोपस्थितयोरेव पदार्थयोर्भवत्यभेदेन मिथः शाब्दबोध इति शास्त्रसिद्धम् । तेन नीलो घट इत्यादौ घटादिपदार्थे नीलादिपदार्थस्याभेदेन शाब्दबोधो भवति, किन्तु 'घटो घटः' इत्यादौ न भवति घटादिपदार्थे घटादेरभेदेन शाब्दबोधस्तयोर्विरूपोपस्थितत्वाभावादिति ।

अत्र प्राचीनाना नव्यानाञ्च किञ्चिदस्ति मतवैषम्यम् । तथाहि प्राचीना यथा--घटो घट इत्यादौ घटत्वमात्रावच्छिन्ने धर्मिण्यभेदेन घटत्वमात्रावच्छिन्नविधेयताकं शब्दं नेच्छन्ति तथैव घटत्वादिमात्रावच्छिन्ने धर्मिणि नीलघटत्वाद्यवच्छिन्नविधेयताकमपि घटो नीलघट इत्याद्याकारं शाब्दं नानुमन्यन्ते ।

नवीनास्तु उद्देश्यातावच्छेदकविधेयतावच्छेदकयोर्न्यूनाधिकभावे उद्देश्यतावच्छेदकेऽधिकावगाहने वा यद्यपि घटो घट इत्यादौ नीलघटो घट इत्यादौ शाब्दबोधमभेदेन नेच्छन्ति, तथापि घटो नीलघट इत्यादिस्थले विधेयांशेऽधिकधर्मावगाहने भवत्येवाभेदेन शब्दबोध इति स्वीकुर्वन्ति ।

तत्र नीलघटत्वाद्यवच्छिन्नोद्देश्यताकघटत्वादिमात्रावच्छिन्नविधेयताकस्थल इव घटत्वादिमात्रावच्छिन्नोद्देश्यताकनीलघटत्वाद्यवच्छिन्नविधेयताकस्थलेऽपि उद्देश्यस्यावगतपूर्वत्वेन तस्यापूर्वबोध्यत्वरूपविधेयत्वासम्भवेन विधेयतयोद्देश्यावागाही शब्दबोधो न सम्भवतीति प्राचीनानामभिप्रायः ।

अत्र नवीनानामभिप्रायस्तु—घटत्वेनावगतेऽपि घटे घटो नीलघटो न वेति सन्देहस्य सर्वजनानुभवसिद्धतया नीलघटार्थिनस्तत्र प्रवृत्तिर्न स्यादिति तादृश-प्रवृत्तिसिद्ध्यर्थं प्रकृतसंशयसमुच्छेदाय घटो नीलघट इति नीलघटत्वावच्छिन्नवि-विधेयकघटत्वावच्छिन्नोद्देश्यकज्ञानमवश्यमभ्युपगन्तव्यम्। एवञ्च अगत्या कस्य-चिदंशविशेषस्यापूर्वत्वे तद्विशिष्टः पूर्वमवगतोऽर्थस्तद्रूपेणापूर्व एव वक्तव्य इति तत्रापूर्वधर्मविशिष्टस्य तस्योद्देश्यस्य विधेयभावावगाही शाब्दबोधः स्वीकार्य्य एवेति। एवञ्च घटत्वादिमात्रावच्छिन्नविशेष्यताको नीलघटत्वादिधर्मावच्छिन्न-वधेयताकः शाब्दबोधः सिद्धः एवेति स्थितमिति। तदुक्तं व्युत्पत्तिवादे गदाधर-भट्टाचार्य्येण— "अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः, घटो घटः, दण्डवान् दण्डवान् पाकं पचतीत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपाव-च्छिन्नस्य तथा विधान्वयबोधानुदयात्। अथ तत्प्रयोजकसमानविभक्तित्वादेः सत्त्वात् कथं न तादृशान्वयबोधः? अत्राहुः—यादृशं फलं क्वचित् प्रसिध्यति तादृ-शस्यैवापत्तिः सम्भवति, क्लृप्तसामग्रीबलात्। यादृशञ्च सर्वथैवाप्रसिद्धं तादृश-स्य चापादकाप्रसिद्धेरापत्तिरशक्यैवेति, घटत्वाद्यवच्छिन्नविशेष्यताकाभेदसंसर्गकघ-टत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात् कथं तदापत्तिः? अथ घटो नीलघटो दण्डवान् रक्तदण्डवानित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः, विधेयकोटा-वधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारात्" इति। एवञ्च अभेदसम्बन्धे-नान्वयबोधस्थले नवीनप्राचीनयोस्तथा विषममतस्य गदाधरेणोट्टङ्कनात् तत्कृतमप्यु-भयोर्वैषम्यं शक्यं वक्तुम्।

धात्वर्थनिर्णयेऽपि प्राचीननव्यसिद्धान्तयोर्वैलक्षण्यं समीक्ष्यते, यथा—प्राची-नमते सर्वेषामेव धातूनां निर्विशेषेण व्यापारमात्रार्थः, न तु सकर्मकधातोः फलाव-च्छिन्नव्यापारोऽकर्मकधातोश्च व्यापारमात्रमित्येवं विशेषेण। तेन ग्रामं गच्छती-त्यादिवाक्यस्थले क्रिया व्यापारमात्रात्मिका धातुतो लभ्यते, संयोगादिरूपं फलं कर्मप्रत्ययेन बोध्यते, तयोर्जन्यजनकभावः संसर्गमर्य्यादया भासते। तिङ्प्रत्य-यार्थः कृतिः तत्रानुकूलत्वसम्बन्धेन धात्वर्थस्य व्यापारस्यान्वयः। कर्मप्रत्ययार्थे संयो-गादिरूपे फले ग्रामादेः कर्मणो निष्ठत्वसम्बन्धेनान्वयः। एवञ्च तत्र ग्रामनिष्ठसं-योगजनकव्यापारानुकूलकृतिमानित्यर्थपर्य्यवसायी निष्ठात्वसम्बन्धेन ग्रामविशिष्टो यः संयोगो जनकत्वसम्बन्धेन तद्विशिष्टो यो व्यापाररूपो धात्वर्थः, अनुकूलत्व-सम्बन्धेन तद्विशिष्टा या कृतिः तद्वानित्यर्थः प्रतीयते।

न च व्यापारमात्रस्य धात्वर्थत्वे गच्छति, त्यजतीत्यादौ तुल्यरूपो बोधो जायतामिति वाच्यम्, व्युत्पत्तिवादादौ गदाधरादिभिः सविस्तरं तादृशदोषपरिहा-रस्य कृतत्वात्। तदुक्तं गदाधरेण व्युत्पत्तिवादे— "व्यापारमात्रस्य धात्वर्थत्वात्। फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यज-

तीत्यादौ धात्वर्थे स्पन्दे ग्रामनिष्ठविभागजनकत्वमेव ग्रामं गच्छतीत्यादौ च ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते, न तु विपरीतम्। ग्रामं गच्छतीत्यादिवच्च ग्रामं स्पन्दते इत्यादयो न प्रयोगाः। द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्यबोधकत्वादित्यादि। एष सिद्धान्तः प्राचाम्।

नव्यानां मते तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः। तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वम्। नातो गम्यादिकर्मत्वस्य पूर्वदेशादौ प्रसङ्गः। न वा स्पन्देः सकर्मकत्वम्, तत्र फलस्य धात्वर्थतानवच्छेदकत्वात्। एवञ्च धातोरेव फलविशेषलाभात् फलान्वयिनी वृत्तिरेव द्वितीयार्थ इति।

फलस्य प्राचीनमतानुसारेण द्वितीयार्थत्वे भूमिं गच्छति न महीरुहमित्यादौ महीरुहवृत्तिसंयोगादेर्जनकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव नञर्थो वाच्यः, स च न सम्भवति वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकतयाऽप्रसिद्धेः। नव्यमते तु द्वितीयार्थस्याधेयत्वस्य फलनिष्ठोऽभाव एव तथेति नानुपपत्तिरित्यादिरूपेण प्राचीनमते दोषमुपपाद्य तदपेक्षया नव्यमतस्य समुत्कर्षप्रतिपादनाय बहुधा विचारः कृतो गदाधरेण। विशेषजिज्ञासुभिस्तत्रावधानं देयम्। तत्प्रतिपादितनिरुक्तसिद्धान्तभेदकृतमपि द्वयोः प्रस्थानयोर्वैषम्यमेतेनावसेयम्।

अन्यच्च गदाधरेण व्युत्पत्तिवादे वृत्त्यनियामकसंसर्गस्य प्रतियोगितावच्छेदकत्वे दोषाभावस्योपपादनात् तदिदं नव्यन्यायसम्मतं तस्य प्रतियोगितानवच्छेदकत्वञ्च प्राचीनन्यायसम्मतमिति प्रतिभाति, तेन तत्रापि तयोर्वैषम्यं शक्यते वक्तुम्।

अन्यदपि वैषम्यं यथा—गौतमीयन्यायदर्शनप्रवृत्तेः सुचिरात् परं प्रायेण गौतमसूत्रोपदिष्टानेव पदार्थानुपादाय किञ्चित् किञ्चिद् वैषम्येण न्यायसारं नाम निबन्धं निर्माय भासर्वज्ञः प्रवर्तयामास कञ्चित् प्राचीनन्यायसम्प्रदायम्। तत्र तेनागमप्रामाण्यमवलम्ब्य मुक्तिदशायामत्यन्तदुःखनिवृत्त्या सममानन्दविशेषानुभूतिरप्युपपादिता। यस्या विशेषेण प्रतिषेधः कृतो न्यायसूत्रभाष्ये वात्स्यायनेन। तथापि न्यायसारग्रन्थस्य प्राचीनन्यायग्रन्थतया तदुपदिष्टसिद्धान्तस्य प्राचीनन्यायसिद्धान्ततया परिग्रहस्यैवोचितत्वात्, नव्यन्यायसिद्धान्ते च दुःखात्यन्तनिवृत्तिमात्रस्यैव मुक्तिदशायामभ्युपगमात् तादृशसिद्धान्तभेदोऽपि द्वयोः पार्थक्यं प्रयोजयति। विस्तरस्तावदस्य प्रकरणस्य मयैव प्रस्तुतपूर्वे न्यायवैशेषिकदर्शनयोः पृथग्दर्शनत्वप्रवचने समनुसन्धेयः।

प्राचीनन्यायनयापेक्षया नव्यन्याये बहव एव विशेषाः समुपलभ्यन्ते, ये प्राचीनन्यायाद् नव्यन्यायस्य भेदमनायासेनैव गमयन्ति। तत्र ज्ञाने अन्तरा भासमानपदार्थगतविषयताद्वयस्याभेदस्वीकर्तृसिद्धान्ते रक्तदण्डवत्पुरुषवान् देश इत्यादिज्ञानं प्रति पुरुषाभाववान् दण्ड इत्यादिनिश्चयस्य प्रतिबन्धकत्वापत्तिवारणाय गदाधरकल्पितस्तादृशविषयताद्वयस्यावच्छेद्यावच्छेदकभाव एको विशेषो नव्यन्यायस्य।

कारणता-प्रतिबन्धकता—विशेषाणामवच्छेदकीभूताप्रामाण्यज्ञानाभावादीना-मनुगतरूपेण लक्षणादिष्वभावविशिष्टान्यत्वगर्भे गदाधरसम्प्रदायसिद्धो निवेशः कश्चन विशेषः। अनुमितेर्जातिघटितलक्षणं शिरोमणिना यत् समुद्भावितं सोऽप्येको नव्यन्यायस्य विशेषः।

यज्ञपतिसम्प्रदायानुमतं सम्बन्धसम्बन्धस्य भानम्। हेत्वाभासलक्षणादिषु विशिष्टान्तराघटितत्व - विशिष्टद्वयाघटितत्वाव्यापकीभूतविषयताशून्यत्वप्रभृतीनां प्राचीनन्यायनिबन्धेषु नाम्नाप्यसूत्रितानां नव्यन्यायतन्त्रे परिग्रहोऽपि प्राचीनन्यायतो नव्यन्यायस्य विशेषमाधत्ते।

सोन्दडमतानुयायिनां प्राचीनानां मते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका-भावस्याभ्युपगतस्य मणिकारेणास्वीकारः कश्चन नव्यन्यायगतो विशेषः।

पारिभाषिकबहुपदार्थाभ्युपगमाधीनं बहुसिद्धान्तवैचित्र्यमपि महानेव विशेषो नव्यन्यायस्य। अनुगमादीनां विचित्रा पद्धतिरपि महान्तमेव विशेषमाधत्ते प्राचीन-न्यायादिनिखिलतन्त्रेभ्यो नव्यन्यायतन्त्रस्येति सुतरामतिरोहितं नव्यन्यायनिष्णा-तानां विदुषाम्।

तदेतत् सिद्धं सन्देहाननुविद्धं यदशेषैरेव विशेषैः प्राचीनन्यायतन्त्राद् विलक्षणं नव्यन्यायतन्त्रमिति।

दिङ्मात्रमेतत् प्रतिपादितं मया विशेषतो धीविभवैः समीक्ष्यताम्।
गवेषणासाधनया नयद्वये ध्रुवं विशेषान्तरमप्यवाप्स्यते॥

॥ इति शिवम् ॥



# वेदविज्ञानबिन्दुः

## ( १ )

## वेदानां स्वरूपम्

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥
[ श्वेताश्वतरोपनिषत्, ६।१८ ]

वेदा ह्यार्यजातेः सर्वस्वम् । भारतीया संस्कृतिः, भारतीये ज्ञानविज्ञाने चेति सर्वं वेदानेवाधारीकृत्य प्रवर्तते । 'अस्त्यस्माकं वेदराशिः' इत्येवात्वे स्वीयं गौरवं भारतीया जगति समुद्घोषयितुं प्रभवन्ति । तेषां वेदानां स्वरूपमेवेह प्रथमं तावद्विचार्यते ।

अत्र विद्वांसो ब्रूयुः—"मन्त्रब्राह्मणयोर्वेदनामधेयम्" [आप० श्रौ० २४।१।३१], "अपौरुषेयं वाक्यं वेदः" [ मीमांसकमतम् ] इत्यादिना पूर्वाचार्यैरुपदिष्टमेव वेदस्वरूपम् । कस्तावदत्र विचारोऽवशिष्यते यदर्थमयमुपक्रम इति । तत्रेदं प्रतिवचनं यन्मन्त्रब्राह्मणात्मकस्य वेदस्य पर्यालोचनयैव वेदस्वरूपमतिगहनं प्रसिद्ध्यति । यथोपयोगं तस्यैकैकमंशमादायाऽऽचार्यैः स्वस्वग्रन्थे लक्षणानि विहितानि । पूर्णो वेदस्वरूपविचारस्तत्र तत्र कृतो न दृश्यते । तस्मान्मन्त्रब्राह्मणात्मकस्य वेदस्यैवाऽऽधारेण मुख्यवेदस्वरूपमत्र विवरीतुमेष प्रयत्नः ।

तैत्तिरीयब्राह्मणे आख्यायिकैका श्रूयते –"भरद्वाजो ह त्रिभिरायुभिर्ब्रह्मचर्यमुवास । तं ह जीर्णं स्थविरं शयानमिन्द्र उपव्रज्योवाच—भरद्वाज, यत्ते चतुर्थमायुर्दद्यां किमेनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच ॥ तं ह त्रीन् गिरिरूपान् विज्ञातानिव दर्शयाञ्चकार । तेषां हैकैकस्मान्मुष्टिमाददे । स होवाच भरद्वाजेत्यामन्त्र्य वेदा वा एते । अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुर्भिरन्वयवोचथाः" [ तै० ब्रा० ३।१०।११।३-४ ] इति । न हीदानीमुपलभ्यमाना वेदा अनन्ताः सन्ति । वेदैरेव ब्रह्मा सृष्टिं करोतीति च श्रुतिषु, स्मृतिषु, पुराणेषु च बहुधा श्रूयते[१] ।

---

१. "त्रय्यां वाव विद्यायां सर्वाणि भूतानि प्रतिष्ठितानि" [ शत० १०।४।२।२२ ] इति,
"सोऽयं पुरुषः प्रजापतिरकामयत भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्, तपोऽतप्यत, स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत, त्रयीमेव विद्याम्, सैवास्मै प्रतिष्ठाऽभवत्" [ शत० ६।१।१।८ ] इति,
"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" [ मनु० १।२१ ] इति च ।

"वेदैरशून्यस्त्रिभिरेति सूर्यः" [ तै० ब्रा० ३।१२।९।१ ] इत्यादि च श्रूयते। अस्माभिरुपलभ्यमानैर्वेदैरशून्यः सूर्यः कथं गच्छेत्। तस्मादतिगभीरं विलक्षणमेव किञ्चिद् वेदानां विद्यते स्वरूपमित्याकलनीयम्। तस्यैव विचारोपक्रमः संक्षेपेणेह समारभ्यते।

## वेदशब्दव्युत्पत्तिः

वेदशब्दोऽयं विद्धातोर्घञा निष्पद्यते। विद्धातोश्च बहूनर्थान् व्याकरोति भगवान् पाणिनिः—

१. विद ज्ञाने, २. विद विचारणे, ३. विद्लृ लाभे ४. विद सत्तायामित्यादि।

अत्र ज्ञानविचारणयोः कथञ्चिदैक्येऽपि ज्ञानम्, सत्ता, लाभश्चेति त्रयोऽप्यर्था विद्धातोः सिद्ध्यन्ति।

तत्र लाभपदेन जीवनरूपा स्थितिरपि ग्रहीतुं शक्यते, सत्तापदेन चोत्पत्तिः स्पष्टैवेत्युत्पत्तिः स्थितिश्चेत्युभयमपि विद्धातोरर्थेऽन्तर्भवति। घञ् प्रत्ययश्चापि भावे, अकर्तरि च कारके विधीयत इति ज्ञानम्, ज्ञानसाधनम्, ज्ञानकर्म, ज्ञानाधिकरणम्; सत्ता सत्तासाधनम्, सत्ताकर्म, सत्ताधिकरणम्; स्थितिः. स्थितिसाधनम्, स्थितिकर्म, स्थित्यधिकरणं चेत्यादि सर्वं वेदशब्दार्थतया व्याख्यातुं शक्यते। तत्र ग्रन्थात्मकेषु वेदेषु शाब्दज्ञानसाधनत्वमेव समन्वाययन्ति प्रायेण विद्वांसः। अन्वेषणप्रक्रियया परिशील्यमाने तु सर्वविधज्ञानसाधनत्वम्, ज्ञानरूपत्वम्, सत्तासाधनत्वम्, सत्तारूपत्वम्; स्थितिसाधनत्वम्, स्थितिरूपत्वं चेत्याद्यपि वेदशब्दार्थे समन्वितं भवति। तत्र सर्वविधज्ञानसाधनत्वमेव तावत् परीक्ष्यताम्।

## वेदानां प्रत्यक्षज्ञानसाधनत्वम्

ज्ञानेषु प्रत्यक्षं तावज्ज्येष्ठं सर्वेऽपि मन्वते। प्रत्यक्षेऽपि च चाक्षुषं ज्ञानं सर्वव्यवहार हेतुतया सर्वतः प्रधानम्। तदेतदाह श्रुतिरेव—

"एतद्ध मनुष्येषु सत्यं निहितं यच्चक्षुः" [ ऐत० ब्रा० १।६ ] इति।

तदेतच्चाक्षुषं प्रत्यज्ञं कथमुत्पद्यत इति दर्शनिका विचारयन्ति। अन्यानि सर्वाणीन्द्रियाणि स्वसंयुक्तानेवार्थान् प्रत्याययन्ति, चक्षुस्तु दूरस्थमसंयुक्तमप्यर्थं प्रत्याययतीति कथमेतदुपपद्यते ? यदि ह्यसंयुक्तस्याप्यर्थस्य बोधने चक्षुषः शक्तिस्तर्हि व्यवहितान् अत्यर्थं विप्रकृष्टानपि चार्थान् कुतो न बोधयेत्।

## नैयायिकमतम्

तस्या एतस्या अनुपपत्तेः समाधानाय नैयायिकास्तैजसस्य चक्षुषो बहिर्निर्गत्य तैस्तैः पदार्थैः संबन्धं कल्पयन्ति। तैजसत्वात् क्रियाशीलमिदं चक्षुर्बहि-

र्निर्गत्य तैस्तैः पदार्थैः संबद्धं तांस्तानर्थान् गृह्णाति। सति व्यवधाने तु व्यवदधता पदार्थेन निरुद्धं नाग्रे गन्तुं तत् प्रभवतीति व्यवहितान् पदार्थान् न प्रत्याययति। यावती च क्षुद्रे चक्षुषि शक्तिः, तावदेव दूरं गन्तुं तत् शक्नोतीति नातिदूरस्थानपि पदार्थान् बोधयितुमस्य शक्तिरिति तेषामुपपत्तिः।

परं शरीरस्योपभोगसाधनतया शरीराद् बहिर्गतमपि चक्षुर्ज्ञानाख्यं भोगं जनयेदिति न सम्यग् बुद्धावयतिष्ठते। निर्गत्य दूरं गतं च चक्षुस्तत्प्रदेशस्थान् लघूनपि पदार्थान् कुतो न प्रत्याययेत्। शक्तिस्त्वस्य तादृशी स्पष्टीभवति, यत् सूर्यमण्डलपर्यन्तमपि गत्वा सूर्यमण्डलं दर्शयति, परं तत्रस्थानन्यानर्थान्न दर्शयति। यथा हि वयं दूरस्थं पर्वतं पश्यामः, तथा तत्रैव पर्वते स्थितानि लघूनि तृणादीन्यपि कुतो न पश्यामः? चाक्षुषो रश्मिरेव कश्चित् प्रयाति, न सर्वं चक्षुरिति चेत्; समीपस्थेऽपि तु पदार्थे चाक्षुषो रश्मिरेव प्रयाति, तत्र कुतः सूच्यादीनपि पश्यति? दूरस्थं च वस्तु बृहदति लघू कुतः पश्यामः? चक्षुषोऽङ्गुल्यादिना पीडने च यः पदार्थो यत्र स्थितस्तस्मात् किञ्चिद् दूरेऽध उच्चैस्तिर्यग्वा दृश्यत इति कुत एतत् संपद्यते? चाक्षुषो रश्मिरेव तत्र तिर्यग्भूत इति चेदास्तां तत्, परं यत्र रश्मिर्गतस्तत्र पदार्थ एव यदा नास्ति तदा कथं दृश्यते? एवंविधा अनुपपत्तयोऽपि न समाधातुं शक्यन्ते।

## आधुनिकवैज्ञानिकमतम्

आधुनिका वैज्ञानिकास्तु मन्वते यन्न चक्षुर्बहिर्निर्गच्छति, न वा ते पदार्था एव चक्षुः सन्निधिमागच्छन्ति; किन्तु सूर्यकिरणाः प्रदीपादिप्रकाशकिरणा वा तं तमर्थजातं प्रतिबिन्दु स्पृष्ट्वाऽस्मच्चक्षुषि प्राप्ता भवन्तीति तादृशसंघटनेन चक्षुस्तथाविधमर्थं बुध्यत इति। कश्चित् पदार्थः पीतः, कश्चिद्रक्तः, कश्चिच्छ्वेतो तद् दृश्यते. तदपि त एवमुपपादयन्ति यत्सूर्यादिप्रकाशकिरणेषु सप्ताऽपि रूपाणि निहितानि। तत्र कश्चित् पदार्थोऽन्यानि रूपाणि भक्षयति, अर्थात् स्वात्मसात्करोति। कश्चिद्रक्तं रूपमुद्वमति, कश्चित् श्वेतम्, कश्चित् पीतम्। यदुद्वमति तेन रूपेणैव स पदार्थोऽस्माभिर्दृश्यत इति।

परमुद्वमितानि रूपाणि चक्षुषि कथमागच्छन्ति? सूर्यकिरणाः पदार्थं स्पृष्ट्वा तदाकारा एव भवन्ति चेत्; सर्वदैव तेषु तादृश आकारः, तद्रूपं वा कुतो नोपलभ्यते? सूर्यकिरणास्तु त एव सर्वत्र व्याप्नुवन्तीत्यतिदूरस्थेनापि ते ते पदार्थाः कुतो न दृश्यन्ते? दूरस्थाः पर्वतादयो यथा दृश्यन्ते, तथा तत्रस्थानि तृणान्यपि कुतो नेत्याद्याः पूर्वोक्ता अनुपपत्तयोऽत्रापि न सम्यक् समाधीयन्ते। किञ्च, वस्तूनां विप्रकर्षं सामीप्यं वाऽपि चक्षुर्गृह्णाति, चक्षुष एव धरातले प्राप्तानां वस्तूनां तु सन्निकर्षविप्रकर्षौ सर्वेषामेकबिन्दुस्थतया कथं गृह्येतामित्यभिनवाऽप्यनु-

पपत्तिरत्र जागर्ति। सन्निकर्षविप्रकर्षौ न प्रत्यक्षगम्यौ, किन्त्वनुमितिगम्याविति ते समादधते। परं तदेतदप्यनुभवेन न संवदति।

## वैदिकं विज्ञानम्

भवतु नाम, वैदिकं विज्ञानं त्वत्रैवमाह, यत् प्रत्येकं वस्तूनां त्रीणि मण्डलानि भवन्ति। पिण्डरूपमेकं मण्डलं तद् 'ऋग्' इत्युच्यते। तस्मात् पिण्डाच्च तदीयाः प्राणा निष्क्रम्य बहिश्चरन्ति। यस्मिन् स्वल्पे महति वा प्राणे यावती शक्तिः, तावद् दूरमेव स प्रचरति। पार्थिवेषु पदार्थेष्वग्निरेव प्राणः। तदुक्तं निरुक्तकृता—"यच्च किञ्चिद्दार्ष्टिविषयकमग्निकर्मैव तत्" [७।८।२] इति। स चायमग्निप्राणो द्विविधः—चित्यः, चितेनिधेयश्च। चित्याः प्राणा मर्त्याः, चितेनिधेयास्त्वमृताः। तत्र चित्याः प्राणाः स्वचयनेन वस्तुस्वरूपं निष्पादयन्ति, तद्रक्षण एव च व्यापृतास्तत्रैव तिष्ठन्ति, चितेनिधेयास्तु बहिरपि प्रचरन्तीति वैदिकं विज्ञानम्। एषां प्राणानां यदन्तिमं मण्डलं तत्साममण्डलमित्युच्यते, 'षोऽन्तकर्मणि' इतिधातोर्निष्पन्ने सामशब्देऽन्तस्यार्थस्यावगतेः। निरुक्तकारस्तु—"ऋचा समं मेन इति नैदानाः" ७।१२।४] इति सामशब्दस्य निरुक्तिमाह। यावती यस्य ऋग्भवति तदनुकूलमेव तस्य सामेति समत्वात् सामशब्दः प्रयुज्यत इति तदभिप्रायः। ऋचमारभ्य सामपर्यन्तं प्रत्येकस्मिन् बिन्दौ शतशो मण्डलानि सन्ति, तेषु च यत्प्राणरूपमग्नितत्त्वं व्याप्तं तदेव यजुरित्युच्यते। तदेतत्ससूर्यमण्डलमधिकृत्य व्याचष्टे श्रुतिः—"यदेतन्मण्डल तपति तन्महदुक्थं ता ऋचः स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकः। अथ य एष एतस्मिन् मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः॥ सैषा त्रय्येव विद्या तपति" [ शतपथ० १०।५।२।१-२ ] इत्यादि। किरणा यत उत्तिष्ठन्ते तद् उत्थम्। उत्थमेव परोक्षभाषया उक्थमित्याख्यायते। यत्र च समाप्यन्ते तद् व्रतमित्याम्नायते। प्राणाश्च वैदिक्यां परिभाषायामग्निपदेनैवोच्यन्ते—"अग्नीषोमात्मकं जगत्" [ बृ० जा० २।४ ] तत्र अग्निः, प्राणः, सोमस्तु रयिरिति। तदुक्तं प्रश्नोपनिषदि—'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" [ प्रश्नो० १।७ ] इति। तत्र हि प्रश्नोपनिषदि भूयान् प्रपञ्चः प्राणस्याख्यातः। अग्नीषोमयोरपि सूक्ष्मावस्थे प्राणरयिनाम्ना तत्र विवृते। तत्र "मूर्तिरेव रयिः" [ प्रश्नो० १।५ ] इत्यादिना सोमस्योत्पादकता रयिनाम्नि तत्त्व उक्ता, अग्न्युत्पादकता तु प्राण इति। इदं च स्मर्तव्यं यद् वैदिके विज्ञाने प्राण एव मुख्यं तत्त्वम्। यथाऽद्यतनं विज्ञानं विद्युत्यायतते, तथा वैदिकं विज्ञानं प्राण इति। तस्य चाग्नीन्द्रादिपदैस्तत्र तत्र निर्देशः कृतः। "यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी" [ बृह० ६।४।२२ ] इति श्रुतौ पृथिवीपिण्डप्राणस्याग्निनाम्ना सूर्यपिण्डप्राणस्य चेन्द्रनाम्ना निर्देशः कृतः। प्रश्नोपनिषद्यपि च

वेदानां प्राणे प्रतिष्ठितत्वमुक्तम्—"अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥" [ प्रश्नो० २।६ ] इति । मन्त्रेऽपि चाग्नि-नाम्नि प्राणे ऋक्सामयोः प्रतिष्ठोक्ता—

अग्निर्जागार तमृचः कामयन्ते अग्निर्जागार तमु सामानि यन्ति ।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥
[ ऋक्सं० ५।४४।१५ ]

अत्राग्निनाम्ना यजुरेवोक्तम्, पूर्वोक्तब्राह्मणेन सहैकवाक्यतासिद्धेः । सोमस्य च तत्सहचरत्वम्, ततो न्यूनत्वं च 'न्योकाः' इति पदेनोक्तम् । भगवान् मनुरप्याह—

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥
[ मनु० १२।१२३ ]

चतुर्विधा भवन्ति लोके पदार्थाः—स्वज्योतिषः, परज्योतिषः, रूपज्योतिषः, अज्योतिषश्च । सूर्याद्याः स्वज्योतिषः, ये स्वयमेव प्रकाशन्ते । चन्द्राद्यास्तु परज्यो-तिषः, येऽन्यस्य ज्योतिरादाय तदात्मसात्कृत्य परत्र तज्ज्योतिः प्रथयन्ति । येषु ज्योतिर्नास्ति केवलं रूपमेव येषां दृश्यते ते रूपज्योतिषः पृथिव्याद्याः । येषां तु वाय्वादीनां रूपमपि न दृश्यते तेऽज्योतिषः । तत्र स्वज्योतिषि सूर्ये वेदत्रयम् उक्तेन ब्राह्मणेन समाम्नातम् । यावत्तेषां ज्योतिर्गच्छति तत्तेषां साममण्डलमिति । परज्यो-तिषोऽपि पदार्था एवमेव निर्वक्तव्याः । अथ रूपज्योतिषि पृथिव्यामपि वेदत्रयमाह श्रुतिः "त्रयी वै विद्या ऋचो यजूंषि सामानि । इयमेव ऋचः, अस्यां त्वर्चति । योऽर्चति स वागेवर्चः, वाचा ह्यर्चति । योऽर्चति सोऽन्तरिक्षमेव यजूंषि, द्यौः सामानि । सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते" [ शतपथ० ४।६।७।१ ] इति । अत्र पृथिव्या ऋक्त्वं तस्या व्युत्पत्तिश्चापि व्याख्याता, अन्तरिक्षस्य यजुष्ट्वम्, दिवः सामत्वं चाम्नातम् । सौम्येऽध्वरे प्रयुज्यत इति त्वग्रे व्याख्यास्यते । प्राणरूपोऽग्निः पृथिव्या उत्थाय द्युलोकपर्यन्तं गच्छति । तत्र दिव्यस्याः साममण्डलम्, मध्येऽन्तरिक्षे तु यजुर्मण्डलमिति श्रुत्या पृथिव्या ऋक्त्वम् अन्तरिक्षस्य यजुष्ट्वम् दिवश्च सामत्व-माख्यातम् । तत्तल्लोकस्थितानि ऋग्यजुःसाममण्डलानीति तात्स्थ्यात्साच्छब्द्यं श्रुतौ द्रष्टव्यम् । स्थानत्रयस्थिता अग्निवाय्वादित्यास्त्रयोऽप्यग्नेरेव रूपाणीत्यपि श्रुतिष्व-सकृदुपदिष्टम्—

'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" [ ऋक्० १।१६४।४६ ] इत्यादिना ।

तत एव—"ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्" [ ऐत० ब्रा० ५।३२ ] इत्यग्निवाय्वादित्येभ्य उत्पत्तिस्त्रयाणां वेदानामाख्याता ।

"इतरेतरजन्मानो भवन्ति, इतरेतरप्रकृतयः" [ निरु० ७।४।१२ ] इति निरुक्तकृदुक्त-दिशा वेदेभ्यो देवा जायन्ते देवेभ्यश्च वेदा इति वैज्ञानिकप्रक्रियायां नात्र विशेषः। तन्तुभ्यो हि पटो जायते, पटाच्च तन्तव इत्यन्योन्यप्रकृतिकत्वं लोकेऽपि दृश्यत एव। तस्मादेकरूपतैव कार्यकारणयोरभिमता। भगवान् मनुरप्याह –

अग्निवायुरविभ्यस्तु त्रय ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥

[ मनु० १।२३ ]

उपलभ्यमानेषु वेदग्रन्थेष्वप्येतत्संकेतितम्। ऋग्वेदो हि—"अग्निमीळे पुरोहितम्" इति पुरो दृश्यमानं पार्थिवमग्निमेवारम्भे प्रस्तौति। यजुर्वेदश्च—"इषे त्वोर्जे त्वा वायवः स्थः" इति वायुमेव प्रस्तुवन्नारभ्यते। सामवेदश्चारम्भे—"अग्न आ याहि वीतये" इति सूर्यमण्डलादायान्तमग्निमर्थात् सूर्यमेवादौ प्रस्तौति। कृतं विस्तरेण।

पृथिव्याः प्राणरूपोऽग्निः पृथिव्या उत्थाय सूर्यमण्डलपर्यन्तं गच्छति। यावत्पर्यन्तं रूपज्योतिषः प्राणाः प्रसर्पन्ति, तावत्पर्यन्तमेव तद्वस्तु दृश्यते। अर्थाद् यस्य पदार्थस्य साममण्डलेऽन्तर्गतमस्माकं चक्षुस्तदेवास्माभिरालोक्यते, यस्य तु साममण्डलं नाऽस्माकं चक्षुरिन्द्रियपर्यन्तं व्याप्नोति तदस्माभिर्न दृश्यते। अत एव येषां वस्तूनां साम ऋगनुसारेण विस्तृतं तदेवास्माभिर्दूरालोक्यते, तत्रैव स्थिता लघवः पदार्थाश्च न दृश्यन्ते; तेषां लघुनः साम्नोऽस्मच्चक्षुःपर्यन्तमव्याप्तत्वात्। पृथिव्याः साम रथन्तरमुच्यते, सूर्यरथं तरतीति। सूर्यमण्डलमभितो विराजमानं देवमण्डलमेव सूर्यरथ उच्यते। यथा हि सूर्योपस्थानकाले वयं वदामः—"चित्रं देवानामुदगादनीकम्" [ ऋ० १।११५।१ ] इत्यादि। एतेन सूर्यमण्डलमभितो देवानां प्राणभूतानामनीकं सेना तिष्ठतीति सुस्पष्टीभवति। "आत्मैवैषां रथः" [ निरु० ७।४।१५ ] इति च निरुक्तकारो व्याचष्टे। विष्णुपुराणेऽपि च—

त्र्यशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः।
आरोहणावरोहाभ्यां भानोरब्देन या गतिः॥
स रथोऽधिष्ठितो देवैरादित्यै ऋषिभिस्तथा।
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः॥

[ विष्णु० २।१०।१-२ ]

इत्याद्युच्यते। तादृशरथपर्यन्तं पृथिव्याः सामेति रथंतरतीति व्युत्पत्तिस्तत्रानुगुणा। तेन सूर्यमण्डलपार्श्वे स्थित्वा कश्चिद् भूमिमालोकेत यदि, अतिसूक्ष्मा ताराकारा तेनेयं भूमिर्दृश्येतेति फलितम्। ततः परं तु सर्वथा सा न दृश्येत। सूर्यस्य तु साममण्डलं बृहत्सामपदेनोच्यते, तत्प्रकाशमण्डलान्तर्गतं भूम्यादि सर्वमिति।

अत्र ऋक्सामे केवलमायतनमात्रे, तेषु मण्डलेषु परिव्याप्तं यजुस्तु रसरूपम्। तेनैव सर्वं जन्यते। सूर्यचन्द्रकिरणेषु व्याप्तेन रसेन सर्वमस्मदुपभोगयोग्यमुत्पाद्यत इति तु सर्व एव जानन्ति। परं पार्थिवाः पदार्था अपि तादृशा भवन्ति यैर्दूरस्थैरपि तत्तत्कार्यं निष्पाद्यते। यथा वृक्षा रात्रौ "कार्बन डाई आक्साइड" इति नामकं तत्त्वमुद्वमन्ति, तेन रात्रौ वृक्षाणामधोभागे न शयितव्यमित्याधुनिका वैज्ञानिका अपि मन्वते। तिन्तिडीवृक्षस्याधस्ताच्छयनेन वायुः प्रकुप्यति, निम्बस्याधस्ताच्छयनेन तु सर्वे धावतः प्रसीदन्तीति प्राचीना आयुर्वेदविदो मन्यन्ते। अतितीक्ष्णं मलिनं द्रव्यं रज आदि दूरस्थान्येव कोमलानि पुष्पाणि म्लापयतीत्याद्यपि वैज्ञानिकैः स्पष्टीकृतम्। तदेतत्सर्वं यजुर्मण्डले स्थितेन तत्तत्पदार्थप्राणभूतरसेनैव क्रियत इति भाव्यम्।

"तदेतदेतस्यामृच्यध्यूढं साम" [ छान्दोग्यो० १।६।१ ] इति छान्दोग्योक्तदिशा साम ऋच्यध्यूढमेव भवति। ऋचं विना साम न तिष्ठतीति यावत्। तथा च ऋङ्नाम्नी मूर्तिरपि साममण्डलपर्यन्तं व्याप्नोति। प्रसर्पन्त्या मूर्त्तेः केन्द्रबिन्दुर्न प्रसर्पति, केन्द्रस्य प्रसर्पणे वस्तुनोऽन्यथाभावप्रसङ्गात्। केन्द्रस्य पार्श्वबिन्दू च द्वौ तिर्यग्गत्या द्वितीयबिन्दावेकीभवत इति द्वितीयबिन्दौ बिन्दुद्वयेन मूर्तिर्ह्रसति। इदानीं बिन्दुद्वयैकीभावजन्यो बिन्दुरेव केन्द्रभूतः, सोऽप्यग्रे न प्रसर्पतीत्यादिप्रक्रिया क्रमेण प्रवर्तते। एवं यावद्दूरं ऋगाख्या मूर्तिः प्रसर्पति, तावदेव प्रतिबिन्दु बिन्दुद्वयक्रमेण सा ह्रसतीति दूरस्थेन मनुष्येण लघुभूतं वस्तु दृश्यते। ऋगपेक्षया साममण्डलमतिबृहदिति सर्वं मण्डलमभिव्याप्नुवती ऋक् सूक्ष्मा भवतीति युक्तिसिद्धमेव। ततश्चास्मद्दृष्टिपर्यन्तमागते साममण्डले यावानृच आकारस्तावत्येव मूर्तिरस्माभिरालोक्यते। दूरस्थस्य वस्तुनो लघुत्वदर्शनमद्याप्याधुनिका विज्ञानवेत्तारो नाशक्नुवन् सम्यक् समाधातुम्। वैदिकेन तु विज्ञानेन सुस्पष्टमिदं समाधीयते।

ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः।
सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः॥

[ तै० ब्रा० ३।१२।९।१ ]

इति श्रुतिरप्यारम्भमध्यान्तिमानां भागानामृग्यजुःसामत्वमामनतीति।

## मूलभूता वेदाः

अथाऽपरापि श्रुतिर्वेदानां स्वरूपमन्वाचष्टे—

ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः सर्वा गतिर्याजुषी हैव शश्वत्।
सर्वं तेजः सामरूप्यं ह शश्वत् सर्वं हेदं ब्रह्मणा हैव सृष्टम्॥

[ तै० ब्रा० ३।१२।९।१ ]

अत्र सर्वासां मूर्तीनाम् ऋग्जन्यत्वं स्पष्टमेवोक्तम्। परं पूर्वोद्धृतायां श्रुतौ मण्डलस्यैव ऋक्त्वमाम्नातम्, इह तु ऋग्भ्यो जाता मूर्त्तिरुक्ता; तत्र यजुषोऽग्निरूपत्वमुक्तम्, इह तु गतेर्यजुर्जन्यत्वमाम्नायत इति वैलक्षण्ये दृष्टिर्निपात्यताम्।

अनेन वैलक्षण्येनान्वेषणप्रक्रिययेदं प्रतीयते यदस्यां श्रुतौ प्रतिपादिता वेदाः पूर्वोक्तेभ्योऽपि सूक्ष्मतरा इति। त इमे सूक्ष्मतरा वेदाः के? इत्यपि श्रुतिभ्य एव विचार्यम्। तदपि शतपथब्राह्मणे पुरश्चरणश्रुतिराह—"वागेवर्चश्च सामानि च, मन एव यजुंषि" [ शतपथ० ४।६।७।५ ] इति। अत्र वाच एव ऋक्त्वं सामत्वं चाम्नातम्। सर्वकारणभूतस्याव्ययपुरुषस्य सृष्टिसाक्षिभूताः कला मनःप्राणवाचः-- "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयः" [ शतपथ०-१४।७।२।६ ] इत्यसकृत् श्रुतिराह।

अस्या वाचश्च बहुधा वर्णनं श्रुतिषु श्रूयते —

वाचं देवा उपजीवन्ति विश्वे वाचं गन्धर्वाः पशवो मनुष्याः।
वाचीमा विश्वा भुवनान्यर्पिता सा नो हवं जुषतामिन्द्रपत्नी ॥
[ तैत्ति० ब्रा० २।८।८।४ ]

"यदि वै प्रजापतेः परमस्ति वागेव तत्" [ शतपथ० ५।१।३।११ ], 'यावद् ब्रह्म विष्ठितं तावती वाक्" [ ऋक्० १०।११४।८ ], "वाग्वै ब्रह्म, तस्यै वाचः सत्यमेव ब्रह्म, ता वा एता सत्यमेव व्याहृतयो भवन्ति" [ शतपथ० २।१।४।-१० ] इत्याद्यासु।

सेयं सर्वकारणभूता वाक्। जगति हि त्रीणि तत्त्वान्युपलभ्यन्ते—ज्ञानं च, क्रिया च अर्थश्चेति। तदनुकूलं त्रयमेव तत्कारणत्वेन श्रुतिष्वाम्नायते। ज्ञानस्य मूलभूतं मनः, क्रियाया मूलभूताः प्राणाः, अर्थस्य च मूलभूता वागिति। इयमर्थमूलत्वात् स्थूलतया मनःप्राणापेक्षयाऽवरेति, अवाञ्चतीत्यवाक्शब्देऽत्र प्रयुक्तः। "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा॥" इति व्याकरणानुशासनादकारलोपोऽत्रानुमीयते। इन्द्रस्य प्राणस्य चेयं पत्नी, सहचरणात् तदपेक्षयाऽप्रधानत्वाच्च। तत एव इन्द्रपत्नीत्वमस्याः प्रथमोक्तायां श्रुतावुक्तम्। सेयमेव सर्वादिभूता व्यापिका च वाग् नादब्रह्मपदेनागमशास्त्रे व्याख्यायते। ब्रह्मरूपेण ब्रह्मनिःश्वसिततया य उपनिषत्सु श्रूयते। ब्रह्मणो हि मनःप्राणवाग्रूपं त्रिविधमिदं व्याकरणं न केनचिद् यत्नेन जनितम्, यत्नानां मायावृत्तिरूपाणां परतः प्रादुर्भावादिति निःश्वसितपदेनैवास्य व्याकरणस्याभिधानं युक्तिमत्। इयमेव चाऽपौरुषेयी; अव्ययपुरुषरूपत्वेन, अक्षरक्षरपुरुषयोर्जनकत्वेन चास्याः स्वीकरणात्। इमामेवाभिलक्ष्य वेदानामपौरुषेयत्वम्, ब्रह्मनिःश्वसितत्वम्, ब्रह्मरूपत्वं वेत्यार्यजातौ सुप्रसिद्धिः। इमामेव च शब्दतत्त्वरूपेण स्फोटपदवाच्यतया व्याचख्यौ तत्रभवान् वैयाकरणभूषणसारकारः—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम्।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः॥ इति।
[ ७४ कारिका ]

इयं च व्यापिका सर्वत्र प्रसृता वागेव यदा केन्द्रं प्रकल्प्य प्रतिष्ठिता भवति तदा श्रुतौ वेदनाम्ना, आगमे च बिन्दुनाम्ना व्यवह्रियते। तस्याः केन्द्रं प्रकल्प्य व्यवस्थितायाः प्रतिनिधिभूत ओङ्कारः। इयं हि वाग् मनःप्राणगर्भैव भवति, मनः-प्राणवाचां परस्परमविनाभावात्। तथैवोङ्कारे वर्णत्रयम्—अकारो मनसो बोधकः, प्रश्लिष्ट उकारश्च प्राणस्य, स्थूलो मकारस्तु वाच इत्योङ्कारो व्यापिकाया वाचः प्रतिनिधिर्भवतीति। ओङ्कार एव मुख्यो वेद इति माण्डूक्यश्रुत्यादिषु बहुतरं विवृतम्। "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः" [ प्रश्नो० ५।२ ] इत्युक्त्वा तस्यैव वेदत्रयरूपना प्रश्नोपनिषद्यप्याम्नाता। एवं पुराणेष्वपि—"एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृताः" इति महाभारते सनत्सुजातीये। वायुपुराणे च—

व्यस्यते ह्येकविद्यं तद् द्वापरेषु पुनः पुनः।
ब्रह्मा चैतदुवाचादौ तस्मिन् वैवस्वतेऽन्तरे॥
आवर्तमाना ऋषयो युगाख्यासु पुनः पुनः।
कुर्वन्ति संहिता ह्येते जायमानाः परस्परम्॥
[ वायु० ६१।१२०-१२१ ]

अलं विस्तरेण, इयं वागेव मुख्यो वेदः। सैव च सर्वेषां शब्दानामर्थानां चोत्पादिकेति विवृतम्। तस्या एव मूर्तिजनकत्वम् —"ऋग्भ्यो जातां सर्वशो मूर्ति-माहुः" [तै० ब्रा० ३।१२।९।१] इति श्रुतौ स्पष्टीकृतम्। अथ —"सर्वा गतिर्याजुषी" [ तै० ब्रा० ३।१२।९।१ ] इति गतिशब्देन गतिवृत्तिको गतिहेतुः प्राण उक्तः। तेजःशब्देन प्रथमविवर्तरूपं मन उक्तमिति मूलभूतानामात्मत्वेन निदर्शितपूर्वाणां मनःप्राणवाचां वेदत्वमनया श्रुत्या सिद्ध्यति। एतेषां च परस्परमविनाभावात् क्वचित्प्राणरूपताऽपि सर्वेषां वेदानामाम्नायते। यथा—"उक्थं यजुः साम इति सर्वं प्राण एव" [ बृह० ५।१३।१-३ ] इति विस्तरेण व्याख्यातम्। यजुषश्च सर्वोत्पा-दकता शतपथे स्पष्टं श्रुता —"अयं वाव यजुर्योऽयं पवते, एष हि यन्नेवेदं सर्वं जनयति। एतं यन्तमिदमनुप्रजायते। तस्माद्वायुरेव यजुः॥अयमेवाकाशो जूः, यदि-दमन्तरिक्षम्, एतं ह्याकाशमनुजवते। तदेतद्यजुर्वायुश्चान्तरिक्षं च यच्च जूश्च। .. तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितम् ऋक्सामे वहतः" [ शत० १०।३।५।१-२ ] इति।

अत्र गतिस्थितिशीलस्य मूलतत्त्वस्य यजुष्ट्वमाम्नातम्, तदेव च "सर्वा गतिर्याजुषी" इत्युपर्युक्तया श्रुत्योक्तम्। अत्रोक्तावाकाशवायू न भूतरूपौ, भूतानां वेदापेक्षयाऽतिपरभवत्वात्। वेदेभ्यो हि देवाः तदनन्तरं भूतानि जायन्ते। तस्माद् भूतयोराकाशवाय्वोः प्रागवस्थैवात्र कार्यकारणयोरभेदाद् वाय्वाकाशपदाभ्यां

व्याख्यातेति भाव्यम्। "अयं वा इन्द्रो योऽयं पवते" [ शत० १४।२।२।६ ] इत्यग्रे प्राणरूपस्येन्द्रस्य वायुरूपतां ब्रुवत्या श्रुत्यैव स्पष्टीकृतोऽयमभिप्रायः। यजुषश्च मुख्यत्वम्, ऋक्सामयोस्तद्ग्राहकत्वं चात्र स्फुटमुक्तम्। तेन ऋक्सामयोरायतनरूपता, यजुषश्च रसरूपताऽपि प्रागस्माभिर्व्याहृता स्फुटीभूता।

अद्य वैज्ञानिका अपि गतिस्थितिशीलम् 'इलेक्ट्रोन-प्रोट्रोन' नामकं तत्त्वद्वय-मेव मूलतत्त्वमभ्युपगच्छन्ति। आधुनिकवैज्ञानिकैर्विज्ञानमध्याह्न इयदन्वेषणानन्तरं यत्तत्त्वं लब्धम्, तत्सहस्रावधिवर्षेभ्यः प्राक् पाश्चात्त्यैरपि निर्धारितसमयेषु वेदेषु सुस्पष्टमुपलभ्यत इत्यहो वेदस्य महिमा। वस्तुतस्तु पाश्चात्त्यैर्वैज्ञानिकैरद्यापि 'इलेक्ट्रोन-प्रोट्रोन' नाम्ना गतिस्थितिशीलं भौतिकमेव तत्त्वं विज्ञातम्। तज्जनकं देवतत्त्वम्, ततोऽपि प्राक्तनं पुरुषतत्त्वमित्यादि तु सर्वमद्यापि तेषामन्वेष्टव्यमेवाव-शिष्यते, यद्वेदेषु विवृतम्। आस्तामिदमप्रकृतम्।

"आत्मा ह्यग्निः तदेनमेते उभे रसो भूत्वाऽपीत ऋक् च साम च। तदुभे ऋक्सामे यजुरपीतः" [शतपथ० १०।१।१।६ ] इति श्रुत्याऽपि यजुषो रसरूपत्वमृक्-सामयोश्च तत्राप्ययो दर्शितः।

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते॥
[ ऋ० सं० १।१६४।३९ ]

इति ऋक्संहितामन्त्रोऽपि परमव्योमपदेन बोधितस्य परब्रह्मण ऋगक्षरे प्रतिष्ठितत्वमाह। तस्य ज्ञानमेव च मन्त्ररूपाणामृचां मुख्यं प्रयोजनमामनति।

तदित्थं ब्रह्मस्वरूपभूता मनःप्राणवाच एव मुख्या वेदा इति विवृतम्। त एते मूलभूता रसवेदाः सर्वेषां पदार्थानां जनका इति सत्ताप्रदतया स्थितिसंपादकतया च विद्धातोः सत्तार्थो लाभार्थश्चैषु समन्वितो भवति। एते रसवेदा इत्युच्यन्ते। पूर्वोक्ता मण्डलक्रमेण चक्षुःपर्यन्तमागत्य तत्तद्वस्तुज्ञानजनकास्तु वस्तुवितननाद् वितानवेदपदेन व्यवहार्याः, यैर्वस्तुनो दूरे दूरे लघुत्वं व्याख्यातं ते तु छन्दोवेदा इति व्यवहृताः। एवं त्रिविधा वैज्ञानिका वेदाः।

एतत्सर्वं वेदत्रयीसंबन्धेनैवोक्तम्। चतर्थोऽथर्ववेदस्तु भृग्वाङ्गिरस इति ब्रह्म-वेद इति सोमवेद इति चाख्यायते। त्रयो वेदा अग्निप्रधानाः, अयं तु सोमप्रधानः। सोमश्चायमग्निसहचरोऽप्यग्नेर्न्यून इति—"तवाहमस्मि सख्ये न्योकाः" [ ऋ० ५।-४४।१५ ] इति श्रुतौ प्राक् प्रदर्शितम्। तत एवेमं चतुर्थवेदं सुवेदमित्याचष्टे गोपथ-ब्राह्मणम्, सुवेदशब्दादेव स्वेदशब्दोत्पत्तिमाह च—"तस्य श्रान्तस्य तप्तस्य संतप्तस्य ललाटे स्नेहो यदार्द्रंयमजायत तेनानन्दत्। तमब्रवीद् महद्वै यक्षं सुवेदमविदामह इति। तद्यदब्रवीद् महद्वै यक्षं सुवेदमविदामह इति तस्मात् सुवेदोऽभवत्। तं वा

एतं सुवेदं सन्तं स्वेद इत्याचक्षते परोक्षेण" [ गोपथ० पू० १।१ इत्यादि । तस्मात् त्रयीवेदस्य स्वेदरूपोऽयं चतुर्थो वेद इति फलति ।

अग्नीषोमात्मके जगति यद्यप्यग्निरेव प्राणरूपतया प्रधानभूतः, तथापि सोमतत्त्वं सर्वत्र व्याप्तम् । तद्धि केन्द्रवद्धमपि प्रत्यृतमिति 'ऋतम्' इत्युच्यते । अग्निस्तद्गर्भे तिष्ठति । सोमस्यैव च तिस्रोऽवस्थाः—सोम, आपः, वायुरिति । एषामपामपि व्याप्तिमनुपदं श्रुतिराह । इदमपि श्रुतिषूक्तम्—

आपो भृग्वङ्गिरोरूपमापो भृग्वङ्गिरोमयम् ।
अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिताः ।। [ गोपथ० पू० १।३९ ]

अस्य सोमत्वमेवाभिलक्ष्य पूर्वोक्तायां वेदत्रयीप्रतिपादकश्रुतौ "सौम्येऽध्वरे" शत० ४।६।७।१ ] इति पदेन चतुर्थवेदस्यापि सङ्केतः कृतः ।

तदित्थं वैज्ञानिकानां वेदानां स्वरूपमतिसंक्षेपेण मया विवृतम् । विषयोऽयमतिगम्भीरः अस्मद्गुरुचरणाः श्रीविद्यावाचस्पतिमहाभागा अनेकधा कथयन्ति स्म यद् वेदे वेदविज्ञानमेव सर्वविज्ञानापेक्षया गह्वरमिति । वैज्ञानिकानां वेदानामपि शाखाभेदः तेषामपि षडङ्गानि च श्रीगुरुचरणग्रन्थेषु विवृतानि । पुरुषसूक्ते वेदानां सर्वहुतो यज्ञादुत्पत्तिराम्नाता । वेदानां प्रजापतिरूपत्वं प्रजापतिश्मश्रुत्वं चापि तत्र तत्र श्रुतम् । तदेतत्सर्वं सृष्टिप्रक्रियामप्रतिपाद्य विवरीतुं दुःशकम् । सृष्टिप्रक्रिया च परिमिते स्वल्पे समये न स्पष्टुं शक्यते । प्रथम एव व्याख्यानेऽतिदुरूहविषयप्रतिपादनेन च वेदान्वेषणसमुत्सुका अन्वेषणनिभागच्छात्रा निराशा मा भूवन्निति बुद्ध्यापि मयाऽत्रातिजटिला विषया नान्तर्भाविताः । अन्वेषणे प्रवृत्ता विद्वांसः स्वयमेव सर्वं ज्ञास्यन्ति, कालान्तरे च सत्यवसरेऽहमपि विषयस्यास्याधिकं स्पष्टीकरणाय प्रयतेय । इदानीं तु ग्रन्थरूपाणां वेदानां विषयेऽतिस्वल्पकालेन किञ्चिदुक्त्वा वक्तव्यमिदमुपसंहरामि ।

## ग्रन्थरूपाः वेदाः

ग्रन्थरूपेषु वेदेष्वपि वेदत्रयी वेदचतुष्टयी चेत्युभयमपि प्रसिद्ध्यति । अत्रापि च यज्ञे साक्षाद्व्यापृतास्त्रय एव वेदाः । चतुर्थोऽथर्ववेदस्तु शान्तिक-पौष्टिक-प्रायश्चित्तोपासनादिविवरणैरेव यज्ञमुपकरोति । अत्र च भाषायाः शैलीभेदेन त्रयो वेदाः, ऋत्विग्भेदेन तु चत्वार इति त्रित्वं चतुष्ट्वमित्युभयमपि दृष्टिभेदेन सूपपन्नम् । भाषायाः शैली हि त्रिविधा प्रवर्तते—गद्यरूपा, पद्यरूपा, गेयरूपा च । तत्र पद्यबद्धा ऋचः, तासां संग्रह ऋग्वेद' । गद्यरूपा च यजुरित्युक्ता, तत्प्रधानो यजुर्वेदः । गेयरूपाणां च संग्रहः सामवेद इति त्रय्यां सर्वमन्तर्भवति । अनेन प्रकारेणाथर्ववेदेऽपि यः पद्यभागः स ऋचि, गद्यभागो यजुषि, गेयभागश्च साम्न्यन्तर्भवतीति न किञ्चिदपरं चतुर्थमवशिष्यते । ब्राह्मणानि तु सर्वेषां वेदानां गद्यरूपाण्येव । तत्र प्रसङ्गादेव

क्वचिद् गाथाः पद्यानि बोद्ध्रियन्ते। अथ यज्ञे प्रधाना ऋत्विजस्तु चत्वारो भवन्ति—होता अध्वर्युः उद्गाता, ब्रह्मा चेति। तेषां कर्म मन्त्रेणैव समुपदिष्टम्—

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदित जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः॥

[ ऋक्० १०।७१।११ ]

एतेनेदमेव फलति यद् होतृवेद ऋग्वेदः, अध्वर्युवेदो यजुर्वेदः, उद्गातृवेदः सामवेदः, ब्रह्मवेदस्त्वथर्ववेद इति। ब्रह्मा हि यज्ञे – शान्तिक-पौष्टिक-प्रायश्चित्तादीनि करोतीति तेनाथर्ववेदोऽप्यध्येयो भवति। अन्येषामृत्विजां कार्यनिरीक्षणाय त्रयो वेदा अपि तेनाध्येया भवन्तीति चतुर्णां वेदानां ज्ञाता ब्रह्मा भवितुमर्हति। अत्रापि वैज्ञानिकवेदवद् यज्ञे यजुर्वेदस्यैव प्राधान्यम्, मुख्यस्य यज्ञकर्मण आहुतिरूपस्याध्वर्युणैव संपादनीयत्वात्। अत एव श्रुत्या यज्ञमात्रानिर्मातृत्वं तस्यैवोक्तम्। यजुःसंहिता चेयं यज्ञक्रमेणैव संघटिता समुपलभ्यते। येन क्रमेण मन्त्रा यज्ञे पठनीया भवन्ति तेनैव क्रमेण ते यजुःसंहितायां प्रायेण समाम्नाताः। ऋक्संहिता तु ऋषिक्रमेण संघटिता। एकैकस्य प्रधानस्य ऋषेर्वंशजानां ये दृष्टा मन्त्रास्ते प्रायेणैकत्र संघटिताः। केवलं नवमं मण्डलं सोमदैवत्यं देवताक्रमेण संघटितमुपलभ्यते। सामवेदस्तु ऋग्वेदादेव गेया ऋचः संगृह्य पृथक् संघटितः। एषां शाखाभेदोऽपि व्यासशिष्याणां मुनीनामुच्चारणभेदेन क्रमभेदेन च सम्पन्न इत्युपलभ्यमानशाखावलोकने स्पष्टं भवेत्। केवलं यजुर्वेदस्य तैत्तिरीयशाखा माध्यन्दिनादिशाखाश्च परस्परमत्यन्तं भेदं गताः। तत्कारणमपि पुराणेषु विवृतमिति सर्वेऽपि विद्वांसो विदन्त्येव। मन्त्रभागस्तु तत्राप्याधिक्येन संवदति।

तदेषामुपलभ्यमानानां मन्त्रब्राह्मणात्मकानां वेदानां स्मृतिपुराणादिसाहाय्येनान्वेषणे सर्वमाधिदैविकमाध्यात्मिकमाधिभौतिक च विज्ञानं स्फटीकृत्य भारतस्य परमं गौरवमद्यापि प्रतिष्ठापयितुं शक्यत इति तत्र विदुषां छात्राणां च प्रवृत्तिरत्यावश्यकतां गाहते। ब्राह्मणादिकं दूरे संस्थाप्य केवलं मन्त्रभागान्वेषणे तु तादृशानि तत्त्वानि न प्राप्तुं शक्यन्त इति सर्वसाहाय्यमादाय क्रमेणैव वेदविचारे प्रवर्त्तितव्यम्। इदमपि च स्मर्तव्यम्-ब्राह्मणेषु मुख्याः कर्मविधयः, यदनुसारेण यज्ञाः श्रौता विधीयन्ते। परं ते विधयः प्राकृतान् यज्ञाननुसृत्यैव प्रवर्तिताः। प्रकृतिर्हि यज्ञेनैव जगज्जनयति च पाति च। विहितकर्मोपपत्तिप्रदर्शनाय प्राकृतयज्ञप्रक्रियाऽपि ब्राह्मणेषु प्रदर्शिता। 'इदं कर्तव्यम्' इति विधाय किमर्थं कर्तव्यमितिब्राह्मणं प्रश्नमुत्थापयति, तत्समाधानाय प्राकृतयज्ञानुसारेणाख्यायिकादिरूपेण तदुपपत्तिं प्रदर्शयति च। स उपपत्तिभागो मीमांसकैः 'अर्थवाद' इत्युपेक्षितः। वैज्ञानिकं तत्त्वं तु तत्रैव प्राप्यते। यदा हि भारते कर्मकाण्डस्य महान् प्रचार आसीत्, किमर्थमिति शङ्कैव

यदा नोदयते स्म, तदा मीमांसकैस्तदुपेक्षा कृता अद्यत्वे तु श्रौतकर्मकाण्डप्रचारो लुप्तप्रायः। न चोपपत्तिमनभिसन्धायाद्यत्वे शिक्षिता क्वाप्यदृष्टफलके कर्मणि प्रवर्तन्ते। तस्मादद्य स एवार्थवादभागः प्रधानतया मन्तव्यः। तत्रैव भूयोभूयोऽनुसन्धानेन वैज्ञानिकानि तत्त्वान्यन्वेषणीयानि। यैर्विद्वद्भिर्मार्गप्रदर्शनं कृतं तेषामपि साहाय्यमुपादेयम्, परमपुरूषस्य जगन्नियन्तुर्जगदीश्वरस्य प्रसादेन वेदार्थपरिस्फूर्तिः संभवेदिति च प्राधान्येन श्रद्धातव्यम्, नैतेषु प्रत्यक्षमस्ति, अनृषेरतपसो वेति भगवद्यास्कवचनं च सर्वदा स्मर्तव्यमिति शिवं स्तात्॥



## [ २ ]

# वैदिका देवा ऋषयश्च

प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदतु ।।

[ श्रीमद्भागवतम् ]

अथ वैदिका देवा ऋषयश्च व्याख्यायन्ते । वैदिकानि तत्त्वानि पञ्चधा विभज्यन्ते । १—ऋषयः, २—पितरः, ३—देवाः, ४—असुराः, ५—गन्धर्वाश्चेति । एतेषां समष्टिरेव सूक्ष्मं जगदित्याख्यायते । सूक्ष्मं जगदेव वेदानां मुख्यं प्रतिपाद्यम् । एषां पञ्चानां विज्ञानेन सर्वं वैदिकं तत्त्वं करतलामलकवत् सुविज्ञातं भवति । एषु ऋषीणां देवानाञ्च सामान्येन परिचयोऽत्र संक्षेपेण प्रस्तूयते । एते सर्वेऽपि तावत्प्राणविशेषाः । वैदिकं सर्वमपि विज्ञानं प्राणतत्त्वमाधारीकृत्यैव प्रवर्तते । आधुनिकस्य विज्ञानस्याधारभूता यथा विद्युच्छक्तिः, तथा वैदिकस्य विज्ञानस्य मूल आधारः प्राणतत्त्वमिति शक्यते वक्तुम् । प्राणश्च रयिश्चेति द्वे मूलतत्त्वे । तत्र प्राणो मुख्यः, रयिस्तु तदधीना । तदुक्तं प्रश्नोपनिषदि—

"प्रजाकामो वै प्रजापतिः, स तपोऽतप्यत स तपस्तप्त्वा मिथुनमुत्पादयते । रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः । रयिर्वा एतत्सर्वं यन्मूर्तञ्चामूर्तञ्च । तस्मान्मूर्तिरेव रयिः ।"

[ प्रश्नो० १।४-५ ]

अनया हि श्रुत्या सर्वेषां प्राणानामायतनं सूर्यः, रयेश्चायतनं चन्द्रमा इति दर्शितम् । सर्वाश्च मूर्तयः पिण्डरूपा रयिनामकात्तत्त्वाज्जायन्त इत्यप्युक्तम् । तेन यद् यद् भौतिकम्, यद् यदाधुनिका वैज्ञानिका 'मैटर'-पदेनाभिदधति; तत्सर्वं रयिजन्यम्, तद्विधारकश्च शक्तिविशेषः प्राण इति स्फुटीभवति । यः 'फोर्स्' इति, 'एनर्जी' इति चाद्यत्वे वैज्ञानिकैरुच्यते । इमे एव प्राणरयी स्थूलताप्राप्तिक्रमेणाग्नीषोमौ भवतः । अग्नीषोमाभ्यां च सर्वं जगदुत्पाद्यते—"अग्नीषोमात्मकं जगत्" [ बृ० जा० २।४ ] इति । तत्र प्राण एवाग्निः, रयिश्च सोम इति भाव्यम् । प्राण एव सर्वस्यादिः, स एव स्थूलामवस्थां गतो रयिपदवाच्यां भूतभौतिकावस्थां गच्छतीत्यप्यन्यत्रोक्तम् । प्राणस्य च याः पञ्चावस्थाः पूर्वमुक्ताः, तास्वपि ऋषिप्राण एव मुख्यः । तथा हि शतपथब्राह्मणे—

"असद्वा इदमग्र आसीत्, तदाहुः किन्तदसदासीदिति, ऋषयो वाव तेऽग्रेऽसदासीत् । तदाहुः के त ऋषय इति, प्राणा वा ऋषयः ।" [ शतपथ० ६।१।१।१ ]

अत्र हि पूर्वमसत्पदेन प्राणरूपाणामृषीणामभिधानं कृतम् । प्राणा एव सत्तारूपेण सर्वत्रानुप्रविशन्ति । प्राणेषु किञ्चिदन्यत् तत्त्वं सत्तारूपेण न प्रविशतीति तेषामसत्त्वमुक्तमिति । यथा हि नैयायिकाः सत्तासमवायेन द्रव्यादीनां सत्पदवाच्यतां ब्रुवन्ति, सत्तायां तु न काचिदन्या सत्ताऽस्तीति सा सती नोच्यते; तथैवात्रापि द्रष्टव्यम् । एतदनन्तरं तत्रैव तेषामृषीणां सप्तधात्मानं विभज्यावस्थानम्, तत्रैव देवानां प्रादुर्भावः, अग्रे च तत एव वेदप्रादुर्भावपूर्वकं सर्वभतप्रथमानामपामुत्पत्तिश्चेत्यादि विवृतम् । एवं शतपथस्य चतुर्दशे काण्डे बृहदारण्यकोपनिषत्पदाऽभिधेये जनकसभायामृषीणां परस्परं ब्रह्मोद्ये शाकल्यस्य प्रश्नानां याज्ञवल्क्येनोत्तरणे देवानामपि प्राणरूपता सुस्फुटमाम्नाता । एवं हि तत्र शाकल्ययाज्ञवल्क्ययोः प्रश्नोत्तराणि श्रूयन्ते—

'कति देवा याज्ञवल्क्येति । स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच । कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिंशदित्योमिति होवाच ।" [बृहदारण्यक० ३।९।१] इत्यादि ।

अनन्तरञ्च पुनः पुनः प्रश्ने षट्, त्रयः, द्वौ, अध्यर्धः, एक इति क्रमेण देवसंख्या भगवता याज्ञवल्क्येन निर्दिष्टा । विवरणप्रश्ने च अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, इन्द्रश्च, प्रजापतिश्चेति त्रयस्त्रिंशत् । तेषां संक्षेपेण—अग्निश्च पृथिवी च वायुश्चान्तरिक्षं च द्यौश्चादित्यश्चेति षट् तेषामपि संक्षेपे तत्रापि लोकदेवयोरेकीकरणेन त्रयः, तत्राप्यनुस्यूततया अन्नं प्राणश्चेति द्वौ । ततश्च कतमो अध्यर्ध इति प्रश्ने—'योऽयं पवत ईति । तदाहुर्यदयमेक इवैव पवते । अथ कथमध्यर्ध इति। यदस्मिन्निदं सर्वमध्याध्नोंत्तेनाध्यर्ध इति" एवमुत्तीर्य कतम एको देवः" इति प्रश्नः 'प्राणः" इति समाहितः, तस्यैव च बृंहणात् सर्वमिदं जातमिति तस्यैव ब्रह्मत्वमुक्तम् । "अमृतः पुरुषः" इत्यपि तस्य विवरणं तत्रैव कृतम् । तदेतत्प्रकरणपर्यालोचनेन प्राण एव मुख्यो देवः । स च यद् भूतभौतिकमुत्पादयति तत्तस्य वशगत्वादधं गण्यत इत्यध्यर्धो देवो निर्दिष्टः । "यो यं पवते" इत्युक्त्या च वायुरूपता तस्योक्ता । वायुरयं न भौतिको वायुर्मन्तव्यः, अपि तु तस्य परिचालक आन्तरिक्ष्यः प्राणविशेषो वायुपदेन निर्दिष्टः। तस्यैकस्यैवाग्निः, वायुः, आदित्य इति त्रीणि रूपाणि स्थानभेदेन प्रतिष्ठितानि । स्थानानां पृथिव्यन्तरिक्षदिवामपि स्थानिभिः सह परिगणने तु षड् देवाः । अग्न्यादीनामेकैकस्य पृथक् पृथगवस्थागणने, केन्द्रस्थस्येन्द्रस्य सर्वमण्डलव्यापकस्य प्रजापतेश्चापि सह गणने त्रयस्त्रिंशद् देवाः सम्पद्यन्ते । एषां चैकैकस्यानन्तकार्यकारित्वात् त्रयस्त्रिंशच्छतानि त्रयस्त्रिंशत्सहस्राणीत्यादि

देवानां संख्या आख्यायते। इदानीन्तु पुराणाद्याधारेण त्रयस्त्रिंशत् कोटय इत्यपि प्रसिद्धिः। सेयं सर्वाऽप्यनन्त कार्यकारित्वाद् बोध्या। पृथक् पृथङ्नामग्रहणं तु त्रयस्त्रिंशत एव श्रुतिपुराणादिषु दृश्यते। त्रयस्त्रिंशत् संख्याया विवरणं तु मन्त्रेष्वपि श्रूयते—

इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च।
मनोर्देवा यज्ञियासः॥ [ ऋ० ८।३०।२ ]

शाखान्तरमन्त्रे वस्वादिविवरणमपि श्रूयते—

अग्निः प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रेभिरभि रक्षतु त्मना।
इन्द्रो मरुद्भिर्ऋतुथा कृणोत्वादित्यैर्नो वरुणः शर्म संयत्॥
[ आश्वलायनश्रौत० २।११ ]

संक्षिप्य देवतात्रयं तु भगवान् यास्कोऽपि दैवतकाण्डे देवतानिरूपणे सिद्धान्तयति—"तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानः, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थानः" [ निरु० दैवतकाण्डे १ अ० ] इति। अत्र निरुक्तकृता स्थानिनः प्राणविशेषा एव मुख्यतया देवपदवाच्या उक्ताः। पूर्वोक्ते बृहदारण्यकोपनिषद्वाक्ये तु स्थानानामेव मुख्यत्वमनुसंहितम्। तदेतद्विवक्षाभेदमात्रम्। अग्निवायू चेमौ निरुक्तकृता निरूप्यमाणौ न भौतिकौ, अपि तु प्राणरूपौ देवविशेषावेव। "यत्किञ्चिद्दार्ष्टिविषयकमग्निकर्मैव तत् या च का च बलकृतिरिन्द्रकर्मैव तत्, यत्किञ्चित् प्रवह्लीतमादित्यकर्मैव तत्" निरु० दै० का० १अ० ] इति तेनैव तद्देवतास्वरूपव्याकरणाद् अन्तरिक्षे वायुर्वा इन्द्रो वेति विकल्पो य आख्यातस्तस्याशयमेवं भाष्यकारः श्रीदुर्गाचार्य आह, यद् येषां कार्यं प्रत्यक्षं दृश्यते, त एव देवा अत्रोक्ताः। भूम्यामग्निकार्यम्, दिवि चादित्यकार्यं प्रत्यक्षं दृश्यते। अन्तरिक्ष इन्द्रकार्यं विद्युदादि तु सदा न दृश्यते, कदाचिद् वर्षादावेव दृग्गोचरीभवतीति सदा दृश्यमानकार्यो वायुरेव समुचिततयाऽत्रोपात्तः। किन्तु यस्य स्तुतिर्वेदेषु शतशस्सूक्तैस्समाम्नायते स देवराज इन्द्रोऽपि नोपेक्षामर्हतीत्यन्तरिक्षे द्वावपि देवावुपात्तौ। सदा दृश्यकार्यत्वाद् वायुः, सर्वदेवप्राधान्यात्तु इन्द्र इति।

तदित्थमृषयो देवाश्च प्राणविशेषा एवेति सम्यक् प्रमाणैः प्रसाधितम्। तत्र ऋषय आद्याः, देवास्तु तज्जन्या इत्यपि शतपथप्रमाणेन संकेतितम्। भगवान् मनुरप्येषां जन्यजनकभावमाह—

ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः।
देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः॥
[ मनु० ३।२०१ ]

अत्र पूर्वार्धे 'देवमानवाः' इति पाठः प्रायेणोपलभ्यते। परं श्रीगुरुचरणा विद्यावाचस्पतिमहाभागाः 'देवदानवाः' इति पाठमेव साधु मन्यन्ते। देवाश्च असुराश्चेति

द्विविधाः प्राणाः पितृभ्य उत्पद्यन्ते । तत्र प्रकाशे देवानां प्राधान्यम्, तमसि त्वसुराणाम् । अत एव रात्रिमासुरीमाहुः । ब्रह्मसूत्रेष्वपि देवताधिकरणे भगवता बादरायणेन देवानधिकृत्योक्तम्—"ज्योतिषि भावाच्च" [१।३।३२] इति । ज्योतिषि संसक्ता एव देवा न तु शरीरभृतः । तेषां ब्रह्मविद्यायामधिकारः कथं संभवेदिति तदभिप्रायः । एतत्सूत्रं व्याख्यातं श्रीशङ्करभगवत्पादैः शारीरकभाष्ये[१]। तेन सूर्यमण्डलसंसक्तत्वादित्यादीनां देवानां स्फुटीकृता । मण्डले संसक्ताश्च तत्परिचालकाः प्राणविशेषा एव देवपदवाच्या इत्युक्तं भवति । यत्त्वग्रिमसूत्रे देवानामप्यधिकारः प्रतिपादितो यच्च तत्र भाष्यकृद्भिर्व्याख्यातम्—"ज्योतिरादिविषया अप्यादित्यादयो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादिषु तथा व्यवहारात् । अस्ति ह्यैश्वर्ययोगाद्देवतानां यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम्" इति । तदेतद् द्वैविध्यं देवानामग्रे व्याख्यास्यते । इह त्वेतावदेव वक्तव्यं यत् प्रकाशभागो देवैः सम्पाद्यते, तत्रैव च त आवर्तमानास्तिष्ठन्ति । तमस्त्वसुरप्राणैः सम्पादितम्, तत्रैव चासुराणां स्थितिः । एते देवा असुराश्च पितृप्राणेभ्य आविर्भवन्ति, एभ्यश्चाग्रे गन्धर्वप्राणाः । तत्र ऋषयः सप्त, पितरोऽष्टौ, देवास्त्रयस्त्रिंशत्, असुरा नवनवतिः गन्धर्वाः सप्तविंशतिरिति । मानवास्तु मनोः प्राणादुत्पद्यन्ते । स चार्द्धेन्द्ररूपः । तत्रेह केवलमृषयः देवाश्च व्याख्येयाः । पितरः, असुराः, गन्धर्वाः, मानवाश्च नेह प्रसक्ताः ।

एषु ऋषिप्राणा मुख्याः सर्वतः प्रथमाश्चेत्युक्तम् । अन्यैरसंपृक्ताः शुद्धा अत एव प्रथमजा ऋषिप्राणाः । ते चाध्यात्मम्, अधिभूतम्, अधिदैवं च सप्त सप्तधा आत्मानं व्यवस्थाप्य तिष्ठन्ति प्राणान्तराण्युत्पादयन्ति च । "प्राणो वै वसिष्ठ ऋषिः, यद्वैनुश्रेष्ठस्तेन वसिष्ठः, अथो यद् विस्तृततमो वसति तेनो एव वसिष्ठः" [शतपथ० ८।१।१।६], "मनो वै भरद्वाज ऋषिः । अन्नं वाजः । यो वै मनो बिभर्ति सोऽन्नं वाजं भरति । तस्मान्मनो भरद्वाज ऋषिः" [शतपथ० ८।१।१।६], "चक्षुर्वै जमदग्निरृषिः । यदनेन जगत्पश्यति, अथो मनुते तस्माच्चक्षुर्जमदग्निरृषिः" शतपथ० ८।१।२।३] इत्यादिना ब्राह्मणेषु तत्र तत्राध्यात्मिका ऋषयो व्याख्याताः ।

मन्त्रे च सप्ताऽपि निर्दिश्यन्ते—

साकंजानां सप्तथमाहुरेकजं षडिद् यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥
[ ऋक्० १।१६४।१५ ]

---

१. "यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगदवभासयति, तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते, लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च । न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयार्थित्वादिना वा योगोऽवगन्तुं शक्यते, मृदादिवदचेतनत्वावगमात् । एतेनाग्न्यादयो व्याख्याताः" इति ।

अयं मन्त्र आध्यात्मिकेषु ऋषिष्वेवं व्याख्येयः—"सप्त शीर्षन् प्राणाः" [शत० ९।५।२।८] इत्यादि बहुधा श्रूयते। तत्रेदं रहस्यम्—मनुष्यशरीरेऽत्र चतस्रो गुहाः (निगूढानि स्थानानि) सन्ति—(१) शिरोगुहा, (२) उरोगुहा, (३) उदरगुहा, (४) बस्तिगुहा चेति। तासु प्रत्येकं सप्त प्राणायतनानि कार्यसम्पादकानि स्थानानि विद्यन्ते। इन्द्रियनाम्नाप्येतानि व्यवह्रियन्ते। सप्तस्वपि शक्तिप्रद एको मुख्यः केन्द्रभूत इन्द्रः।

तेषु च सप्तसु षड् द्वन्द्वक्रमेण तिष्ठन्ति अन्तिमं त्वेकमेव। यथा शिरोगुहायां द्वे श्रोत्रे, द्वे चक्षुषी, द्वे नासिके इति षट्, सप्तमं मुखबिलं त्वेकम्। केन्द्रभूतश्च ब्रह्मरन्ध्रगतो मुख्यो ज्ञानशक्तिप्रदः प्राणः। द्वितीयायामुरोगुहायां द्वौ बाहू, द्वौ फुप्फुसौ, द्वौ स्तनौ, हृदयं तु सप्तममेकम्, केन्द्रभूतोऽत्र कण्ठकूपः पराक्रमशक्तिप्रदः। तृतीयायामुदरगुहायां यकृत्प्लीहे, आमाशयपक्वाशयौ, वृक्कौ, सप्तमी नाभिस्त्वेका, केन्द्रभूतमत्र हृदयमेव पूर्वगुहाया अन्तिमं स्थानमन्नसंग्रहविभजनादिशक्तिप्रदम्। अथ चतुर्थ्यां बस्तिगुहायां पादौ, मूत्रवीर्योत्सर्गच्छिद्रे, अण्डकोशौ, सप्तमी त्वेका बस्तिः। केन्द्रभूताऽत्र नाभिरेव पूर्वगुहाया अन्तिमं स्थानं शरीरक्रमनिर्वाहकोत्सर्गादिशक्तिप्रदम्।

साकंजानां सदैव प्रतिशरीरमुत्पन्नानां प्राणानां मध्ये सप्तममेकमाहुः। 'षड्डेव' ऋषयः प्राणाः 'यमाः' युग्मकरूपेण स्थिताः, ते च देवजाः' तेभ्यस्तेभ्यो देवेभ्य उत्पन्नाः, यथा आदित्याच्चक्षुषी दिग्भ्यः श्रोत्रे, अश्विभ्यो घ्राणे इत्यादिः शारीरविज्ञानप्रपञ्चः। तेषां स्वरूपाणि सर्वेषां प्राणिनामिष्टानि, पृथक् पृथक् स्थानेषु स्थापितानि, रूपभेदेन विकृतानि विविधकार्यसम्पादकानि च अधिष्ठात्रे रेजन्ते=कम्पन्ते=सचेष्टानि तिष्ठन्तीत्यस्मिन्पक्षे मन्त्रपदार्थः।

पूर्वं देवजनकत्वेन व्याख्यातानामृषीणां मन्त्रे देवजन्यत्वं कथमुक्तमिति तु न शङ्कनीयम्। यतो हि वैज्ञानिकप्रक्रियायां पदार्थानामन्योन्यं जन्यजनकभावः स्फुटं दृश्यते। यथा हि तन्तुनिर्मितादपि पटात् पृथङ् निःसार्यमाणास्तन्तवो जायन्ते, मृदा निर्मितादपि च कुड्यात् पुनर्मृन्निःसार्यते, तथैव ऋषिप्राणादेव समुत्पन्नेभ्यः पितृभ्यो देवेभ्यो वा पुनः पृथग्भूय निःसरन्त ऋषयः पितृजा इव देवजा इव भवन्तीति कोऽत्र विस्मयः। अविकृतोपादानोपादेयभावे सर्वत्र व्यवस्थेयं वैज्ञानिकाभिमता। अत एव निरुक्तकृता भगवता यास्केनापि दैवतकाण्डे देवस्वरूपविचारे—"अन्योन्यजन्मानो भवन्ति, इतरेतरप्रकृतयः" [ नि० दै० का० १ अ० ] इति स्फुटमुक्तम्।

वेदभाष्यकृता माधवाचार्येण तु मन्त्रोऽयमृतुपरत्वेन व्याख्यातः[१]।

---

१. साकंजानां कालरूपेण सहैवोत्पन्नानाम्, ऋतूनां मध्ये षडेव ऋषयो गमनशीलाः, देवजा आदित्याद्देवादुत्पन्नाः, ऋतवः, यमाः=युग्मकाः, मासद्वयात्मका भवन्ति। सप्तमं सप्त-

तदिदमृषीणामाधिभौतिकं स्वरूपमृतूत्पादकतत्त्वरूपं द्रष्टव्यम् ।

यद्यपि ऋतूनाम्—"ऋतवः पितरः" [ शतपथ० २।६।१।४२ ], "षड् ऋतूंश्च नमस्कुर्यात् पितॄनेव च धर्मवित्" [ मनु० ३.२१७ ] इत्याद्यासु श्रुतिस्मृतिषु पितृत्वमाख्यातम्, तथापि ऋषिभ्य एव पितरो जायन्ते. ऋषय एव पितृरूपेण परिणमन्तीति ऋतुमूलभूतानि तत्त्वानीह ऋतुशब्देनोपलक्षणीयानि ते च ऋषय एवेत्यत्र न विवादः । आधिदैविका ऋषयस्तु ताराह्रूपाः, ये तारामण्डले सप्तर्षिपदेनैवाख्यायन्ते ते ध्रुवं प्रदक्षिणीकृत्य दक्षिणस्यां दिशि स्थिताः । तेषामप्यन्यस्मिन्मन्त्रे संकेतः । तेष्वपि षट् परस्परं साम्मुख्येन तिष्ठन्ति । चत्वारश्चतुष्कोणमेकं विदधति, द्वौ चतुष्कोणादधः परस्परं साम्मुख्येन स्थितौ, सप्तमस्तु पृथगेकल एव । तेऽपि च जगन्निर्वाहिकानि तत्त्वान्युत्पादयन्तीति तत्रापि मन्त्रः सुयोजः । त एतेऽपि— "रोचन्ते रोचनादिवि" [ ऋ० १।६।१ ] इति मन्त्रे संकेतेनाम्नाताः, "सप्तर्षीं नु ह स्म पुरर्क्षा इत्याचक्षते, " अमी ह्युत्तरा हि सप्तर्षय उद्यन्ति" [ शतपथ० २।१।२।४ ] इति शतपथश्रुतौ च विवृता । इत्थमाध्यात्मिकमाधिदैविकमाधिभौतिकञ्च तत्त्वं गम्भीरार्था मन्त्राः प्रतिपादयन्तीत्यनैव दृष्टान्तेन भावनीयम् । भवतु नाम, मुख्यमृषित्वं यत् शतपथब्राह्मणे षष्टकाण्डारम्भे प्रतिपादितम्, तत्राप्येषां सप्तधैवावस्थितिरुक्ता —

"स योऽयं मध्ये प्राणः, एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्धः । इन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षम्, परोक्षकामा हि देवास्त इद्धाः सप्त नाना पुरुषानसृजन्त" इत्यादि ।

सप्तानां श्रीभूतश्च शिरोरूपतां गतोऽग्निरभवदित्याद्यप्यग्रे व्याख्यातम् । ऋषिभ्यः पितृक्रमेण देवाः प्रादुर्भवन्तीति पूर्वोक्तदिशामध्ये प्राण इन्द्ररूपतामापद्यते । सप्तानां समष्टेः सारस्त्वग्निरूपतामित्यप्यत्र स्फुटीभवति । अयं मध्यप्राण इन्द्र एव नभ्यः प्रजापतिरिति वैदिक्यां परिभाषायामुच्यते । भूतभौतिकरूपाः प्रजाः सृष्ट्वा ताः क्रोडीकृत्य स्थितो व्यापकः प्राणस्तु सर्वः प्रजापतिरिति परिभाष्यते । द्वयोरपि प्रतिपादकाविमौ मन्त्रौ—

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।  
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥  
[ यजु० ३१।१९ ]

---

मम्, अधिकमासं (स्वयं पृथग् ऋतुरूपन्तु) एकजम्—'एक एवाजायत' इत्येकजः, तथाभूतम्, एकमेव आहुः, तेषामृतूनां स्वरूपाणि इष्टानि सर्वलोकाभिमतानि । धामशः = तत्तत्स्थाने । विहितानि = पृथक् पृथक् स्थापितानि । रूपशः = रूपभेदेन रसयवाद्युत्पादकत्वेन, विकृतानि = विविधाकृतियुक्तानि, स्थात्रे = अधिष्ठात्रे = उपभोक्त्रे, रेजन्ते वलन्ति पुनः पुनरावर्तन्ते" इति तद्व्याख्यानसारः ।

अत्र केन्द्रगतो नभ्यः प्रजापतिराम्नायते । स हि गर्भे, अर्थात् केन्द्रे तिष्ठति । स एव च स्वशक्तिभिः पिण्डान् सृजतीति बहुधा विजायत इत्युक्तम् । वृत्ताकारे वस्तुनि केन्द्रज्ञानं कथञ्चित्सुलभं भवति । लम्बचिपिटादिवस्तुषु तु केन्द्रज्ञानं महता प्रयासेन गणितेनैव सम्पादयितुं शक्यते, अतः तस्य योनिं परिपश्यन्ति धीराः' इत्युक्तम् । योनिं स्थानमित्यर्थः । तदाधारेणैव सर्वाणि वस्तूनि स्थितानि भवन्ति । केन्द्रे प्रचलिते तद्वस्तुनः स्वरूपाद् भ्रंश एव समापतति । तत्तद्वस्तुनः केन्द्रं विज्ञाय यदि तत्राङ्गुलिनिक्षेपः क्रियेत, तर्ह्यङ्गुलिमात्राधारेण महतां गुरूणामपि वस्तूनां स्थितिर्भवतीत्याधुनिका वैज्ञानिका अपि मन्यन्ते । तदेतदुक्तम्—"तस्मिन् ह तस्थुर्भुवनानि विश्वा" इति । सर्वाणि भुवनानि केन्द्रमाधारीकृत्यैव तिष्ठन्तीति । इत्थं केन्द्रस्थप्राणविज्ञानमत्र निरूपितम् । सर्वप्रजापतिरूपकस्त्वेष मन्त्रः—

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥
[ ऋ० सं० १०।१२१।१० ]

सर्वाणि उत्पन्नानि वस्तूनि परितः प्रजापतिर्भवतीत्यत्र व्याख्यातम् । यः पूर्वेण मन्त्रेण केन्द्रस्थितः प्रजापतिर्व्याख्यातः स एव पूर्वोक्तशतपथश्रुताविन्द्रप्राणनाम्ना निरूपितः । तञ्च मध्यस्थं प्राणमभितः सप्तधा प्राणा अवतिष्ठन्ते । ते सप्तर्षय उच्यन्ते । तान् सप्तमध्यगः प्राणः समिन्धे, तत एव समिन्धनात् तस्येन्द्रपदवाच्यता शतपथश्रुतौ व्याकृता । तेन समिद्धाश्च प्राणाः सामन्ता उच्यन्ते । ते सप्तधा भवन्ति— नाभेरूर्ध्वम्, अधरतात्, द्वौ द्वौ पुरुषाविति चत्वारः प्राणा आत्मा, सोऽङ्गी भवति । ततो बहिर्धा त्रयः पुरुषाः सन्ति, पक्षपुच्छानीत्यङ्गानि । तथा च 'त्रिवृद्वै चक्षुः शुक्लं कृष्णं लोहितम्" [ कौषीतक ३।५ ] इति कौषीतकश्रुतेः कनीनिकाकृष्णाशुक्लैरक्षिवदिदं वर्तुवृत्तं त्रिवृद्रूप संपद्यते । मध्यबिन्दुरनिरुक्तोऽक्षरपुरुषसंपरिष्वक्तः प्राण इन्द्रः, स एको भागः । तं परितश्चत्वारः प्राणा आत्मा, स द्वितीयो भाग; तं परितो द्वौ पक्षावेकं पुच्छमिति त्रयः प्राणा अङ्गानीति तृतीयो भागः । अत्राङ्गिप्राणविगमे साङ्गोपाङ्गो विनश्यति । किन्तु यद्विगमे सत्यप्यङ्गी सत्तातो न च्यवते तदङ्गम् । यथा हस्तपादादिविगमेऽपि प्राणी जीवत्येव । नाभिहृदयमस्तिष्काद्यात्मप्राणापाये तु सद्यः प्राणी म्रियते ।

तेनैतत्कायरिम्भकाणां प्राणानां नाभ्येन्द्रेणोपनहनतारतभ्यान्मुख्यामुख्यत्वाभ्यां भेदोऽवकल्पते । यत्र यत्र प्राणेनार्थस्तत्र सर्वत्रैवमिन्द्रात्माङ्गभेदात् त्रैविध्यमिति साधारणो नियमः । तच्चेदमात्मप्राणाङ्गप्राणद्वैविध्यकृतं रूपमिन्द्रस्यात्मनोऽधिष्ठानं शरीरारम्भकभूतानामायतनं विज्ञायते ।

| इन्द्रः | आत्मा | अङ्गानि | प्रजापतिः |
|---|---|---|---|
| १ | ४ | २ | ७ |

इयं पक्षपुच्छकल्पना उक्ते शतपथे तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्यां च स्पष्टा।

अथैतेषां सप्तानामङ्गाङ्गिपुरुषाणां श्रीभिरिन्द्रसमिन्धनविशेषादूर्ध्वमुदूढरसरूपाभिः पृथगिवामृतं सप्तप्राणरसमेकपुरुषमात्रं शिरो भवति। यस्यैतच्छिरस्तच्छरीरं तन्मर्त्यम्। वाक्प्रधानं प्रसुप्तमिव निश्चेष्टं शरीरम् प्राणप्रधानं जाग्रदिव कुर्वद्रूपं शिरः। शिरसि च शरीरे च पृथगिव सप्त सप्त प्राणाः श्रूयन्ते। देवप्रधानं शिरः प्राणमयम् तत्रैतानि भूतानि देवानाश्रयन्ते। आहुतयश्च देवेभ्यः क्रियन्ते, न भूतेभ्यः। तेनेदमभौतिकं शिरः कृश्यतो न कृश्यति मेद्यतो न मेद्यति।

अथ भूतप्रधानमिदं शरीरम्। तत्रैते देवा भूतान्याश्रयन्ते। आहुतयश्च भूतेभ्यः क्रियन्ते न देवेभ्यः, तेनैते देवाः कृश्यतो न कृश्यन्ति, मेद्यतो न मेद्यन्ति। तत्र शारीरैः सप्तभिः पुरुषैरेकः पुरुषो भवति। तमेतं पुरुषमग्निरित्याचक्षते। सोऽयं वागप्सहकृतः शुक्रोऽग्निः द्विविधः—मर्त्यश्चामृतश्च। यो मर्त्यः सोऽग्निश्चित्यो नाम। यथा मनुष्यशरीरे लोमत्वगसृग्वसामांसास्थिमज्जशुक्राणि चीयमानानि चित्योऽग्निर्भवति। एष मर्त्यः प्रजापतेरर्द्धभागः। तत्र सर्वाणि भूतानि श्रितानि।

अथैतत्सप्तपुरुषश्रीसंभूतैः शिरस्यैः सप्तभिः प्राणैरेकः प्राणो भवति। सोऽग्निरमृतश्चितनिधेयो नाम। येन येन रूपेणायं चित्योऽग्निश्चीयते, तत्र सर्वत्रायं तत्तदभ्यन्तरेऽनुस्यूतो भवतीति चितेनिधेय उच्यते। सोऽमृतः शुक्रोऽग्निर्वागप्सहकृतः प्रजापतेरर्द्धभागः। तत्र सर्वे देवाः श्रिताः। "अत्र हि सर्वेभ्यो जुह्वति" [ शतपथ० ६।१।१। ] इति वाजिश्रुतौ श्रूयते। सोऽयं शतपथश्रुतौ षष्ठकाण्डारम्भ उक्तस्य ऋषितत्त्वस्य सारः। तदित्थमवस्थानभेदेन सप्त ऋषय आख्याताः।

अथ सृष्टिविधावेते द्विविधा भवन्ति—उन्मुग्धावयवाः, उद्बुद्धावयवाश्च। आद्याः 'असत्'-पदवाच्याः प्राणाः सत्यलोकेऽवतिष्ठन्ते। अथैते तपोलोकमागत्य तप्यमानाः परिक्षुब्धाः सन्तः क्रमेण तृतीये पारमेष्ठ्ये जनलोके समागता उद्बुद्धावयवा भूत्वा द्वितीयाः पितरो जायन्ते। तपोजा हीमे तपसैव नानारूपा जायन्ते।

तत्रोद्बुद्धावस्थायामवयवधर्मतो भेदादमी ऋषयोऽनन्तविद्या भवन्ति। तेषु द्वादशातिसंस्तुतयः स्मर्यन्ते—भृग्वङ्गिरसौ अत्रिमरीची, पुलस्त्यपुलहौ, क्रतुदक्षौ, वसिष्ठागस्त्यौ, विश्वामित्रविश्वकर्माणाविति।

त एते पितृसंज्ञाः सृष्टिकर्तारः प्राणा वाच्येव योनावात्मानं सिञ्चन्तोऽक्षर-पुरुषमनोविशेषगृहीतबलप्रयोगाद् विभिन्नरूपा एता सर्वाः सृष्टीरुत्पादयन्ति । तथा चैतरेयश्रुतिराह—

"प्राणो वा आयुः, प्राणो रेतः, वाग् योनिः, योनिं तदुपसन्धाय रेतः सिञ्चति । रेतस्तत्सिक्तं विकरोति । सिक्तिर्वा अग्रेऽथ विकृतिः । रेतस्तद् विकृतं प्रजनयति । विकृतिर्वा अग्रेऽथ जातिः" [ऐ० ब्रा० १०।३८-३९] इति ।

अयमाशयः—सर्वजगन्मूलानि वाक्प्राणमनांसि मया वेदस्वरूपव्याख्याने व्याकृतपूर्वाणि । तत्र सृष्टिसम्पादने क्रियाप्रधानः प्राणो मुख्यः । एष च प्राणो मनसेषितो वाचि सिच्यते । "सोमो वै रेतोधाः" इति बहुधा श्रवणात् । सोममयं मन एवादौ कामयते । मानसं रूपं प्रकल्प्य तदर्थं प्राणं नियुङ्क्ते । प्राणेन चाहता वाग् विक्रियते "त्वष्टा रूपाणि विकरोति" इति । स एष सर्वसृष्टिसाधारणो नियमः । इयं वागेव पूर्वोक्तप्रश्नोपनिषच्छ्रुतौ रयिनाम्ना व्यपदिष्टा । पूर्वोक्ते शाकल्ययाज्ञवल्क्यसंवादे चाध्यर्धदेवाख्यानेऽर्द्धरूपेण व्याख्याता ।

तदेवं प्राणात्मकानामृषीणां तत्त्वं संक्षेपेण निर्दर्शितम् । अध्यात्ममधिभूतमधि-दैवं च स्थिता इमे जगत्कार्यं परिचालयन्तीत्यपि दिक् प्रदर्शिता ।

अथैवंविधमृषितत्त्वं येषां हृदये परमेश्वरकृपया प्रादुर्भूतम्, ते मनुष्या अपि ऋषय उच्यन्ते—"अजान् ह वै पृश्नीन् तपस्यमानान् ब्रह्म स्वयम्भु अभ्यानर्षत् । त ऋषयो अभवन् तद् ऋषीणामृषित्वम् ।" [ तै० आ० २।९ ] इत्यादिश्रुतिषु तेऽपि ऋषिपदेन निरुक्ताः । एते मन्त्रद्रष्टार ऋषय एव बृहद्देवतायां सर्वानुक्रमणीसूत्रादिषु च विस्तरेण विवृताः । एत एव मन्त्राणामर्थनिर्वचने वक्तृत्वेनानुसन्धेया भवन्तीति निरुक्तसायणमाधवभाष्यादिषु स्पष्टम् । यथा हि काव्यादिषु पुराणादिषु च कवि-रुद्देष्टा चान्यमुखेन स्ववक्तव्यं प्रतिपादयति योऽर्थः कविनिबद्धवक्तृप्रौढोक्तिसिद्ध इति पदेनालङ्कारिकैर्व्यवहृतः, सेयमपि प्रक्रिया वेदेषु दृश्यते । यथा—

पिप्पल्यः समवदन्तायतीजननादधि
यं जीवमश्नवामहै न स रिष्याति पूरुष ॥
[ अथर्व० ६।१०९।२ ]

इत्यत्रोत्तरार्धं पिप्पलीमुखेनैव वाचितम् ।

इन्द्रो अस्माँ अरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम् ।
देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥
[ ऋ० सं० ३।३३।६ ]

इति मन्त्रो नदीमुखेनैव वाचितः । नद्य एव च तस्य ऋषिका उक्ताः एवं-विधेषु मन्त्रेषु ऋषिनिबद्धान् तानेव वक्तृत्वेनानुसन्धाय मन्त्रार्थो निर्वक्तव्यो भवति ।

तदित्थं पञ्चधा ऋषिशब्दप्रवृत्तिर्व्याख्याता। प्राणरूपाणामृषीणामध्यात्मादिभेदेन त्रिविधा मन्त्रद्रष्टृषु, द्रष्टृनिबद्धेषु चान्येष्विति द्वे, सम्भूय पञ्चेति।

अनयैव दिशा देवा अप्यनेकधा श्रूयन्ते। प्राणरूपा देवास्तत्संख्या त्रयस्त्रिंशच्च पूर्वं प्रतिपादिता। तेऽप्यध्यात्मादिभेदेन नानाविधत्वं प्रतिपद्यन्ते।

"अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्" [ ऐ० उ० द्वि० क० ४ ]

इत्याद्यासु श्रुतिष्विन्द्रियाणां देवत्वमध्यात्ममाम्नातम्। श्रीभगवद्गीतायामपि दैवासुरसर्गवर्णने विवृतम्। श्रीशङ्करभगवत्पादैरप्युपनिषद्भाष्ये देवासुरसंग्रामविवरणे वृत्तीनामेव देवासुरत्वं व्याख्यातम्। अधिदैवतं तारामण्डलेऽपि देवा विद्यन्ते। सूर्यस्य तु सर्वदेव समष्टित्वं पूर्वं प्रदर्शितमेव। 'चित्रं देवानामुदगादनीकम्" [ ऋ० १।११५।१ ] इति सर्वत्र सुप्रसिद्धे सूर्योपस्थानमन्त्रेऽपि देवानां चित्रमनीकं सूर्यं इति स्पष्टीभवत्येव। एवं 'चन्द्रमा देवता', 'नक्षत्राणि देवता', इत्याद्यपि रुद्राध्यायादिषु समाम्नायत एव। तेषु तेषु नक्षत्रेषु तद् योगतारानाम्ना ज्योतिर्विद एकां तारां व्यवहरन्ति। सा देवरूपैव मन्यते। तामाश्रित्यैव च तत्तन्नक्षत्रदेवानां यागस्तैत्तिरीयब्राह्मणे तृतीयकाण्डारम्भे सुविस्तृतमाम्नातः। अथ सर्वत्र स्वस्तिवाचनरूपेण पठ्यमानः सुप्रसिद्धो मन्त्र एव तावद् विमृश्यताम्--

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥
[ यजु० सं० २४।१९ ]

अस्य पर्यालोचने क्रियमाणे संशयोऽयमुदेति यदिन्द्रस्य, पूष्णः, तार्क्ष्यस्य, बृहस्पतेश्च कः परस्परं सम्बन्धो येन ते मिलिता अत्र निर्दिष्टा इति। द्विविधो हि देवानां सम्बन्धो निरुक्तकृता व्याख्यातः— संस्तविकश्च एकहविर्भाक्त्वं च। उभयविधोऽपि नैषां क्वाप्यन्यत्र दृष्टः। नैषां सम्मिलितानामुद्देश्येन क्वापि हविर्दानं विहितम्, नाप्येकस्थानस्थिताः, न चाप्यन्यत्र सहस्तुतिरपि श्रूयते। तदेषां साहचर्येण दर्शने को हेतुरित्यन्वेषणप्रक्रियया विचारे क्रियमाणे स्फुटमिदं विचारगोचरीभवति यत् खमण्डलस्य चत्वारो भागा अत्र नक्षत्रदेवता द्वारीकृत्य निर्दिष्टाः। खमण्डलस्य हि षष्टयधिकशतत्रयमिता(३६०)अंशाः ज्योतिर्विद्यायां व्यवहारसौकर्याय कल्प्यन्ते। तत्र च कृत्तिकादिनक्षत्रनाम्ना प्रत्येकं नक्षत्रं विंशतिकलाधिकैस्त्रयोदशभिरंशैः कल्प्यत इति सप्तविंशतिः खगोलस्य भागा भवन्ति। संक्षेपेण भागकल्पनायां तु किञ्चिदूनसप्तनक्षत्रैरेकैकं भागं प्रकल्प्य चत्वार एव भागाः कल्पिता भवन्ति। त एव भागा देवतामुखेनास्मिन्मन्त्रे निर्दिष्टाः। काञ्चित् प्रबलां ज्योतिष्मतीं तारामभिलक्ष्य विभागज्ञानं सुकरं भवतीति तदनुरोधेन परिचाययितुं किञ्चिन्न्यूनाधिक्यमपि कृतम्। यथाश्विन्यादिगणनायां चित्रानक्षत्रं चतुर्दशं भवतीति तन्नक्षत्रमण्डलमध्यगं

शक्यते वक्तुम् । तद्दैवता च कौशिक इन्द्र उच्यते । सोऽयं मन्त्रस्यादौ निर्दिष्टः । अत्र वृद्धश्रवा इति विशेषणं प्रौढयशस्को वाऽधिकधनो वेति भाष्यकृद्भिर्व्याख्यातम्, परं 'प्रवृद्धकर्णः' इत्यर्थः सुसंगतो भवति, श्रवःशब्दस्य कर्णवाचकत्वेन सुप्रसिद्धत्वात् । चित्रानक्षत्रस्याकारो यत्र चित्रितस्तत्र तस्य लम्बकर्णत्वमिव परिचीयते । लम्बकर्ण उलूक उच्यते । कौशिकशब्द उलूकवाचकोऽपीति कौशिकस्येन्द्रस्य तद्दैवतत्त्वाख्यानमपि सुसंगतं भवति । अथास्य समानान्तरेऽस्माच्चतुर्दशं रेवतीनक्षत्रमस्य संमुखीनम् । तस्य देवता पूषेति ज्योतिर्वित्सु प्रसिद्धम् स पूषा मन्त्रस्य द्वितीये चरण आम्नातः । तस्य सर्ववेदा इति विशेषणं सर्वान् विन्दति, सर्वेषां नक्षत्राणामन्ते स्थित इति भावं व्यनक्ति ।

अथ चित्राया अग्रेऽष्टमं नक्षत्रं श्रवणाख्यम्, तत्र तिस्रस्तारा: समवेता इति तृक्षपदं तार्क्ष्यरूपेण परिवर्त्य तृतीये पादेऽभिहतम् । श्रवणस्य देवता भगवान् विष्णुः तस्य च वाहनं गरुडस्तार्क्ष्य इति संगतिरप्यत्राभिसंहिता । अयं च क्रान्तिवृत्तस्य परिधिभागे सन्निविष्ट इत्यरिष्टनेमिरिति विशेषणं तस्य दत्तम् । अरिष्टस्य सर्वक्षयनिवारकस्य सूर्यरथस्य नेमिः परिधिरिति यावत् । अस्य सम्मुखीनं त्रयोदशनक्षत्रान्तरितं पुष्यनक्षत्रमिति तद्देवता बृहस्पतिर्मन्त्रस्यान्ते निर्दिष्टः । एताश्चेन्द्रपूषतार्क्ष्यबृहस्पतिपदवाच्यास्तारा: पूर्वोक्तेषु चतुर्षु नक्षत्रेषु सन्निविष्टास्तेषां नक्षत्राणां योगस्तारा इति तन्मुखेन सर्वमपि नक्षत्रमण्डलमस्माकं शुभप्रदं कल्याणकारकं भवत्वित्याशास्यते मन्त्रेणानेन । तदित्थमधिदैवतं देवा: स्पष्टं व्याख्याता: । अधिभूतं च तेषामग्निवाय्वादिरूपाणि प्रसिद्धान्येव । भौतिकेषु दृश्यमानेष्वग्निवाय्वादयो नियामका: प्राणा: । ते मन्त्रैरग्रेऽनुपदं व्याख्यायन्ते ।

अथ यथा प्राणरूपा देवा वेदे प्रसिद्ध्यन्ति, तथा प्राणिरूपा अपि ते वेदेषु समाम्नायन्ते । "अन्वाख्याने त्वदुच्यते, इतिहासे त्वत्" [ शतपथ० ११।१।६।९ ] इति शतपथब्राह्मण उत्पत्त्याख्याने सृष्टिप्रक्रियायां देवा अन्ये भवन्ति, इतिहासे त्वन्य इति स्फुटमुक्तम् । इतिहासस्य संबन्धः प्राणरूपैर्देवैरिति तदाशयः । मन्त्रेऽपीदं संकेतितम्--

सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम ।
दिवं पृथिव्या अध्यारुहामाविदाम देवान् स्वर्ज्योतिः ।।
[ यजुःसं ८।५२ [

अत्र द्युलोकारोहणानन्तरं देवानां ज्ञानमाम्नातम् । तेन द्युलोके प्राणिभूता देवा निवसन्तीति संकेत्यते । सांख्यदर्शने च चतुर्दशविधप्राणिसर्गनिरूपणावसरे— "अष्टविकल्पो दैवः" [ सांख्यका० ५३ ] इति सत्त्वप्रधानस्य देवसर्गस्य, देवपितृप्रजापत्यादिभेदेनाष्टविधत्वमुक्तम् । निरुक्तकृताऽपि च दैवतकाण्डे देवा: पुरुषविधा अपुरुषविधा वेति विचारयताऽन्ते—"अपि वा उभयविधाः स्युः" [ दैवतकाण्डे १ अ० द्वि० पा० ३ क० ] इत्युपसंहृतम् ।

तत्र हि पुरुषा इव करचरणादिमन्तो देवा उत नदीपर्वतादिवदशरीरा इति विचारमारभ्य मन्त्रेषु करचरणनखाद्या इन्द्रादीनां श्रूयन्त इति तत्तन्मन्त्रनिदर्शनैः पुरुषविधत्वं स्थापयित्वा नदीप्रस्तरादीनामप्येवंविधैरङ्गैः स्तुतिर्दृश्यत इति तद्वदेव कल्पितान्येवाङ्गानि देवानामपि वर्णितानि स्युः, यथा बहुकार्यकर्तृत्वमालक्ष्य सुदृढबाहुकल्पना, सर्वत्र प्राप्तिशीलत्वमालक्ष्य त्वरितपादकल्पना बुद्धिप्रसारकत्वं च वक्तुमुपदेशप्रदमुखकल्पनेत्यादिः कल्पिताकारादिवर्णनेनापुरुषविधत्वं व्यवस्थापितम्। एवमुभौ पक्षावुपपाद्य विनिगमनाविरहादुभयविधत्वमुपन्यस्तम्। उभयविधे भिन्ने भिन्ने कथमेकविधशब्दप्रवृत्तिरिति शङ्कामपनेतुमुभयोः परस्परसम्बन्धस्थापनाय "अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः, यथा यज्ञो यजमानस्य एष आख्यानसमयः" इत्युपसंहृतम्। अत्र व्याख्याकाराणां दृश्यते व्याख्याभेदः। केचित् पुरुषविधत्वं मुख्यं मन्यमानाः—अपुरुषविधानि तत्त्वानि तेषां चेतनानामनुध्यानरूपया प्रेरणया प्रचलन्ति। यथाऽऽत्मनोऽनुध्यानेन शरीरं प्रचलति। तदित्थं लोकेषु कार्यकराणि तत्त्वानि शरीरभुतानि। तेषां परिचालकाश्च चेतना देवाः। तदेव प्रोक्तं पुरुषविधानामर्थाच्चेतनानामेव सतां कर्मात्मानः कर्मसम्पादकाः शरीरविशेषा एतेऽशरीरतत्त्वभूताः स्युः। यथा यजमान एकश्चेतनः तस्य कर्मभूतश्च कर्मात्मा यज्ञ इति व्याचक्षते।

एतमेव सिद्धान्तमभ्युपगम्य श्रीशङ्करभगवत्पादैः पूर्वोदाहृते भाष्ये चेतनानां देवानां सर्वरूपेणावस्थातुमस्ति सामर्थ्यमित्युक्तम्। एतदेव च—"अभिमानिव्यपदेशस्तु विशुषानुगतिभ्याम्" [ २।१।५ ] इति ब्रह्मसूत्रेण निर्दिष्टम्। सर्वेष्वपि लौकिकेषु दृश्यमानेषु पदार्थेषु तदभिमानिन्यः, अर्थात् तान् पदार्थान् स्वप्रेर्यतया स्वशरीराणीवाभिमन्यमानाश्चेतना देवा विराजन्ते, तानेवाभिलक्ष्य 'मृदब्रवीत्,' 'आपो अब्रुवन्' इत्याद्याः श्रुतय उपपद्यन्ते। प्राणानां स्वश्रेष्ठत्वख्यापनाय परस्परं विवादो यश्छान्दोग्योपनिषदादिष्वाख्यातः, यच्चेन्द्रविरोचनादीनां प्रजापतिसविधे ब्रह्मविद्याग्रहणाय समुपस्थान तदप्येवंविधानभिमानिन एव लक्ष्यीकृत्य संगच्छते। ते चाभिमानिनो देवा द्युलोके तारामण्डलादिषु शरीरिणो निवसन्तीत्येकविधा व्याख्या। अन्ये तु तत्त्वान्येव देवरूपेण मुख्यानि मन्वाना निरुक्ते—"अपुरुषविधानामेव सताम्" इत्यकारप्रश्लेषेण छित्वा तैस्तैर्निर्मितशरीराः कर्मात्मानः कर्मफलभोक्तार एते पुरुषविधा लोकान्तरेषु निवसन्तः प्राणिविशेषा देवा इति व्याचक्षते। तादृशदेवत्वप्राप्तिमुद्दिश्यैव च यजमाना यज्ञमनुतिष्ठन्तीत्युक्तम्— 'यथा यज्ञो यजमानस्य" इति। 'अभिमानिव्यपदेशस्तु' इति सूत्रे तु सर्वत्रानुप्रविष्टं परं ब्रह्मैव सर्वाभिमानितया सूत्रितम्। 'विशेषानुगतिभ्याम्' इत्युक्त्या एतदेव सूत्रकारेण ध्वनितम् भाष्यकारेण च सूत्रव्याख्याया अन्ते—"तत्तेज ऐक्षत' इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम्,' इत्येवं परब्रह्मण एवाभिमानित्वं स्पष्टं व्याख्यातम्। यच्चा-

स्माभिः शतपथश्रुतिमुदाहृत्य जगदुत्पत्त्यादिष्वन्ये देवा इतिहासेषु चान्ये इति विरूपितम् । तदेव निरुक्तकृता एष चाख्यानसमय इति स्पष्टीकृतम् । आख्यान—विदामर्थादैतिहासिकानामेष समयः सिद्धातः । शरीरधारिदेवतावादरूप इति तदर्थः परब्रह्मण एव सर्वत्राभिमानितया प्रवेश इत्यपि निरुक्तकृता 'यथा यज्ञो यजमानस्य' इत्युक्त्या ध्वनितम् । यज्ञो नाम विष्णुः परमात्मा यजमानादीनां कर्मपरिचालक आत्मा भूत्वा सर्वं सम्पादयतीत्यपि व्याख्यातुं शक्यते । तस्मात् परमात्मातिरिक्तस्य जडतत्त्वपरिचालकस्याभिमानिनः स्वीकारे मानाभाव इति द्वितीयपक्षवादिनां मतम् । यथा तथा वा भवतु । परस्परं संघर्षाद्युपपत्तये विशेषत इन्द्रादीनां ब्रह्मविद्याशिक्षणाय प्रजापत्युपगमनादेः श्रुत्युक्तस्योपपत्तये लोकान्तरवासिनः प्राणिभूता देवास्तु तैरप्युपगन्तव्या एव । युक्त्यापि चैते साधयितुं शक्यन्ते ।

सृष्टिक्रमे विकासवादो वेदपुराणादिष्वपि वर्णितः । आधुनिकैर्वैज्ञानिकैरपि च स एव सिद्धान्तत्वेन मन्यते । तत्र वैदिकदृष्ट्या पार्थिवेषु प्राणिषु सूर्याकर्षणं यावद्वर्धते स एव प्राणिनां विकासः । प्राणिषु बुद्धिः सौरप्राणेभ्य एव प्रादुर्भवति वर्द्धते चेत्यस्मदाराध्येन गायत्रीमन्त्रेणैव सुप्रसिद्धयति । यावदधिकं च यस्मिन्प्राणिनि सौरप्राणजनितं सूर्याभिमुखमाकर्षणं तावदेव स पृथिव्या आकर्षणाद् विमुच्यते, बुद्धौ च तस्य प्रागल्भ्यं प्रवर्द्धते । प्राणिषु सर्वतः प्रथमं वृक्षलताद्या उत्पद्यन्त इति पुराणेष्वपि सृष्टिप्रक्रियायां सर्वत्रैव स्पष्टम् । मुखे प्रारम्भे भवतीति मुख्यसर्गोऽयं पुराणेष्वाख्यातः । तेष्वेतेषु पृथिव्या आकर्षणमतिदृढम् । नैते स्वस्थानादङ्गुलमात्रमपि चलितुं शक्नुवन्ति । सूर्यस्याकर्षणं त्वेतावदेव यत् क्रमेण वर्द्धन्ते । बुद्धिविकासश्चैतेष्वनुद्भूतप्रायः । "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" [मनु० १।४९] इति भगवता मनुना सुखदुःखाद्यनुभव एषामुक्तः । परमन्तःसंज्ञितया तादृशमनुभवं प्रकाशयितुमेते न क्षमन्ते । इतः परं सरीसृपसृष्टिः, ते सरीसृपाः पृथिव्या आकर्षणादेतावद्विमुक्ता यत् स्वस्थानात् प्रचलितुं प्रभवन्ति । किन्तु पृथिव्यां सर्वाङ्गलग्ना एव सर्वदा तिष्ठन्ति । ऊर्ध्वमुत्थातुं कदापि न प्रभवन्ति । अथैतेष्वेव केषाञ्चित्पादा अपि निस्सरन्ति । ते सूर्याकर्षणेन किञ्चिद्भूमेरुत्थापिताः । तेषु केचन शतपदाः, अत्यल्पं तेषां शरीरस्योत्थानम्, अधिकेन भागेन पृथिव्यैव ते बद्धाः । अथ क्रमेण विकासे सूर्याकर्षणबहुत्वे पादा ह्रसन्ति । षट्पदपर्यन्तं सरीसृपेष्वेव गणना । क्रमेण विकासे ये चतुष्पदा भवन्ति, ते पशुषु मृगेषु च गण्यन्ते । तेषां पृथिव्या अतिसूक्ष्मेणांशेन सम्बन्धः । उत्थाय ते यथेच्छं धावन्ति, बहुदूरपर्यन्तं च गन्तुं प्रभवन्ति । बुद्धिरपि तेषां स्थावरसरीसृपाद्यपेक्षया बहु प्रवृद्धा । अनुमानशीला अपि ते भवन्ति शिक्षिताश्च शब्देनापि बोधयितुं शक्यन्ते । किमन्यत्, इदानीन्तु शिक्षित्वा पशवो मृगाश्चापि मनुष्योचितान्यपि कार्याणि कार्यन्ते । इतः परमपि विकासे मनुष्यतालाभः । मनुष्यो हि केवलं द्वाभ्यां पादाभ्यां पृथिवीं स्पृशति, शेषं सर्वमप्यङ्गमुत्थापयितुं प्रभुर्भवति । सूर्याकर्षणवशादेवास्य शिर

उन्नतं सूर्याभिमुखम् । जातमात्रो बालो हि पूर्वं शिर एवोत्थापयितुं यतते चोत्थापयति च। शिरस एव सूर्येण सम्बन्धाद् बुद्धेरपि तदेवायतनम् । बुद्धिश्चेतरप्राण्यपेक्षया मनुष्येष्वधिकेति नैतत्प्रतिपादयितुमपेक्ष्यते । इतः परमपि यदि विकासः स्यात् तर्हि पृथिव्या आकर्षणाभावेन पृथिवीस्पर्शाभाव एव तत्र प्रसज्येतेति युक्तियुक्तम् । तदेवास्मच्छास्त्रेषु सर्वत्र स्पष्टमुक्तं यद्दैवसर्गप्राणिनः पृथिवीं न स्पृशन्तीति । तेष्वपि चाष्टविधेषु क्रमेणाधिकाधिकः सूर्यसन्निकर्षः । विकासश्च पुरुषं नातिक्रामतीति नेश्वरेणाज्ञप्तम् । तस्मान्मनुष्यादप्युपरितनाः प्राणिनः सन्त्येव । ते च पृथिवीं त्यक्त्वाऽन्तरिक्षे दिवि च यथेच्छं विचरन्ति । यथा हि पश्वादयः शिक्षाविशेषेण श्रमेण च मनुष्यकार्याणि कर्तुं शक्नुवन्ति, मनुष्यास्तु प्रकृत्यैव तेषु कार्येषु निपुणाः; तथैव मनुष्योऽपि योगक्रियायां शिक्षितः पृथिव्या उपर्यन्तरिक्षे कञ्चित्कालं स्थातुं शक्नोति । दैवसर्गान्तर्गताः प्राणिनस्तु स्वभावादेव पृथिव्या आकर्षणाद् विमुक्ता अन्तरिक्षे दिवि च सदैव विचरणशीलाः । तेषां शरीरस्य सूक्ष्मभूतजन्यतया विद्याप्रभावेणान्तर्धानशीलतया च तेऽस्मत्प्रत्यक्षा न भवन्ति । तत एव प्रत्यक्षमात्रपरायणानामाधुनिकवैज्ञानिकानां न तत्रान्वेषणप्रवृत्तिः । अस्मच्छास्त्राणि तु योगबलेन स्थूलसूक्ष्मविप्रकृष्टादिदर्शनसामर्थ्यवद्भिः सन्दृब्धानीति तेषु देवादीनां बाहुल्येन प्रतिपादनमिति ।

त इमे लोकान्तरस्था देवा अपि द्विविधाः शास्त्रेष्वाख्यायन्ते--आजानदेवाः, कर्मदेवाश्च । सर्गारम्भ एव ये देवत्वं प्राप्तास्ते आजानदेवाः । ये तु मनुष्या यज्ञादिबलेन देवत्वं प्राप्नुवन्ति ते कर्मदेवाः । कर्मणा देवलोकप्राप्तिरपि श्रुतिषु बहुधाऽऽम्नायते—"दिवं पृथिव्या अध्यारुहाम" इति पूर्वोक्ते मन्त्रे, "मर्तासः सन्तो अमृतत्वमानशुः" [ ऋ० १।११०।४ ] इति ऋभुसूक्ते,

> पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।
> स त्वैतेभ्यः परि ददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥
>
> [ ऋ०।१०।१७।३ ]

इत्यत्रापि चाग्नेर्देवेषु प्रापणं मृतानां श्रूयते । एवं बहुषु मन्त्रेषु द्रष्टव्यम् । एत एव देवाः 'अष्टविकल्पो दैवः' इति सांख्यकारिकायां चतुर्दशविधभूतसर्गे व्याख्याताः ।

इतोऽन्येऽपि पृथिवीस्था अपि देवाः श्रुतिष्वेवं श्रूयन्ते । तदुक्तं वाजसनेयश्रुतौ— "द्वया वै देवा देवाः । अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः ।"

[ शतपथ० २।२।२।६ ]

पृथिवीस्थेष्वप्यस्ति द्वैविध्यम् । उत्तरस्यां दिशि शर्यणावतः पर्वतस्योत्तरभागे प्रकृतिरचितां देवसंस्थामुपजीव्य पुरा पृथिव्यामपि देवसंस्था प्रकल्प्यते स्म

—"देवविशः कल्पयितव्यास्ता अनु मनुष्यविशः कल्प्यन्ते" [ऐ० ब्रा० २।३२] इत्याद्यासु ब्राह्मणश्रुतिषु तत्संकेतः स्पष्टमुपलभ्यते। मन्त्रेष्वपि बहवो देवासुरयुद्धाद्याः परस्परं संघर्षाः परस्परं संमेलनानि चैतेषामेव देवानां निरूपितानीति श्रीगुरुचरणैः श्रीविद्यावाचस्पतिमहाभागैः स्वकीयेष्विन्द्रविजयस्वर्गसन्देशादिषु ग्रन्थेषु विस्तरेण विवृतम्। "सहस्राश्वीन वा इतः स्वर्गो लोकः" [ऐ० ब्रा० २।१७] इत्यैतरेयश्रुत्यादिष्वस्यैव स्वर्गलोकस्य संकेतः कृतः। पुराणेषु त्वस्य स्वर्गलोकस्य विस्तृतं विवरणमुपलभ्यते, दशरथादीनां भारतीयानां राज्ञां देवसाहाय्यार्थं देवासुरयुद्धे गमनम्, महाभारते तीर्थयात्रां कुर्वता युधिष्ठिरादीनां पाण्डवानां स्वर्गदर्शनम्, कुबेरेण समागमः, अर्जुनस्येन्द्रसमीपेऽध्ययनम्, बहुकालपर्यन्तं स्वर्गे निवासः, निवातकवचादीनां देवद्रुहां संग्रामे हननम्, द्वैतवने दुर्योधनादीनां गन्धर्वैर्युद्धमित्यादिसर्वमेतानेव स्वर्गदेवादीनधिकृत्य सुसंगतं भवति। नात्र लघुनिबन्धे तेषां विवरणं शक्यं कर्तुमिति संकेतमात्रमत्रोपदर्शितम्। भारतेऽपि च वर्षे विशिष्टा विद्वांसो महाराजाश्च मनुष्यदेवपदेन व्यपदिश्यन्ते। सा भूलोकवासिनां देवानां द्वितीया विधा।

तदित्थं सङ्कलनया सप्तविधा अत्र देवा मया दिग्स्वरूपेण प्रदर्शिताः—मुख्याः प्राणरूपा देवाः (१), तेषामध्यात्मं रूपम् (२), अधिदैवतं तारामण्डलादिषु रूपम् (३), अधिभूतमग्निवाय्वादि (४) लोकान्तरस्थाः प्राणिनो देवाः (५) भूमण्डलस्थाः सुमेरुप्रान्तवासिनो देवाः ६) भारतस्था विशिष्टा विद्वांसो वीराश्च देवाः (७)। एषां सर्वेषां परस्परं कः सम्बन्धः ? कुतश्चैकस्यैव देवशब्दस्य तद्विशेषवाचकानामिन्द्रवरुणादिशब्दानां च विभिन्नेषु प्रवृत्तिरित्येव वैदिकं रहस्यम्। तदेवावगन्तुं पूर्वे ब्राह्मणा दीर्घं ब्रह्मचर्यं चरन्ति स्म अवगत्य च यज्ञादिविधानेन स्वं देवरूपेण परिणमयन्ति स्म। तदेव भारतीयानां सर्वस्वभूतं रहस्यं वेदविरोधिनां प्रबलैराक्रमणैर्विलुप्तप्रायम्। एतद्रहस्यज्ञानाधीनैव वैदिकी यज्ञप्रक्रिया, सापि विलुप्तप्राया। मन्त्रब्राह्मणात्मके वेदे कुत्र कस्य देवस्याधारेण तत्तद्विषयसंगतिरित्यप्यद्यान्वेषणसाध्यम्। तस्यान्वेषणस्य गुरुचरणैर्द्वारमुद्घाटितम्। इदानीं तेन द्वारेण वेदप्रासादे प्रविश्य विद्वांसः श्रमेणान्वेषणं कुर्युस्तर्हि तद् रहस्यप्रकाशनेन विलुप्तं भारतीयानां गौरवं पुनर्जागृयात्। आधुनिकं पाश्चात्त्यानामुन्नतिशीलं विज्ञानमपि तत्साहाय्यमासाद्य द्रुततरमग्रेसरीभवेदित्यपि मे दृढतरो विश्वासः। भवतु नाम, सर्वजगद्बुद्धिप्रदस्य वेदेषु मुख्यतया स्तुतस्य भगवत आदित्यस्यैव कृपादृष्ट्या समये सफलीभवेदयं स्वप्नः। इदानीं तु प्राणदेवानां तत्त्वनिरूपणे वेदे का प्रक्रियेति दिङ्मात्रमुपदर्श्य निबन्धमिममुपसंहरामि।

तिस्र एव देवता इति भगवता यास्केन निरुक्ते सिद्धान्तितमित्युक्तपूर्वम्। अग्निः पृथिवीस्थानः, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थान इति त्रयो

देवाः । एते च न दृश्यमानभौतिकपिण्डरूपाः, अपि तु तदनुप्रविष्टप्राणरूपा इत्यसकृदुक्तम् । तेषां तद्विशेषाणां च स्तुतिरेव सर्वेषु वेदेषु समुपलभ्यते । स्तुतिरूपेणैव च तेषां देवानां गुणधर्मास्तत्कार्याणि च निरुच्यन्त इति वैदिकी शैली । यथा ऋक्संहितायां प्रथमोऽग्निस्तुतिपरो मन्त्रः—

अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ।। [ ऋ० १।१।१ ]

अत्राग्नेः पञ्च विशेषणानि - पुरोहितम्, यज्ञस्य देवम् ऋत्विजम्, होतारम्, रत्नधातममिति । एतानि सर्वाण्यग्नेः स्वरूपस्य कार्यस्य च बोधकानि । प्रथमं विशेषणं पुरोहितमिति पुरः = अग्रे हितम् = निहितम्, स्थापितमित्यर्थकम् । अस्यायमभिप्रायः—यत् त्रयोऽपि देवा अग्निपदेन तत्र तत्रोच्यन्ते । इह त्वस्मत्पुरस्थितस्य पार्थिवस्याग्नेरेव स्तुतिरूपेण विवरणं प्रस्तुतमिति 'यत्किञ्चिद्दार्ष्टिविषयकमग्निकर्मैव तत्' [नि० दै० १ अ०] इति निरुक्तकृतोक्तम् । यदस्माभिः पृथिव्यां भूतभौतिकं किमपि पिण्डादि दृश्यते तदग्नेरेव रूपम्, प्राणेनाग्निनैव स्थूलावस्थायां भूतरूपतां गतेन सर्वे पार्थिवाः पिण्डा निर्मिताः । स भूतरूपतां गतश्चित्योऽग्निर्मर्त्यः । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति न्यायेन चितेनिधेयो भूत्वा तत्रानुप्रविष्टस्तान् सर्वान् परिपाति विलयाद् रक्षतीति निरुक्ते, अस्मिन्मन्त्रे पुरोहितपदेन च बोधितम् । एवमग्नेः सर्वेषु पुरःस्थितेषु पार्थिवपदार्थेषु स्थितिरनेन विशेषणेन बोधिता । अन्येष्वाग्नेयेषु मन्त्रेषु सा विशेषेण स्पष्टीकृता ।

गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्याग्नेर्गर्भो अपामसि ।। इत्यादिषु ।
[ अथर्व० ५।२५।७; य० १२।३७ ]

द्वितीयमग्नेर्विशेषणं पूर्वोक्ते मन्त्रे यज्ञस्य देवमिति । सर्वेषु यज्ञेष्वग्निरेव दीव्यतीत्ययमेव यज्ञस्य देवः । यज्ञो वैदिकस्य विज्ञानस्य मुख्यं गम्भीरं च तत्त्वम् । यज्ञविषये मया स्वतन्त्रं व्याख्यानं वारान्तरे प्रस्तोतव्यमिति नात्र तद् विवृणोमि ।

अथ तृतीयं विशेषणम् 'ऋत्विजम्' इति । अस्यार्थः—ऋतुभिर्यजतीति, ऋतून् यजतीति वा । ऋतवो हि सौरेणाग्निना चन्द्रसहकृतेन प्रादुर्भाव्यन्ते । सूर्यमण्डलात् पृथिव्यामागच्छन्नग्निः 'ऋत'-नाम्ना परिभाष्यते । सूर्यस्य पृथिव्याश्च संबन्धभेदेन, सौराग्नेः पृथिव्यामागमने तारतम्यं भवति । षण्मासान् स क्रमेण वर्धते । अग्रे षण्मासांश्च क्रमेण ह्रसति । एवं वृद्धिह्रासाभ्यां पूर्णे संवत्सरे संवत्सराग्नेरेकं चक्रं परिपूर्यते । तस्याग्नेः सम्बन्धेनैव ऋतूनां नामान्यपि संस्कृतभाषायां संघटितानि । अघमर्षणसूक्ते "ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत" (ऋ० सं० १०।१९०।१) इति मन्त्रोक्त्यनुसारं तपसि माघमासे तस्य पृथिव्यामागमनमारभ्यते । आगच्छन्नेव

सोऽग्निः पार्थिवेषु पदार्थेषु वस्तुमुपक्राम्यतीति प्रथमो वसन्त ऋतुः। वसन्तोऽत्राग्नय इति कालोऽपि वसन्त उक्तः। वसंश्च क्रमेण यदा सर्वान् पदार्थान् गृह्णाति — अर्थात् स्वायत्तीकरोति तदा गृह्णन् ग्रीष्मो भवतीति कालोऽपि ग्रीष्म उच्यते। ग्रहधातोर्ग्रीष्मशब्दनिष्पत्तिः। यदा क्रमेणातिवृद्धिं गतस्तदा वर्षापदेनोच्यते। वर्धा एव वर्षा। भगवता पाणिनिनाऽपि केषुचित्तद्धितप्रत्ययेषु वर्षादेशो विहितः। यत्प्रचलितं तदेव पाणिनिना, विहितम्। भवतु नाम, एवं त्रीन् ऋतूनर्थात् षण्मासान् ऋताग्नेर्वृद्धिर्जाता। परतस्तु "वर्धते, विपरिणमते, अपक्षीयते" इति यास्कोक्तषड्भावविकारक्रमेण ह्रास आरभ्यते। शीर्णो भवितुं यदा आरब्धस्तदा शरत्कालः, ऋताग्निः शरन्भवतीति कालोऽपि शरदित्युच्यते। शीर्णो भवन् यदा हीनः, स कालो हेमन्तः। हीना अग्नय इति कालोऽपि हेमन्तः। अत्यन्तं शीर्णे च शिशिर इति। अनन्तरं पुनरपरः संवत्सराग्निरागन्तुमुपक्राम्यतीति पुनर्वसन्ताद्या ऋतव आवर्तन्ते। यावान् ऋताग्नेर्ह्रासः तावत्येव सोमस्य वृद्धिः। सोमस्यायतनं चन्द्रमण्डलमिति चन्द्रस्यापि ऋतुजनकत्वं मन्त्रान्तर उक्तम्। अनेन ऋताग्निना संसृज्य पार्थिवोऽग्निः पृथिव्यामोषध्यादीनि पाचयति। स ऋतभिर्यजति संगतिं करोति तस्मात् 'ऋत्विक्' इत्युक्तः। 'होतारम्' इति चतुर्थं विशेषणं ह्वातारमिति निरुक्तकृता व्याख्यातम्। ह्वेञ् धातोः सम्प्रसारणान्निष्पन्नो होतृशब्द इति तदाशयः। तेन देवानामाह्वायक इत्यर्थः सिद्ध्यति। एतस्य सहकारेणैव देवाः, आन्तरिक्ष्या दिव्या वा प्राणाः पृथिव्यामागच्छन्ति। जुहोतेरिति पक्षे तु होमस्य देवेभ्य आहुतिप्रापणस्यायमेव कर्तेत्ययं होतृपदेनोक्तः।

अथ पञ्चमं विशेषणं 'रत्नधातमम्' इति तु स्पष्टं वैज्ञानिकम्। रत्नानि सुवर्णमणिप्रभृतीनि यान्युत्पद्यन्ते, तानि पार्थिवोऽग्निरेव विशेषेणोत्पादयति। अस्माकं न्यायशास्त्रेऽपि सुवर्णादिकं तैजसमेव मन्यते। आधुनिका वैज्ञानिका अपि पृथिवीस्तरेष्वेव सुवर्णमणिप्रभृतीनामुत्पत्तिं व्याचक्षते। तैत्तिरीयब्राह्मणे तु सुवर्णोत्पत्तेर्वैज्ञानिकः प्रकारो लौकिक्या भाषया समाम्नातः—"आपो वरुणस्य पत्न्य आसन् ता अग्निमभ्यध्यायत्, ताः समभवन् तस्य रेतः परापतत्, तद्धिरण्यमभवत्" [ तै० ब्रा० १।१।३।८ ] वरुणस्य देवस्याधीने रसभागेऽग्नेः प्रवेशाद् हिरण्योत्पत्तिर्भवतीति श्रुतेराशयः। एवंविधा विषया परीक्षणसाध्याः। देवतत्त्वं विज्ञायैषां परीक्षणं क्रियेत चेत्, महत्परिवर्तनं जगति सम्भाव्यते। स्वल्पाक्षरैरेव विशेषणैः कियन्ति गम्भीराणि विज्ञानानि वेदे प्रतिपादितानीति निदर्शनमिदम्। एवं यजुर्वेदस्यारम्भे वायु देवताको मन्त्रः—'इषे त्वोर्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वम्" [ शु० य० १।१] इति। अत्रापि 'देवो वः सविता प्रार्पयतु' इत्यनेन सूर्यरश्मिसंघर्षणादेव वायौ गतिर्जायत इति बोधितम्।

"सवितृप्रसूत एष पवते" इति ब्राह्मणेन च स्पष्टीकृतम्। प्राणिषु ऊर्क्=ओजः=बलम्, इट्=अन्नादिकं च वायुनैवोत्पाद्यत इति 'इषे, ऊर्जे' इत्येताभ्यां पदाभ्यां बोधितम्। वायुसहकारेणैव च यज्ञो निष्पद्यत इत्यपि 'श्रेष्ठतमाय कर्मणे आप्यायध्वम्' इत्युक्त्या समुपदिष्टम्। "यज्ञो वै श्रेष्ठतमं कर्म" [ शतपथब्रा० १।७।१।५ ] इति ब्राह्मणश्रुतिराह।

सूर्यस्य तु विज्ञानं वेदे बहुतरं विजृम्भते। स हि वेदेषु सर्वासां प्रजानां प्राण एवोक्तः दिङ् मात्रमिह प्रदर्श्यते। अयं सूर्यस्य प्रसिद्धो मन्त्रः—

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥
( ऋ० १।३५।२ )

अत्र कृष्णेन रजसाऽऽवर्तमानः. अमृतं मर्त्यं च निवेशयन्, सविता भुवनानि पश्यन्, हिरण्ययेन रथेनायातीति पञ्च विशेषणानि सूर्यस्य श्रूयन्ते। चत्वारि नामपदानि एकं त्वाख्यातमिति। तेषु प्रथमेन 'कृष्णेन रजसा' इति पदेनाकर्षणविज्ञानं बहवो विद्वांसः संकेतितं मन्यन्ते। सवितुर्देवस्य, रजः=लोकः=सूर्यमण्डलम्, कृष्णम् आकर्षणशीलमिति यावत्। अत्राकर्षणस्य संकेतो मन्यतां न वा, आकर्षणविज्ञानं तु स्फुटतरमन्येषु मन्त्रेषु श्रूयते, यन्न केनाप्यपलपितुं शक्यम्। पश्यत—

स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा।
आतिष्ठन्तमपस्यं न सर्गं कृष्णा तमांसि त्विष्या जघान।
[ ऋ० १०।८९।२ ]

वेदभाष्यकारः श्रीमाधवाचार्य इत्थमत्र व्याचष्टे—"सूर्यरूपोऽयमिन्द्रः, वरांसि=तेजांसि, रथचक्राणीव परिववृत्यात् परिवर्तयति भ्रामयति। त्विष्या स्वतेजसा च कृष्णवर्णानि तमांसि, जघान प्रहरति स्म। यथा तीव्रगामिनमपि कदाचित् स्थितमश्वं सारथी प्रहरति। अत्र पूर्वार्द्धे तेजोमण्डलानां भ्रामणं स्पष्टमेवोक्तम्। श्रीसत्यव्रतसामश्रमिप्रभृतयस्तु वरांसीति पदं लोकार्थकं व्याचक्षते। तद्रीत्या पृथिव्यादिमण्डलानां तारामण्डलादीनां च भ्रामणमायातीति स्फुटतममाकर्षणविज्ञानं भवति। इतोऽप्यधिकतया स्फुटं प्रश्नोत्तरपूर्वकमाकर्षणविज्ञानं दृश्यताम्—

अनवर्णे इमे भूमी इयं चासौ च रोदसी॥
किंस्विदत्रान्तरा भूतं येनेमे विधृते उभे।
विष्णुना विधृते भूमी इति वत्सस्य वेदना॥
इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्ये।
व्यष्टभ्नाद्रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः॥
[ तै० आ० १।८।२ ]

अत्र पृथिवीमण्डलं सूर्यमण्डलं च केन धृतमिति पूर्वं प्रश्नः कृतः। विष्णुना रोदसी=द्यावापृथिव्यौ विधृते इत्युत्तरम्। अस्य विज्ञानस्याविष्कारको वत्सऋषि-रित्यप्युक्तम्="वत्सस्य वेदना" इति। अत्रांशे 'इरावती' इत्यादिमन्त्रोऽपि प्रमाणत्वेनोपन्यस्तः। स मन्त्र ऋक्संहितायां [ ७।९९।३ ] समुपलभ्यते। तत्र पूर्वार्द्धे यजमानायान्नतृणादिदानपरे भवितुं द्यावापृथिव्यौ प्रार्थिते, उत्तरार्द्धे तु विष्णुः स्तुतः। "हे विष्णो! भवान् द्यावापृथिव्यौ व्यष्टभ्नात्=समानान्तरे रक्षति, पृथिवीं च मयूखैः=स्वकिरणैः, दाधर्थ=धृतवानसी" इति द्वादशस्वादित्येष्वन्तिमो विष्णुरिति पुराणादिष्वादित्यनामसु स्पष्टम्। ऐतरेयब्राह्मणस्यारम्भ एव च—"अग्निर्देवानामवमो विष्णुः परमः. तदन्तरेण सर्वा अन्या देवताः" इति यदाम्नातम्, तेनाप्यन्तिमे द्युलोके स्थितस्यादित्येष्वपि चरमस्य विष्णुपदवाच्यता स्फुटी-भवति। यस्तु सर्वजगदुत्पत्तिस्थितिसंहारकारकः परमात्मा विष्णुनाम्नोपास्यते, स ईश्वरः। न स देवमध्ये गण्यते देवाना जीववर्गान्तःपातित्वात्। निघण्टुष्वपि द्युस्थान-देवेष्वेव विष्णुपदं पठितम्। अत्रैवंविधो वैदिकविज्ञानस्योत्कर्षो ध्येयो यदाधुनिकं वि-ज्ञानं सूर्यमण्डलाकर्षण एव पृथिवीं धृतां वदति। वैदिकं तु विज्ञानं सूर्यमण्डलेऽपि प्राण-विशेषो विष्णुरेवाकर्षणे प्रधान इत्यपि सुसूक्ष्मं परिचाययति। एवं शतशो मन्त्रेष्वा-कर्षणविज्ञानचर्चा। भवतु नाम 'कृष्णेन रजसा आवर्तमानः' इति विशेषणं त्वन्यदपि महद्रहस्यं संकेतयति, यद्रजःपदवाच्यलोकरूपं सूर्यमण्डलं कृष्णवर्णम्, तस्य रथपद-वाच्यं किरणजालं तु हिरण्ययम्=स्वर्णवर्णम्। मण्डलेन विचरन्नादित्यः प्राणो यदा-ऽभितो व्याप्ते सोममण्डले प्रविशति तदा तत्संघर्षेण सोमः प्रज्वलति. तदेव सूर्यस्य किरणजालम्। तदेव च प्रकाशकम्। आधुनिका वैज्ञानिका सूर्यमण्डले महान् भागः कृष्णवर्णः प्रतीयते, स च वृद्धिह्रासशील इति प्रतिबिम्बग्राहकयन्त्रसाहाय्येन वदन्ति। परं श्रुतिस्तु सर्वमपि मण्डलं कृष्णं वदति। सोमप्रज्वलनजनितस्य हिरण्यवर्णस्य मण्डले प्रवेशान्मण्डले कृष्णवर्णस्य वृद्धिह्रासौ प्रतीयेते इत्येवानुमिनुमः। अमृतं मर्त्यं च निवेशयन्' इति विशेषणेनामृतरूपाणां महोलोकादीनां मर्त्यरूपाणां पृथि-व्यादीनां च निवेशनं धारणं सूर्यायत्तमेवेत्युक्तम्। तदेतत् "तिस्रो भूमीर्धारयंस्त्रींरुत द्यून्" [ऋ० २।२७।८] इत्यादिषु मन्त्रेषु स्फुटीकृतम्। सप्तलोकविज्ञानमिदं पृथग् व्याख्यानसापेक्षम्. नेह विवरीतुं शक्यते। सवितेति विशेषणेन सर्वोत्पादकत्वम्, भुवनानि पश्यन्निति च सर्वप्रकाशकत्वं स्फुटमाख्यातमेव।

उदु त्यं जातवेदसं देवं वहन्ति केतवः।
दृशे विश्वाय सूर्यम्॥ [ ऋ० सं० १।५०।१ ]

इति सर्वप्रसिद्धे सूर्योपस्थाने द्विजैः प्रत्यहमुच्यमाने मन्त्रे केतवः=किरणाः, विश्वाय दृशे=सर्वं लोकं दर्शयितुम्, जातवेदसं देवम्, उद्वहन्ति=उपरि नयन्तीत्यु-च्यते। परं सूर्यस्य सर्वस्योपरिष्टात् स्थितस्य, उद्वहनेन उपरि प्रापणेन, लोकानाम-

स्मदादीनां सूर्यदर्शनं कथं स्यादित्यस्ति विचारविषयः। किरणा अधो नयन्तीत्युच्येत चेत् तत्तु उपपद्येत, परं मन्त्रस्तूर्ध्वनयनं ब्रवीति तेनैव च लोककर्तृकं दर्शनमप्यामनतीति कथमेतदुपपाद्यताम्। अत्र विचार्यमाण इदमेव वैज्ञानिकं रहस्यं स्फुटति, यत् सूर्योदयात् प्रागेवोपरितने वायुमण्डले सूर्यकिरणाः पतिता वायौ परिव्याप्ते द्रवरूपे सोमे वक्रीभूय पृथिवीं प्राप्ता उदयात्प्रागेवास्मान्दर्शयन्तीति उदयाचलादधो वर्तमानमेव सूर्यमुदुह्यास्मान्दर्शयन्तीत्युक्तम्। तेनैव किरणसोमसम्पर्केण दृश्यमानः सूर्यो रक्तवर्णस्तदात्वे प्रतीयते। ते च वक्रीभूयागताः किरणा हानिकारका इत्युदयमानस्य सूर्यस्य दर्शनं स्मृतिषु प्रतिषिद्धम्। तदुपद्रववारणायैव च तस्मिन्काल एव सूर्यार्घ्यदानं विहितम, येन वक्रीभूताः किरणा जलसंपर्कात् पुनर्वक्रीभूय सरलतां गच्छेयुरिति।

एवंविधं गहनतरं विज्ञानमतिस्वल्पेष्वक्षरेषु वेदे विद्योतते। सर्वमिदं परीक्ष्याविष्क्रियेत चेन्महानुपकारो जगतां भवेदित्युक्तमेवेति शं स्तात्॥

## [ ३ ]

# वैदिका यज्ञाः

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।,
[ पुरुषसूक्तम् ]

१--"प्रजापतिर्यज्ञः" [ शत० ब्रा० १।१।१।१३ ], २—'यज्ञो वै विष्णुः" [शत० ब्रा० १।१।२।१३ ], ३--"सैषा त्रयी विद्या यज्ञः" [शत० ब्रा० १।१।४।१], ४—"पुरुषो वै यज्ञः" [ शत० ब्रा० १।३।५।१ ], ५ -"यज्ञेन वै देवा इमां जितिं जिग्युः" [ शत० ब्रा० १।६।१।१ ], ६—"यज्ञो वै देवानामहः" [ शत० ब्रा० १।७।३।२२ ], इत्याद्यासु शतशः श्रुतिषु, "यज्ञार्थं पशवः सृष्टाः" [ मनु० ५।३९ ], "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ।। सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।।" [ गीता ३।९-१० ] इत्याद्यासु बह्वीषु स्मृतिषु च यज्ञमहिमा सर्वत्रैवोद्वेलं गीयते ।

यज्ञ एव हि मुख्यो धर्मः । स एव जगतामुत्पादको रक्षकश्चेत्यार्यशास्त्रेषु पदे पदे गीतम् । अयं यज्ञ एव मनुष्याणां देवानां च परस्परसंबन्धस्थापकः । तदुक्तं भगवता भगवद्गीतासु—

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ।। [ ३।११ ]

यज्ञेन मनुष्या देवान् भावयन्ति, भाविताः पूजिताश्च देवा मनुष्यानुपकुर्वन्तीति देवानां मनुष्याणां च पारस्परिकः सम्बन्धो वैदिकप्रक्रियायां व्याख्यातः ।

अद्य विंशतितम्यां शताब्द्यां विज्ञानस्य प्रखरमध्याह्ने काले पाश्चात्त्या वैज्ञानिका लोकान्तरस्थैर्देवैः सह सम्बन्धस्थापनस्य विचारमेव कुर्वन्ति, न तु स विचारस्तेषां फलेग्रहिरद्यापि संपन्नः । भारतीयास्त्वार्या अनादिकालादेव यज्ञद्वारेण देवैः सम्बन्धं स्थापितवन्तः । यज्ञेन द्वारेण प्रसादिताश्च देवाः प्रत्यक्षमप्येतान् दर्शयाञ्चक्रिरे । महाभारतपुराणादिषु यज्ञदेवानां प्रत्यक्षदर्शनं बहुधा स्मर्यते । "मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्य कामप्रेर्विश्वे देवाः सभासदः ।।" [ ऐ. ब्रा. ८।२१ ] इति वैदकीं सूक्तिमपि ब्राह्मणाः पूजासु पठन्ति । भगवान् शङ्कराचार्योऽप्याह देवताधिकरणे 'भावं तु बादरायणोऽस्ति हि" [ १।३।३३ ] इति सूत्र-

भाष्ये —"भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्, तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्ति स्मेति स्मर्यते। यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्। ततश्च राजसूयादिचोदना उपरुन्ध्यात्। इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान् वर्णाश्रमधर्मान् प्रतिजानीत। ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात्। तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति— 'स्वाध्यायादिष्टदेवतासंप्रयोगः" [ यो० सू० २।४४ ] इत्यादि" इति।

भवतु नाम, एवमार्यशास्त्रेषु सुविस्तृतो यज्ञमहिमा। तस्य यज्ञस्य वैज्ञानिकं स्वरूपमधिकृत्य संक्षेपेणात्र व्याख्यायते।

यज्ञशब्दो हि यजधातोर्निष्पन्नः। यजधातोश्चार्थत्रयं भगवान् पाणिनिर्निर्वक्ति—"यज देवपूजासङ्गतिकरणदानेषु" इति। पूर्वस्मिन् व्याख्यान आध्यात्मिकाः, आधिभौतिकाः तारामण्डलादिस्थिताश्च त्रिविधा देवाः सपरिकरं व्याख्याताः। तेषां सर्वेषामपि देवानां पूजा ( पोषणम् ) यज्ञेनैव भवतीति देवपूजारूपोऽर्थोऽत्र संगच्छते। अन्यस्य तत्त्वस्य तत्त्वान्तररूपता यज्ञेन संपाद्यते, मिथश्च पदार्थान् यज्ञ एव संगमयतीत्यग्रे व्याख्यातव्यम्। तस्मात् सङ्गतिकरणमप्यत्र सुसङ्गतम्। दानशब्देन च दाधातोर्निष्पन्नेन स्वस्वत्वनिवृत्तिः, 'दोऽवखण्डने" इति धातोर्निष्पन्नेन चावयुत्यात्मनोऽन्यत्र समर्पणमभिधीयते प्रवर्ग्यश्चेति तदेतदपि यज्ञपदार्थे सङ्गमनीयम्।

द्विविधो हि यज्ञः प्राकृतः, कृत्रिमश्च। तत्र द्विजैरनुष्ठीयमानं कृत्रिमं यज्ञमेव प्राधान्येन लक्षयन्तो मीमांसका —"द्रव्यदेवतात्यागो यागः" इति तल्लक्षणमाहुः। देवतोद्देश्येन हविर्द्रव्यत्यागो यज्ञयागशब्दाभिधेय इति तात्पर्यम्। किमर्थमयं त्यागः क्रियते, अनेन च देवानां कथं कीदृश उपयोगः साध्यते किञ्च तेनास्माकं फलं भवतीत्येतत्सर्वं प्राकृतयज्ञविज्ञानेन शक्यं विज्ञातुम्। प्रकृतौ हि निरन्तरं यज्ञः प्रवर्तते, तदाधारेणैव कथञ्चिदस्मत्प्रतिकूलमपि प्रकृतियज्ञमनुकूलयितुमस्मभ्यमपि यज्ञः शिक्षितः। तस्मात् प्राकृतो यज्ञ एव कृत्रिमस्य यज्ञस्य मूलम्।

शतपथब्राह्मण एकादशकाण्डस्य चतुर्थाध्यायारम्भे एकाख्यायिका श्रूयते, या कृत्रिमस्य यज्ञस्य प्राकृतयज्ञमूलकत्वं स्फुटीकरोति। कुरुपाञ्चालदेशवास्तव्य आरुणिरुद्दालको यज्ञे वृत उदीच्ये गतः। तस्यादरार्थं तत्र यजमानेन निष्क आहितः, तेन उदीच्या ब्राह्मणा ईर्ष्यां दधानाः स्वैदायनं नाम वेदनिष्णातं ब्राह्मणमग्रेसरीकृत्याऽऽरुणिना सह ब्रह्मोद्याय प्रेषयामासुः। तेन यज्ञे गत्वा गौतमगोत्र आरुणिरुद्दालक एवं पृष्टः—"स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यो दर्शपूर्णमासयोरष्टौ पुरस्ता-

दाज्यभागान् विद्यात्, पञ्च मध्यतो हविर्भागान् षट् प्राजापत्यानष्टा उपरिष्टादाज्यभागान् ।। ४ ।। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मादिमाः प्रजा अदन्तका जायन्ते, यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संतिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्वा एव प्रभिद्यन्ते । यस्मादधर एवाग्रे जायन्तेऽथोत्तरे, यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे, यस्माद्दंष्ट्रा वर्षीयांसो यस्मात्समा एव जम्भ्याः ।। ५ ।। स वै गौतमस्य पुत्र वृतो जनं धावयेत् यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मादिमाः प्रजा लोमश जायन्ते, यस्मादासां पुनरिव श्मश्रूण्योपपक्ष्याणि दुर्वीरिणानि जायन्ते, यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्व एव पलितो भवति ।। ६ ।। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मात् कुमारस्य रेतः सिक्तं न संभवति यस्मादस्य मध्यमे वयसि संभवति, यस्मादस्य पुनरुत्तमे वयसि न संभवति ।। ७ ।। यो गायत्रीं हारणीं ज्योतिष्पक्षां यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादिति ।। ८ ।।"
[ शत० ब्रा० ११।४।१।४-८ ]

एतान् प्रश्नान् समाधातुमसमर्थेनोद्दालकेन स निष्कः स्वैदायनस्याग्रे स्थापितः । त्वं मदपेक्षयाधिको वेदज्ञोऽसि, त्वमेव निष्कमर्हसीति । स्वैदायनस्तमुपगुह्य गृहं गतः । यज्ञान्निवृत्तस्तु गौतम आरुणिः समित्पाणिः स्वैदायनमाससाद, यान् प्रश्नान् त्वमपृच्छस्तेषामुत्तरं मह्यं शिक्षयेति च प्रार्थयाञ्चक्रे । ततः स्वैदायन एवमुत्तराण्याह—

"अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति, तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवींषि भवन्ति तस्मादासां जायन्तेऽथ यदपुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासां प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसंयाजा भवन्ति तस्मादासां सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकं समिष्टयजुर्भवति तस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते ।। १२ ।। अथ यदनुवाक्यामनूच्य याज्यया यजति तस्मादधर एवाग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयांस एवाधरे प्रथीयांस उत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दंष्ट्रा वर्षीयांसोऽथ यत्सच्छन्दसावेव संयाज्ये भवतस्तस्मात्समा एव जम्भ्याः ।। १३ ।। अथ यद्बर्हिस्तृणाति, तस्मादिमाः प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरं स्तृणाति तस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्वीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति ।। १४ ।। अथ यदाज्यहविषः प्रयाजा भवन्ति, तस्मात् कुमारस्य रेतः सिक्तं न संभवत्युदकमिवैव भवत्युदमिव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मध्यमे वयसि संभवति द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविष

एवानुयाजा भवन्ति, तस्मादस्य पुनरुत्तमे वयसि न संभवत्युदकमिवैव भवत्युदकमिव ह्याज्यम् ॥१५॥ वेदिरेव गायत्री, तस्मै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टा उपरिष्टादाज्यभागाः स उत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानं स्वर्गं लोकमभिवहति य एवमेतद्वेद ॥१६॥"

अनया तावदाख्यायिकया स्पष्टमिदं सिद्धयति यद् दर्शपौर्णमासमूलभूता अध्यात्मं याः क्रियाः, ता एव दन्तलोमाद्युत्पादिकापरिवर्तनादिकारिण्यश्च भवन्तीति। ये तु दर्शपौर्णमासादिष्वनुष्ठीयमानाः क्रिया एव दन्तलोमाद्युत्पादिका इत्यागृह्णीरन् ते सर्वेषु प्राणिषु दन्तलोमाद्युत्पत्तिं तत्परिवर्तनानि च न समाधातुमीशते। येऽपि द्विजातिरिक्ता म्लेच्छाद्याश्च दर्शपौर्णमासादिकं नानुतिष्ठन्ति, तेषामपि दन्तलोमादिर्जायते परिवर्तते च। तस्मान्मूलभूतया प्राणादिक्रिययैवात्र तात्पर्यं नेयं स्यात्। अधिदैवं च या गायत्री सैव यजमानं स्वर्गे लोके प्रापयतीति च। तदित्थं मूलभूतं प्राकृतं यज्ञमेवावलम्ब्य कृत्रिमा यज्ञा वेदेषु विहिताः। ताश्च मूलभूता प्राकृतयज्ञक्रिया अपि तत्तत्कर्मोपपादनार्थं ब्राह्मणेषु बहुत्र निर्दिष्टाः, परं ता अर्थवादरूपेण प्रख्याप्य मीमांसकैरुपेक्षिता इत्येव कर्मोपपत्तिविषये आन्ध्यं प्रसृतम्। भवतु नाम, अस्माभिरत्र स प्राकृतो यज्ञ एव संक्षेपेण व्याख्यातव्यो यदाधारेण यज्ञानुष्ठानानि प्रवृत्तानीति।

पूर्वं स्थूलतयाऽग्नौ सोमाहुतिरेव यज्ञ इति भावनीयं स्यात्। "अग्नीषोमात्मकं ह्रीदंजगत्"। तत्राग्निरन्नादः, सोमस्त्वन्नम्। द्विविधा हि लोके भवन्ति पदार्थाः – ऋतरूपाः, सत्यरूपाश्च। यद्धि केन्द्रबद्धं न तिष्ठति प्रत्युतमेव विकीर्णभावेन प्रसरति, तद् ऋतमित्युच्यते। यथा वायुरापः सोम इत्येकस्यैव तत्त्वस्येमास्तिस्रोऽवस्थाः— स्थूलावस्था आपः, तासां सूक्ष्मावस्था वायुः, तदपेक्षयापि सूक्ष्मतमावस्था सोमः। सोऽयं सोमः सर्वत्राकाशेऽभिव्याप्तः। यथोक्तं सोमस्तुतिमन्त्रे –

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥

[ ऋक्० १।९१।२२ ]

यवतण्डुलाद्या ओषधीः सोम एवोत्पादयति, आपो गावश्च सोमेनैव जनिताः, ओषधिष्वप्सु गव्येषु च दुग्धादिषु सोमः प्राचुर्येणाभिव्याप्नोतीति तद्भावः। सोम एव चान्तरिक्षं विस्तीर्णं करोति। सर्वत्र विस्तीर्णेऽन्तरिक्षे सोम एवाभिव्याप्त इति तात्पर्यम्। सूर्यरश्मिसंपर्केण सोम एव प्रज्वलितो ज्योतीरूपतामासाद्य तमो निवर्तयतीति। लोकेऽपि हि घृततैलादिस्थितः सोम एवाग्निसंपर्काद् दीपादिषु ज्योतीरूपतामासाद्य तमो निवर्तयतीति दृश्यते तथैव सूर्यरश्मिसंपर्कादन्तरिक्षे सोमः प्रज्वलतीति पूर्वस्मिन् व्याख्यान उक्तम्। सोऽयं सोमः सर्वस्मिन्नन्तरिक्षे ऋतरूपेण स्थितः।

शतपथब्राह्मणेऽप्युक्तम्—"अन्नाद एवाग्निरभवदन्नं सोमोऽन्नादश्च वा इदं सर्वमन्नं च" [ ११।१।६।१९ ] इति।

अग्निस्तु केन्द्राधारेण तिष्ठतीति स सत्यः। अग्निरयं विकसनशीलः केन्द्राद् बहिरभितो विकसन्नभिव्याप्नोति। सोमस्तु संकोचशीलोऽभितः संकुचन्नग्नौ पतति, सेयमेव सोमस्याग्नावाहुतिः। हूयमानश्चाग्नौ सोमोऽग्निरूपतामेव गच्छति। तदिदं रूपान्तरताप्रापणमेवसङ्गतिकरणं यजूधातोरर्थ उक्तः। अग्निरूपतामापद्य विकासशीलत्वात् पुयर्बहिर्गच्छति। दूरं प्रसरंश्च केन्द्रसंबन्धं परित्यजन् पुनः सोमरूपतामापद्यत इत्यग्नीषोमयोरन्योन्यरूपतापत्ति रूपं चक्रमनवरतं प्रवर्तते। सोऽयं प्राकृतो यज्ञः।

सूर्यो ह्यनवरतं प्रकाशमौष्ण्यं चोद्वमन् सर्वत्र संक्रामयतीति वैज्ञानिका अपि प्रतिपादयन्ति। तत्परिमाणमपि चानन्तकोटिमितं ते व्याचक्षते। परमियं प्रतिक्षणं जायमाना सूर्यमण्डलक्षतिः कथं संपूर्यत इति नैतदद्यावधि तैर्निश्चेतुं पारितम्। वैदिकं विज्ञानं त्वनादिकालादेतन्निश्चिकाय यत् सूर्यमण्डलं स्वर्लोकः, तदुपरि महोऽन्तरिक्षं तदुपरि च जनलोक एव सोमलोकः। तस्मादनवरतमनन्तकोटिगुणितः सोमः प्रतिक्षणं सूर्यमण्डल आहूयते तमेव च सोममग्निरूपतामापाद्य सूर्यो लोकमभितः प्रसारयति। इयमेवानवरतं जायमाना सोमाहूतिः 'आहुत्याप्यायते सूर्यः" इत्यादिना मन्वादिभि स्मृतिषु संकेतिता। ब्राह्मणाद्या अप्यग्नौ यद् घृतादि जुह्वति तदन्तर्गतोऽपि सोमस्सूर्यमण्डलं गच्छतीति। तद्रीत्या व्याख्यानमपि युज्यते परमत्यल्पः स न सूर्यमण्डलक्षति पूरयितमीष्ट इति प्राकृतेन यज्ञेनैव सा क्षतिः पूर्यते। यथा प्रदीपे ज्योतीरूपतामापद्य क्षीयमाणं तैलं पुनरस्माभिस्तत्र निषिच्यते, यथा वा विद्युत्प्रकाशे प्रतिक्षणं क्षीयमाणा शक्तिर्विद्युत्कोषगृहादागत्य तां क्षतिं प्रपूरयति; तथैव सूर्येऽपि प्रतिक्षणमौष्ण्यप्रकाशोद्वमनाज्जायमाना क्षतिरनवरतमागच्छता तेन सोमेनैव प्रपूर्यते। सूर्याच्चाभितो दिक्षु प्रचारित औष्ण्यप्रकाशमूलभूतोऽग्निः सूर्यमण्डलशक्तेरभिव्याप्तितो बहिर्गतः पुनः सोमरूपतामापद्यत इति चक्रं वैदिकेन विज्ञानेन साध्यते। अनेनैव च चक्रेण जगति सर्वेषां पदार्थानामुत्पत्तिः स्थितिश्चेति यज्ञस्यैव सर्वोत्पादकत्वं सर्वस्थितिकरत्वं च श्रुतिस्मृतिषु सर्वत्र विव्रियते।

लोकेऽपि च प्रातिस्विकपदार्थोत्पत्ति स्थिति चाग्नौ सोमाहुतिरूपेण यज्ञेनैव पश्यामः। तथा हि—ओषधिलतावृक्षाद्येव पूर्वं परीक्ष्यताम्, पृथिव्यां ह्यग्निर्व्याप्य तिष्ठतीति "यथाग्निगर्भा पृथिवी, यथा द्यौरिन्द्रेण गर्भिणी" [ बृहदा० ८।४।२३ ] इत्यादिश्रुतिषु, "अग्निः पृथिवीस्थानः" इत्यादौ निरुक्ते च विवृतम्। सोऽयमग्निः पार्थिवेन घनभागेनावृतस्तिष्ठतीति तस्याग्नेरावणमपनीय प्रकटनाय कर्षकैर्भूमिर्हलेन कृष्यते। आवरणमपनीयाभ्यन्तरस्थाग्नेः प्रकटीकरणायैव कर्षणं प्रवर्तते, प्रक-

टिते चाग्नौ बीजरूपो जलरूपश्च सोम आहूयते। आहुतिं प्राप्य चाग्निर्बीजस्थितमावरणमपनीय स्वसंयोगेन बीजमङ्कुररूपतां गमयतीत्यङ्कुरोत्पत्तिरूपः प्रथमो यज्ञः। इदानीं सौरोऽग्निस्तमङ्कुरं स्वाभिमुखमाकर्षतीत्यङ्कुरः प्रवर्द्धते। पार्थिवः सोऽङ्कुरः पृथिव्या आकर्षणेन पृथिवीमपि न त्यजतीति स्वस्थानावस्थितस्यैव तस्योपरि गमनं भवति, सेयमेव वृद्धिरित्युच्यते। यावच्च जलं तत्र दीयते, तावत्येव तस्याधिकाधिका वृद्धिर्भवति। जलस्थितस्य सोमस्यैव सौराग्नेरन्नरूपत्वात् "सोमोऽन्नम्, अग्निरन्नादः" इत्युक्तपूर्वम्। तदेषोऽग्निना वृक्षादिवृद्धिप्रकारः श्रुतावाम्नातः—

प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥

[ ऋक्० १०।७९।३ ]

मातुः पृथिव्याः, उर्वीः वीरुधः विस्तृतासु लताद्यासु, गुहचं प्रतरं गुह्यमुत्कृष्टतमं केन्द्रस्थानम्, अग्निः, इच्छन् कुमार इव प्रसर्पति। स च पक्वं शुष्कं वृक्षमपि अभिव्याप्नोति, रिरिह्वांसं रसं गृह्णानमपि अभिव्याप्नोति। अग्निनैव हेतुना रसग्रहणादिकं सर्वं संपद्यते। अत एवाग्निर्यज्ञस्य देव उच्यते—

अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। [ ऋक्० १।१।१ ] इति।

ऐतरेयब्राह्मणेऽप्युक्तम्—

"अग्निर्वै शर्माण्यन्नादीनि प्रयच्छति" [ऐत० २।५।९] इति।

अन्येष्वपि मन्त्रेष्वोषध्यादिकेन्द्रेऽग्निस्थितिः स्पष्टमाम्नाता—

गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्।
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि॥

[ यजु० १२।३७ ]

ऋक्संहितायामपि चैतद् विस्तृतम्—

गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्।
अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः॥

[ ऋक्० १।७०।२ ]

अनयाऽग्निव्याप्त्याऽग्निसाध्यो यज्ञः सर्वत्रैव प्रवर्तत इति संकेतितम्। पृथिवीयं कृष्णेत्युच्यते सौरोऽग्निश्च हिरण्यवर्णः। तदुक्तम्—

"पिशङ्गं द्रापि मुञ्चते कविः" [ ऋक्० ४।५३।२ ] इति

पीतकृष्णोभयसंयोगादङ्कुरे हरितो वर्ण एव सर्वदा जायते। यदा तु यमेन विच्छेदात् पृथिव्या रसग्रहणं न जायते, अर्थादग्नौ सोमाहुतिः प्रतिरुद्धचते, तदा शुष्के वृक्षे पर्णादिकं सर्वं पीतवर्णतामेवापद्यत इति स्पष्टं दृश्यते। वृक्षादिषु च

शाखा-प्रशाखा-पर्णपुष्पादिकं सर्वं सौराग्नेः पार्थिवाग्नेश्च सोमाहुतिसंपर्काद् यज्ञाज्जायत इति भाव्यम्। तदिदं यज्ञस्योत्पादकत्वं पालकत्वं च प्रत्यक्षं निरीक्ष्यते। प्राणिनामुत्पत्तावपि स्त्रिया गर्भाशयगतेऽग्नौ रेतोरूपः सोम आहूयत इति तत एव कललोत्पत्तिः, गर्भाशयगतेऽग्नावन्नपानादिस्थसोमाहुत्या च तदभिवृद्धिर्भवतीति सर्वे एव शारीरविदो व्याचक्षते। तदेतदग्रे व्याख्येयम्। अस्माकं शरीरमपि च प्राणाग्निहोत्ररूपेण यज्ञेनैव परिपालितं तिष्ठति--

अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥ [ गीता, १५।४ ]

इत्युक्तो वैश्वानरोऽग्निः सर्वेषां जठरे स्थितः। तत्र हूयमानश्चान्नपानादिगतः सोमोऽनवरतं रसासृङ्मांसादिरूपमापद्य देहं रक्षतीति सर्वेषां नः प्रत्यक्षसिद्धम्। भुक्तमन्नादि वैश्वानरेण वह्निना रसरूपतां नीयते, असृक् च मांसरूपेण, मांसं मेदोरूपेण, मेदोऽस्थिरूपेण, अस्थि मज्जारूपेण, मज्जा च शुक्ररूपेण परिणमतीति सप्तधातून् आयुर्वेदविद आचक्षते। शुक्रं सन्तत्युत्पादने शारीरबलप्रयोगे च कारणतां गच्छति, रक्षितं त्वोजोरूपेण, ओजश्च मनोरूपेण परिणमतीति 'अन्नमयं हि सोम्य मनः" [६।५।४] इत्यादि छान्दोग्यश्रुतौ विवृतम्। मनश्च सोमरूपं सोमसमष्टिरूपे चन्द्रमण्डलेऽनवरतं गच्छति। ततश्च पुनरोषध्यादिषु सोमः संक्राम्यतीत्येतदेव चक्रम्। एवमनवरतं नवनवोत्पत्तिः पुरातनानां जीर्णानां रूपान्तरतापत्तिश्चेति चक्रं सर्वेषु पदार्थेष्वनुस्यूतं भाव्यमिति स एव प्राकृतो यज्ञः।

अशनपानादिक्रियाया यज्ञरूपता, तत्र यज्ञाङ्गानां समन्वयश्चापि छान्दोग्यश्रुतौ समाम्नातः--'स यदशिशिषति, यत्पिपासति, यन्न रमते ता अस्य दीक्षाः॥ अथ यदश्नाति, यत्पिबति यद्रमते, तदुपसदैरेति" [ ३।१७।१-२ ] इत्यादि। एवं विधयज्ञविज्ञानेनैव घोराङ्गिरसोपदिष्टेन देवकीपुत्रः कृष्णोऽपिपासो बभूवेत्यपि तत्रोक्तम्।

इयमग्नौ सोमाहुतिप्रक्रिया शिवशक्त्युपासनायामप्यनुकृता दृश्यते। शवरूपस्य शिवस्य हृदि विराजमाना आद्याशक्तिः सर्वैः शाक्तैर्ध्येयरूपतां नीयते, मूर्तिष्वपि च तदाकारा पूज्यते। तस्य मुख्य आशयोऽयं यद्ब्रह्मरूपस्य शिवस्य मध्यभागे केन्द्रे शक्तिरनवरतं विराजते। शक्तिविहीनः शिवः कदापि न भवतीति। इदमपि यज्ञरूपमग्रे व्याख्यातव्यम्। अयमपि त्ववान्तरः स्थूल आशयो यदग्निः शिवः, तदुपरि मध्यभागे केन्द्रेऽनवरतं शक्तिरूपः सोम आगच्छति। उपर्यन्तरिक्षे सर्वत्र सोमो व्याप्तः, स च संघीभूयाग्नौ निपततीत्युक्तं प्राक्। इदमेव मूर्तिरूपेणोपासकानां सिद्ध्यर्थं ध्याने स्थाप्यते। सोमोऽयं स्वतः कृष्णवर्ण इति शक्तिरपि कृष्णवर्णैव ध्यायते। अग्निरूपः शिवस्तु उज्ज्वलः स्थिरः स्थाप्यते। उः=प्राणः शिवः, तस्य

मा=शक्तिरित्युमापदेनैव शक्तिरुच्यते। उमया सहितः, अर्थाच्छक्तिविशिष्टः सोमो भवतीत्याद्यपि भाव्यम्। तदेतत् सर्वं बृहज्जाबालोपनिषदि सुस्पष्टमाम्नातं द्वितीये ब्राह्मणे---

"अग्नीषोमात्मकं विश्वमित्यग्निराचक्षते। रौद्री घोरा या तैजसी तनूः। सोमः शक्त्यमृतमयः शक्तिकरी तनूः।

अमृतं यत्प्रतिष्ठा सा तेजोविद्या कला स्वयम्।
स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसी॥ १॥

द्विविधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका।
तथैव रसशक्तिश्च सोमात्मा चानलात्मिका॥ २॥

अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते।
अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत्॥ ३॥

ऊर्ध्वशक्तिमयः सोम अधोशक्तिमयोऽनलः।
ताभ्यां संपुटितस्तस्माच्छश्वद्विश्वमिदं जगत्॥ ४॥

अग्नेरूर्ध्वं भवत्येषा यावत्सौम्यं परामृतम्।
यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः॥ ५॥

अत एव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वगा।
यावदादहनश्चोर्ध्वमधस्तात् पावनं भवेत्॥ ६॥

आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः।
तथैव निम्नगः सोमः शिवशक्तिपदास्पदः॥ ७॥

शिवश्चोर्ध्वमयः शक्तिरूर्ध्वशक्तिमधः शिवः।
तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किञ्चन॥ ८॥ इत्यादि।

जगति सर्वेष्वेव जडचेतनात्मकेषु पदार्थेषु गत्यागती प्रवर्तेते। सर्वत्र व्याप्तो ह्यग्निः प्राणो भूतसहकृतः स्वभावेन प्रतिक्षणं निष्क्राम्यति, तेन जाता क्षतिश्चापरत आगतेन सोमेनाग्निरूपतामाप्तेन प्रपूर्यत इति सर्वेषामेव पदार्थानां जीवनं यज्ञायत्तम्। यत्रागतिरधिका, गतिश्चाल्पा तत्पुष्टीभवति। यत्र तु गतिरधिका, आगतिश्च यमेन विच्छिन्नतयाल्पा तज्जीर्णं भूत्वा विनश्यतीति भावविकारविवरणे निरुक्तादिषु स्पष्टीकृतम्। इमामेव प्राकृतिकीं प्रक्रियामालम्ब्य कृत्रिमा यज्ञा विहिताः। अनुष्ठीयमानेषु यज्ञेष्वप्यग्नौ सोम आहूयते। सोमयागनाम्ना प्रसिद्धेषु महत्सु यज्ञेषु लतारूपः सोम एव कण्डनेन रसतामापाद्य हूयते। इष्ट्यादिषु यत्र सोमाहुतिर्न भवति तत्रापि येषु द्रव्येषु सोमस्य प्राधान्यं तान्येव गव्यघृतदुग्धादीनि तण्डुलादीनि च हूयन्ते। यथा च सोमाहुत्यैवाधिदैवतं दिनमासवर्षादिकालप-

रिच्छेदः, तथैव कृत्रिमेषु यज्ञेष्वपि प्रत्यहं सायंप्रातःसन्धिकालेऽग्निहोत्रम्; माससन्धौ च दर्शपौर्णमासौ, ऋतुसन्धौ च चातुर्मास्यादीनीति सर्वेयं प्राकृतयज्ञानुकृतिः।

सोमयागेष्वप्येकाद्यहीनरात्रिसत्रायनसत्रादिभेदाः प्रकृत्यनुकृत्यैव प्रवर्तन्ते।

"अयं वै लोको गार्हपत्यः" [ शत० ७।१।१।६ ]

'संवत्सरोऽग्निः" [ शत० ९।३।३।१२ ]

इत्याद्यासु श्रुतिषु लोकत्रयरूपता च गार्हपत्याहवनीयदक्षिणाग्नीनां प्रतिपादिता। तेन यथा लोकत्रयाधिष्ठितेष्वग्निषु सोमः प्रकृत्या हूयते, तथैवात्राप्यग्नित्रये सोमो हूयत इत्यनुकृतिः प्रदर्शिता।

तदित्थं सूर्येऽधिदैवतम्, प्राणिशरीरेष्वध्यात्मम्. सर्वेषु पदार्थेष्वधिभूतं च जगति प्रवर्तमानाऽग्नौ सोमाहुतिरूपा स्थूला यज्ञप्रक्रिया संक्षेपेण निदर्शिता।

इतः परं सूक्ष्मविचारे त्वग्नीषोमावपि यज्ञेनैवोत्पाद्येते यज्ञेनैव च स्वस्वरूपेऽवतिष्ठेते। अन्यान्यपि च देवभूतादीनि तत्त्वानि यज्ञादेवोत्पद्यन्ते तेनैव पाल्यन्ते चेत्याद्यपि श्रुतिभ्यः सिद्ध्यति। अग्नौ सोम आयाति, सोमं गृह्णन्नग्निश्च स्वात्मरूपतां प्रापयतीत्युक्तं प्राक्। अनयैव च दिशा सर्वेषु पदार्थेषु ये गत्यागती, या च देवानां भूतानां वा द्वयोः सम्बन्धेन रुपान्तरताप्राप्तिः, सा सर्वापि यज्ञपदेन तत्र तत्र श्रुतिषु व्याख्यायते। तथा हि पृथिव्युत्पत्तिस्तावदेवं व्याख्याता ब्राह्मणेषु [शत० ६।१।३।२-६]—आपः, फेनः, मृत्स्ना, सिकता शर्करा, अश्मा, अयः हिरण्यमित्यष्टाववस्थाः क्रमेणोद्भवन्ति। तासां समुदायश्च पृथिवीत्याख्यायते। प्रसृतास्वप्सु सूक्ष्मेऽवकाशे वायुः प्रविशति च निष्क्राम्यति चेति क्रियाऽनवरतं प्रवर्तते। यदा तु वायुनोत्थापितानामपां सूक्ष्मः स्तरो वायुमावृणोति, आवृतश्च वायुर्न निष्क्रमितुं प्रभवति, तदा बुद्बुदो जायते। क्षणानन्तरं जलस्तरं त्रोटयित्वा वायुर्निष्क्राम्यति बुद्बुदो विलीयते। परं यदा वायुनोत्थापितानामपां स्तरो घनीभवति, वायुवेगेन सहसा न त्रुटयति, तदा वायोश्चापाञ्च चिरं संघर्षाद् द्वयोरपि स्वरूपं विलीयते। द्विसंसर्गजश्च फेनरूपमाविर्भवति। सेयं द्वाभ्यामभिनवपदार्थोत्पत्तिरपि यज्ञ एव। एवं फेनेऽपि वाय्वादेस्तत्त्वान्तरस्य संघर्षाद् मृत्स्ना जायते, या 'पाँक' इति नाम्ना लोकभाषायां व्यवह्रियते। एवमेव तत्रापि वायुसूर्यकिरणादितत्त्वान्तरसंघर्षात् सिकता, तदनन्तरं चाश्मा। तत्र सूर्यरश्म्यादिनिष्ठस्याग्नेः प्रभावातिशयादय आद्या धातवः, सर्वान्ते च सर्वतो गुरुभूतं हिरण्यं निष्पद्यते। ता एता अष्टाववस्था शतपथब्राह्मणेऽष्टाक्षररूपेण निरूपिताः। इयञ्चाष्टाक्षरा गायत्री चयनयज्ञप्रकरण एव व्याख्याता।

वस्तुतस्तु द्वयोः सम्बन्धरूपो यज्ञः सृष्टेरारम्भादेव प्रवृत्तः श्रुतिष्वाम्नातः। द्वयोः सम्बन्धे प्रधानः पुरुष इति, अग्निरिति च परिभाष्यते। अप्रधानस्तु योषेति

सोम इति च परिभाष्यते । अग्निसोमयोर्यथाऽन्नादान्नरूपो वृषयोषारूपश्च सम्बन्धः तत्रैव द्वयोः सम्बन्धे एकस्य वृषत्वमर्थात् पुरुषत्वम्, अपरस्य तु योषात्वं प्रकल्प्य तत्राप्यग्नित्वं च सोमत्वं चारोप्यते । तयोः सम्बन्धश्च यज्ञशब्देनैवं व्यवह्रियत इति भाव्यम् । यथाऽनन्तकोटिब्रह्माण्डात्मकस्य जगत एकमेव मूलतत्त्वं सत्पदवाच्यमिति –"सदेव सोम्य इदमग्र आसीदेकमेवाद्वितीयम्" [छान्दोग्य० ६।२।१] इत्याद्यासु श्रुतिषु समुद्घुष्टः सिद्धान्तः । अविकृतं विभु तत् सृष्टिं रचयितुं न शक्नोतीति तत्रैका शक्तिः स्वाभाविकी कल्प्यत इत्यपि "आनीदवातं स्वधया तदेकम्" [ऋक्० १०।१२९।२] इति मन्त्रे, "परास्य शक्तिर्विविधैव श्रूयते" [ श्वेताश्वतरो० ६।८ ] इत्याद्युपनिषत्सु च श्रूयते । सोऽयं शक्तेर्ब्रह्मणश्च सम्बन्धः प्रथमो यज्ञः सर्वजगदुत्पादकः ।

अथ शक्तिविशिष्टोऽयं प्रजापतिर्भवति । अस्मात् परब्रह्मणः परमेश्वराज्जीवाविर्भावोऽपि यज्ञप्रक्रियैव गुरुचरणैः श्रीविद्यावाचस्पतिमहाभागैर्गीताविज्ञानभाष्यस्याचार्यकाण्डे निरूपितः । व्यापकस्य प्रजापतिपदाभिधेयस्य महेश्वरस्यांशो योगमायायां प्रवर्ग्यभूत एव जीवो भवति । महतः कश्चिदंशो यदा तस्मात्पृथग्भूय पृथग् स्वीयं तन्त्रं प्रवर्तयति, स्वतन्त्र इव भवति, तदा ऋग्वेदपरिभाषायां प्रवर्ग्यं इति, अथर्वपरिभाषायां चोच्छिष्ट इत्युच्यते । यथाऽग्नीषोमसूर्यकिरणैस्तापः प्रस्तरादिषु प्रवेश्यते अस्तं गतेऽपि च सूर्ये प्रस्तरादिषु सोऽनुभूयत इति सूर्यात् केन्द्रादपवृक्तः स इत्यनुमीयत इत्यादि भाव्यम् । अयं महेश्वरस्य प्रवृक्तोंऽशो भूतात्मेत्युच्यते प्रवृक्तं स्वतन्त्रं तं भूतात्मानं महानात्मा विज्ञानात्मा चाभिव्याप्य तिष्ठतः । तदुक्तं भगवता मनुना—

> तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च ।
> उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ।। [मनु० १२।१४]

इमे पृथक् पृथगात्मान आत्मतत्त्वव्याख्याने पृथग् व्याख्यातव्याः ।

तदित्थं महतात्मनोत्पादितेभ्य इन्द्रियेभ्यः संपन्नतमोऽयं भूत्वा स्वस्य तन्त्रं पृथक् प्रवर्तयति, स एव जीवात्मनोच्यते । स एष प्रजापतिर्यज्ञरूप एवाख्यातः । तदपवक्तश्च भूतात्मापि यज्ञ एवोक्तः—"यज्ञो वै प्रजापतिः" [कौषी० ३।७], 'सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यद्यज्ञः" [शत० १४।३।२।१ ] इति । स एष यज्ञ एव जीवभावजनकस्तद्रक्षकश्च । जनकः प्रारम्भिकयज्ञ इत्युच्यते, रक्षकस्तूत्तरयज्ञ इति । प्रथमेनास्य शरीरेन्द्रियादिसंबन्धो भवति, द्वितीयेन तु तत्पालनम् । उभयोरपि यज्ञयोः सप्ताहुतयो भवन्ति—शुक्राहुतिः, महदाहुतिः, प्राजापत्याहुति; वैश्वदेव्याहुतिः, ब्राह्मज्योतिराहुतिः, श्रीलक्ष्म्याहुती चेति । यावदेता आहुतयोऽविच्छिन्नाः प्रवर्तन्ते, तावदेव मनुष्यस्य जीवनम् । केनचित् प्रतिबन्धेन विच्छिन्नासु त्वाहुतिषु यज्ञविच्छेदः, जीवस्य तन्त्रोच्छेदरूपं मरणं च । स्वभावतश्चायं

१५

षट्त्रिंशत्सहस्राहः सत्रयज्ञ इति तद्रीत्या शतवर्षमितं मनुष्यजीवनम्। मध्य एव कारणतो यज्ञविच्छेदे स्वल्पायुष्ट्वमिति।

ता एता आहुतयो यजुर्वेदस्योत्तरनारायणसूक्तेन षडर्चेन व्याख्याताः। तत्र प्रथमा शुक्राहुतिः प्रथमेन मन्त्रेण व्याख्यायते—

अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे॥

[३१।१७]

अत्र शुक्रं कथमुत्पद्यत इति तदीयं वैज्ञानिकं तत्त्वमाम्नातम्। अद्भ्यः, पृथिवीरसात्, विश्वकर्मरसाच्चेति त्रिभ्यो द्रव्येभ्यः समुदितेभ्यः संभूय शुक्रोत्पत्तिः। तत्र सोमः, वायुः आप इत्येकस्यैव द्रव्यस्य सूक्ष्मस्थूलताक्रमेण तिस्रोऽवस्था इत्युक्तम्। एभिस्त्रिभिः पूर्वं शुक्रं संभ्रियते, पञ्चभूतात्मिकायाः पृथिव्या रसेन च सम्मिलितः स्थितिमापद्यते। अनन्तरञ्च विश्वकर्मणो रसादपि संभ्रियते पूर्णो भवति। लोकत्रयाधिष्ठातारस्त्रयो देवा अग्निवाय्वादित्या विश्वमेषां कर्मेति विश्वकर्माण उच्यन्ते। तेषां त्रयाणामपि रसोऽत्र संभृतो भवति। पूर्वोक्तो भूतात्मापि चैतन्यरूपेणात्र संनिधत्त इति द्वादशरसेयं शुक्राहुतिर्मन्त्रस्य पूर्वार्द्धेनोक्ता। देवानां भूतानां च समष्टिरूपमिदं शुक्रमिति फलितम्। अस्या आहुतेरग्रे किं भवतीत्युत्तरार्द्धेनोच्यते—तस्य संभृतस्य रसस्य शुक्रस्य त्वष्टा रूपं कल्पयति। कललबुद्बुदादिक्रमेण शरीराकारतां नयतीति तात्पर्यम्। त्रयस्त्रिंशद्देवेषु देवव्याख्याने परिगणितेषु द्वादशानामादित्यानामन्यतमोऽयं त्वष्टा श्रूयते, स्मर्यते च। सूर्यरश्मित एव मनुष्यशरीरस्याङ्गप्रत्यङ्गकल्पना जायते, तत्रापि चादित्यप्राणविशेषस्त्वष्टैव मुख्यतया भागं गृह्णातीति मन्त्रेऽस्मिन् स्फुटीभूतम्। ब्राह्मणेऽप्युक्तम्—"त्वष्टा वै रेतः सिक्तं विकरोति" इति। तदेतेन मर्त्यस्य जडभूतस्य रेतसो देवत्वं देवनिवासयोग्यत्वमुपजायत इत्युक्तं 'मर्त्यस्य देवत्वमाजानमग्रे" इति। देवव्याख्याने हि लोकान्तरगता देवा द्विविधा मया प्रतिपादिताः—आजानदेवाः कर्मदेवाश्चेति। ये जन्मनः प्रभृत्येव देवत्वमाप्तास्त आजानदेवाः, ये तु यज्ञादिकर्मभिर्देवत्वं भजन्ते ते कर्मदेवा इति। ते लोकान्तरगता आजानदेवा अप्यत्र मनुष्यशरीरे सन्निदधत इत्यत्राजानपदेन सूचितम्, अग्रे च चतुर्थे मन्त्रे पुनर्विव्रियेत। "अग्निर्वाग्भूत्वा मुखं प्राविशत्" [ऐत० उ० २।४] इत्यादिषु श्रुत्यन्तरेषु च स्पष्टीकृतम्।

कौषीतक्युपनिषद्यारम्भादेवेदमुक्तम्—"ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" [१।२] इति। तत्र चन्द्रमास्तं पृच्छति कोऽसीति, तस्योत्तरं गतो जीव आह—"विचक्षणादृतवो रेत आभृतं पञ्चदशात् प्रसूतात् पित्र्यवतः। तन्मा पुंसि कर्तर्य्यैरयध्वम्। पुंसा कर्त्रा मातरि मा निषिञ्च। स जायमान उपजायमानो द्वादशत्रयोदश उपमासो द्वादशत्रयोदशेन पित्रा सं तद्विदे प्रति तद्विदे-

ऽहम्'''।। ऋतुरस्मि आर्तवोऽस्मि आकाशाद् योनेः संभृतो भार्या एतत्संवत्सरस्य तेजो भूतस्य भूतस्यात्मा, त्वमात्मासि, यस्त्वमसि सोऽहमस्मि" [१।२,६] इति।

प्ररोचनाय प्रश्नोत्तरप्रक्रियेयमभिहिता। तात्पर्यं त्वस्य प्रश्नोत्तरस्येदमेव यत् सोमप्रधानाच्चन्द्रमण्डलाद् रेतो जायते तत एव जीवशरीरं निर्वर्तते, तस्माच्चन्द्रस्यांश एव जीवशरीररूपेण परिणत इति यस्त्वमसि सोऽहमस्मीत्यादिना स्वस्मिश्चन्द्राभेद एव पुरुषेण ख्याप्यते। रेतःशब्दश्चायं तत्तदुत्पादके सर्वत्रैव व्यवहृतः। यथा हिरण्यरेता इत्यग्निरुच्यते। अग्नेः सारभूतादंशाद्धिरण्यं जायत इति हिरण्यस्याग्निरेतस्त्वं व्यवहृतम्। एवमेव कृशानुरेता इति रुद्र उच्यते। रुद्रस्यांशादेव भौतिकोऽग्निरुत्पद्यत इति रुद्रस्य रेतः कृशानुरुच्यते। ऐतरेयश्रुतौ तु विस्तरेणेदं स्पष्टीकृतम्—

"अथातो रेतसः सृष्टिः—प्रजापते रेतो देवाः, देवानां रेतो वर्षम् वर्षस्य रेत ओषधयः, ओषधीनां रेतोऽन्नम्, अन्नस्य रेतो रेतः, रेतसो रेतः प्रजाः, प्रजानां रेतो हृदयम्, हृदयस्य रेतो मनः, मनसो रेतो वाक्" इत्यादि।

अत्र सर्वत्र सारभूतं तज्जन्यं च रेतःपदेनोक्तम्। तथैवोक्तायां कौषीतकिश्रुतावपि ऋतूनां चन्द्रजन्यत्वाच्चन्द्ररेतस्त्वमुक्तमित्याद्यनुसन्धेयम्।

एवं शुक्राहुत्या शरीरनिष्पत्तिपर्यन्तं प्रथमेन मन्त्रेणाभिहितम्।

अथ महदात्मनोऽत्र संबन्धं बोधयितुं द्वितीयेन मन्त्रेण महानात्मा स्तूयते—

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ [३१।१८]

अयं महानात्मा श्रुतिषु बहुधा स्फुटीकृतः। सूर्यमण्डलादुपरि वर्तमानस्य परमेष्ठिमण्डलस्यायं रसः।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥
[कठो० १।३।१०-११]

अत्र बुद्धेरपेक्षया महतः परत्वमुक्तम्। भगवद्गीतास्वपि च—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥
[गीता० १४।३-४]

अत्र सर्वभूतानामाकृतिजनकत्वं महत एवोक्तम् । प्रकृतिरूपे च महति विज्ञानात्मा गर्भं दधातीति तत एव सर्वभूतसंभवो भवति । स एष महान् त्रिविधोऽन्यत्र व्याख्यातः । आकृतिमहान्, प्रकृतिमहान्, अहङ्कृतिमहांश्चेति । भूतानामाकृतिरनेन संपाद्यते । सर्वेषु शरीरनिष्ठेषु मनआदिषु विभिन्नेष्वहंभावोऽप्यनेनैव क्रियते । सोऽयं महान् उक्ते मन्त्रे श्रुतः । तमसः परस्तादित्यनेन सूर्यमण्डलात् परत्वमस्य व्यक्तीकृतम् । मृत्योर्व्याप्तिश्च त्रिलोक्यामिति तं विदित्वा = लब्ध्वा मृत्युमतिक्राम्यतीत्यपि मन्त्र उक्तम् । सोऽयं महान् सर्वत्र व्याप्तो भूतात्मना संबद्धो भवतीति द्वितीयेन मन्त्रेण सूचितम् । अवमेव महान् सह इति श्रद्धेत्यपि चोच्यते । परमेष्ठिमण्डलादेष चन्द्रेऽवतरति, चन्द्राच्च पृथिवीस्थैर्जीवैः प्राप्यते । श्रद्धाशब्दस्यायमर्थो यदात्मा श्रयते यदाश्रित्यायमात्मा प्रतितिष्ठति तत् सत्यं श्रत्, श्रतो धानं श्रद्धा । मैत्रात्मप्रतिष्ठाहेतोः सत्यस्य यत्र क्वचिदन्यस्मिन्नात्मनि प्रवाहमर्यादया परिस्थितिस्तत्रैव सत्यवशादयं मैत्रात्मा प्रेमबन्धनेन प्रतितिष्ठति । स तत्रात्मना श्रद्धते । तस्मात्तत्रायमात्माऽनुरज्यते । अनुरञ्जनमद्भिः संपद्यते, तस्मादापः श्रद्धा ।

तदेवं महत आत्मनः सम्बन्धरूपा द्वितीया महदाहुतिर्द्वितीयेन मन्त्रेणाख्याता । अथ क्षेत्रज्ञात्मसम्बन्धस्तृतीयेन मन्त्रेणोच्यते । अयमेव विज्ञानात्मेत्युच्यते । शरीरस्थानां सर्वासां प्रजानामयमधिपतिरिति प्रजापतिपदेन मन्त्रेऽयं स्तुतः ।

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनि परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ।। [३१।१९]

मन्त्रोऽयं प्रजापतिप्रसङ्गे पूर्वस्मिन् देवव्याख्याने सम्यग् विवृतः । अयं हृदि केन्द्रे तिष्ठतीति गर्भे अन्तश्चरतीत्युक्तम् । केन्द्रशक्तिरेवाभितः प्रसृता पिण्डमुत्पादयतीति बहुधा विजायत इत्युक्तम् । केन्द्रशक्त्याधारेणैव सर्वं वस्तु तिष्ठति, केन्द्रस्थानं च दुर्ज्ञेयं भवतीत्यादि सर्वं व्याख्यातपूर्वम् । सेयं तृतीया प्राजापत्याहुतिः ।

अयं विज्ञानात्मा बुद्ध्यवच्छिन्नं चैतन्यम् । बुद्धिश्च द्विविधा—विद्या च अविद्या चेति । सात्त्विकी विद्या, तामसी त्वविद्या । धर्मो ज्ञानं वैराग्यमैश्वर्यंक्तिमिति विद्यास्वरूपम् । अधर्मोऽज्ञानमवैराग्यमनैश्वर्यमित्यविद्यास्वरूपम् । अविद्यया बध्यते, विद्यया तु मुच्यते । तदित्थं बुद्धिसंबन्धस्तृतीयेन मन्त्रेणोक्तः । चतुर्थेन त्विन्द्रियसंबन्धो मनःसंबन्धश्चोच्यते—

यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ।। [३१।२०] इति ।

देवा एवेन्द्रियरूपेण प्रविशन्तीति सूचितं प्रथमे मन्त्रे । अन्यत्रापि बहुत्र श्रुतिषु देवा इन्द्रियाण्युच्यते । अत्र मन्त्रे देवेभ्यो य आतपति, देवानां यो मुख्यो पुरोहित

इति मनः सूचितम् । अनेनैव मनसा ब्राह्मी रुग् भवति । स्मृतिष्वप्युक्तम्—"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इत्यादि ।

एवं स्थूलसूक्ष्मशरीरयोः सम्पत्तौ मनुष्यशरीराकारे पूर्णा पञ्चमी ब्रह्मज्योतिराहुतिर्भवति, अर्थाद् यस्यायमपवृक्तोंऽशः पृथक् तन्त्रं प्रवर्तयितुमात्मनि विजातस्तत्र व्यापकं ब्रह्म प्रविशति । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति न्यायात् । ब्रह्म हि सर्वत्र परिव्याप्तम्, तद् विना कृतं किमपि न तिष्ठति । संपन्ने पृथक् तन्त्रे तत्रापि तस्य व्याप्तिरेव प्रवेशः । अयमेव देहे चिदात्मेति परमात्मेति चाख्यायते । पूर्वं शुक्रेऽनुप्रविष्टश्चिद्धातुस्तु चिदाभास इति । तदेतत्—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥
[श्वेताश्वतर० ४।६]

इत्याद्यासु श्रुतिष्वपि स्पष्टीकृतम् । भोक्ता चिदाभासः, अनश्नन् केवलं द्रष्टा तु चिदात्मेति । सेयं ब्रह्मज्योतिराहुतिः पञ्चमेन मन्त्रेणोक्ता—

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे ॥ [३१।२१] इति ।

देवैर्ब्राह्मी रुग् या मनोरूपेण संभृता, तस्यामेव चिदात्मनो विकासो जायते । अस्यैव परमात्मनो विज्ञानेनेन्द्रियाणां वशीकारो मुक्तिश्च सम्पद्यत इति मन्त्रोत्तरार्द्धेनोक्तम् । चिदात्मनः परमात्मनः संबन्धे च श्रीश्च लक्ष्मीश्च जीवे प्रादुर्भवत इति षष्ठी सप्तमी च श्रिया लक्ष्म्याश्चाहुती षष्टेन मन्त्रेणाम्नायेते—

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥ [३१।२२] इति ।

ताभ्यामाहुतिभ्यां श्रीमदूर्जितश्च जीवात्मनः स्वरूपं संपद्यते । अनयोरेवोत्कर्षे विभूतिरूपता, अंशावतारता वा तत्तेषां शास्त्रेषु व्याख्याता । तदुक्तं भगवता—

यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ इति ।

इत्थं सप्तभिराहुतिभिर्जीवसंपत्तिर्यज्ञेन सम्यग् विवृता ।

यद्वा तृतीयाद्याः पञ्चाहुतयः चतुः प्राश्य ब्रह्मौदनरूपेत्यपि प्रकारान्तरं गुरुचरणैर्व्याख्यातम् । परं तदिह समयाभावान्न प्रपञ्चयितुं शक्यते, विस्तृतं तत् पृथगेव व्याख्यानमर्हतीति ।

अथैवं सृष्टयादौ पुरुषत्रयप्रादुर्भावः संसारमूलभूतानां मनःप्राणवाचां परस्परमुत्तरोत्तरीभावश्च सर्व एव यज्ञकृतस्तत्र तत्र व्याख्यायते । क्षरपुरुषकलानां च प्राण-

व्वागन्नादान्नानां परस्परं पञ्चीकरणं पुरुषसूक्ते सर्वहुद्यज्ञनाम्ना विवृतम् । आदौ च सामग्र्यभावे पुरुषावयवैरेव यज्ञः संपाद्यत इत्यपि तत्रोक्तम्—

"देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्" (पुरुषसूक्ते) इति । परं तदेतत् सर्वं सृष्टिनिरूपणेनैव व्याख्यातुं शक्यते, न चैकस्मिन् व्याख्याने सर्वं समावेशयितुं शक्यमिति केवलं यजमानात्मनः कृत्रिमेण यज्ञेन स्वर्गतिः कथं संपाद्यत इति संक्षेपेण विवृत्य वक्तव्यमिदमुपसंहरामि ।

अन्ये सर्वेऽपि यज्ञा अग्नौ सोमाहुतिरूपाः, चयनयज्ञस्त्वग्नावग्नेरेवाहुतिरित्यग्नेरेव चितिस्तत्र संपाद्यते । तदेतदुक्तं श्रुतिषु—

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुयाकर्भागधेयम् ॥
[तैत्ति० सं० १।३।७]

अयमेव मन्त्रः किञ्चित्पाठभेदेन शुक्लयजुषि (५।४) अथर्ववेदे (४।३९।९) चाप्युपलभ्यते । इहाग्नावेवाग्नेराहुतिः प्रतिपादिता । अत्राग्निर्द्विविधः—चित्यः, चितेनिधेयश्च । यस्मिन् हूयते स चित्यः, यस्तु हूयते स चितेनिधेयः । चितेनाग्निनैवाधिदैवमधिभूतमध्यात्मं च देवा भूतानि चोत्पाद्यन्तेऽध्यात्मं देवा इन्द्रियाणीत्युक्तं प्राक् । पुनराहितेन चितेनिधेयेनाग्निना यदा चित्योऽग्निर्बलवान् संपद्यते, तदा जीर्णानि पत्राणीव देवाश्च भूतानि च ततो विस्रंसन्ति । तेन पृथिव्याश्चन्द्रस्य चाकर्षणाद् विमुक्तो यजमानस्यात्मा शुद्धाग्निमयेनाधिदैवं सूर्येणैव सह संपद्यते । सूर्यमण्डलमुत्तीर्णस्य च नात्र त्रिलोक्यां पुनरावृत्तिरिति मुक्त एव स भवति । सेयं चयनयज्ञेन क्रममुक्तिः श्रुतिषु ख्याप्यते, सोमाहुतिरूपेण यज्ञेन तु देवेषु गतिर्भवति । तत्राग्न्याधानेन पूर्वं शारीराग्निरूप आत्मा संस्क्रियते, अग्निहोत्रदर्शपौर्णमासचातुर्मास्यादिभिश्च प्राक्सौमिकपदवाच्यैर्यज्ञैस्तत्र बलमुपचीयते । अनन्तरं सोमयागेनाधिदैवं व्याप्तो योऽग्निस्तेन सम्बन्धः स्थाप्यते तेन च शरीरबन्धननिवृत्तावाधिदैविकेनाग्निना समाकृष्टोऽयं तत्रैव नियतं प्रकृतिनियमेन गच्छति ।

तदित्थं यज्ञसंस्कृतस्य दैवात्मनो यज्ञात्मापरपर्यायस्य देवभावप्राप्तिर्वैज्ञानिकी सिद्धान्तसिद्धा । अत एव स्वर्गकामो यजेतेति डिण्डिमघोषमुद्घोषयन्ति वेदाः ।

व्याख्याते यज्ञस्य द्वे फले—जगच्चक्रपरिचालनं च स्वात्मनः स्वर्गतिलाभश्चेति । आद्यो निष्कामानां भगवद्गीतायां विवृतः—

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ इति ।

जगच्चक्रपरिचालनार्थं क्रियमाणैः कर्मभिर्नात्मा बध्यत इत्यपि तत्रोक्तम्—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ इति।

द्वितीयं तु फलं सकामानां स्वर्गे लोके गत्वा तत्र दिव्योपभोगादीति श्रुति-पुराणादिषु सर्वत्र विवृतम्। श्रुतिषु कथं यजमानं स्वर्गलोकं प्रापयिष्यसीति ऋत्विजां प्रश्नोत्तरयोः स्वर्गप्राप्तेर्वैज्ञानिकी प्रक्रियापि स्पष्टमनेकत्र विवृता दृश्यते। यस्या एकदेशः प्राक् स्वैदायनाख्यायिकायां निर्दशितः।

तदिदं भारतसर्वस्वभूतं यज्ञविज्ञानं भारतीयैर्विस्मृतमित्येव तेषां सर्वापेक्षया-ऽवनतिर्दुर्गतिश्च। भगवतः कृपया पुनस्तत्प्राप्तौ भारतं सर्वदेशोन्नतं जगद्गुरुश्च भवितुमर्हतीति शिवं स्तात्।



# वैदिकशिक्षादर्शनबिन्दुः

प्रथमं प्रवचनम्

## वेदाङ्गेषु शिक्षा

संहितासारबहुलः पदसंज्ञासमाकुलः ।
क्रमसन्धिसमाकीर्णो दुस्तरो मन्त्रसागरः ।।

ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।
साम्नां वा सरहस्यां च सर्वपापैः प्रमुच्यते ।।

स्वरवर्णप्रयुञ्जानो हस्तेनाधीतमाचरन् ।
ऋग्यजुः सामभिः पूतो ब्रह्मलोकमवाप्नुयात् ।।

[ याज्ञवल्क्यशिक्षा-३०, ३१, ४२ ]

* ❀

माननीयाः कुलपतिमहोदयाः तेषु तेषु शास्त्रेषु तलस्पर्शिवैदुष्यमावहन्तो विद्वच्चक्र चूडामणयः, समवेतास्सुहृदयश्छात्राश्च !

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयाधिकारिभिरुपाधिवितरणोत्सवप्रसङ्गे भाषणानि प्रदातु महमाहूतो जिह्रेमि बिभेमि च । तथापि बहुश्रुतानां भवतां विदुषां कर्णविवरेषु मदीयाश्शब्दाः स्थानं न लभेरन्निति निश्चित्य प्रवृत्तोऽहमस्मिन् कर्मणि । यदि वा मदीयाश्शब्दा भवच्छ्रोत्रपुटेषु कथञ्चित् स्थानमवाप्नुयुः, तर्हि पुनरुक्तिरूपा एव ते भवेयुः, तत्रापि यदि काचन त्रुटिर्भवेत्, कृपालवो भवन्तः क्षन्तुमर्हन्तीति प्रथमं सम्प्रार्थ्यं भाषितुमारभे ;

पवित्रतमेऽस्मिन् भारते केनापि सुकृतविशेषेण वयमजनिष्महि । किमु वर्णयामो वयम्, अस्माकं पचेलिमं भागधेयमहिमानं यदत्र चिरन्तना अत्रिभृगुकुत्सवसिष्ठगौतमकाश्यपभरद्वाजादयो महर्षयो भारतस्य महान्तं निधिं वेदाभिधानं शब्दराशि यथानियमं परिरक्षन्त आसन् । तेषां वंशे जनिर्विना सुकृतेन कथं लभ्येत । न केवलं तत्तन्महर्षिवंशजास्स्मो वयम् किन्तु तैर्निर्मिते सुमहति मनोहरे प्रासादे च वयं निवसामः । प्रासादनिर्माणाय इष्टकाः स्नुही सिकताः सुधा चेत्यादयोऽपेक्ष्यन्ते । चिरन्तनास्तु लौकिकीमिमां सामग्रीमनपेक्ष्य इष्टकास्थानेऽर्थं कामञ्चेति द्वितीयतृतीयपुरुषार्थौ गृह्णन्तः, धर्मस्नुहीं सामान्यतो विशेषतश्च द्वेधा परिकल्प्य विशेषधर्मं

स्नुह्या इष्टकाः संयोज्याभ्रंलिहाः सुदृढा भित्तीर्निर्माय ताः सामान्यधर्मस्नुह्याऽनुलिप्य दृढतरैः पाषाणैराच्छाद्य मोक्षसुधया प्रासादं सम्भूष्यास्मभ्यं प्रादुः, यत्राद्यापि सुखेन वयं निवसन्तो धर्मस्नुह्या मोक्षसुधायाश्च सौगन्ध्यमाजिघ्रामः। **'सम्पुष्पितस्य वृक्षस्य दूराद् गन्धो वाति'** इति श्रुत्यनुसारेण देशान्तरनिवासिनोऽप्याघ्रापयन्नयं भारतदेशो देशान्तराणामपि गुरुरित्याख्यायते। गौरवस्यास्य प्राप्तये किं कारणमन्यत् स्यादृते वेदाभिधानशब्दराशेस्सम्बन्धात्।

वेदस्तु महान् निधिर्देशस्य। भारतमातुः प्राणाः खलु वेदाः। याञ्च धर्मस्नुहीं परिकल्प्य प्रासादं निरमासत चिरन्तनाः तस्या धर्मस्नुह्यास्तत्त्वं यथावदवबोधयितुं मूलमितरनिरपेक्षञ्च प्रमाणं वेदाः। वेदप्रामाण्यस्वीकार आस्तिकदार्शनिकानां समेषां सिद्धान्त एकरूप एव। न तत्र न्यूनाधिकभावमुपलभामहे। प्रामाण्यस्वीकारप्रकारस्तु कामं भिन्नो भवेत्। प्रकारभेदमात्रेण वस्तुनस्स्वरूपं न भिद्यते। ईश्वरोक्तत्वेनेश्वरप्रणीतत्वेन, कृतकेतरवचनत्वेन, भगवदुच्छ्वासनिश्वासरूपत्वेन वा वेदानां प्रामाण्यमङ्गीकुर्वन्तो दार्शनिका वेदप्रामाण्यविषये एकरूपा एव। तस्य तस्य दार्शनिकस्य नियतः कश्चन मनोहरः पन्था भवति, येन च गच्छन् स स्खलद्गतिर्न भवति। स्वस्वदर्शनस्य कृते चिरन्तना मसृणं पन्थानं प्रवर्तयाम्बभूवुः, तत्र स्खलनस्य क्वावसरः ? किन्तु मार्गे परैः प्रक्षिप्यमाणान् कण्टकान् प्रस्तरखण्डांश्च युक्तिभिस्तर्कैश्च दूरीकुर्वन्तोऽग्रे गच्छन्त्येव। केनचन दार्शनिकेन कस्यचन दार्शनिकस्य मतं खण्डितमिति खण्डयितुर्मतं स दार्शनिकः स्वीकृत्य गच्छतीति नाद्यावधि क्वापि दर्शने वयमनुभवामः। खण्डयिता खण्डयश्च स्वस्वस्थान एव वर्तेते, स्वस्वमार्गे गच्छन्नेवानुभूयते।

एक आस्तिकदार्शनिकोऽपरमास्तिकदार्शनिकम् **'त्वमवैदिको वेदबाह्यः'** इति पर्यनुयुञ्ज्याद् यदि, तर्हि न कदापीमं पर्यनुयोगं स स्वीकुर्यात्। अतो दार्शनिका भिन्नभिन्नमार्गगामिनोऽपि वेदसूत्रेणैकेन प्रबद्धाः स्वानि कार्याणि साधयन्ति।

एतावांस्तु तत्र विशेषः परिकल्पयितुं शक्यते यत् केचन दार्शनिका वेदैस्सह साक्षात् सम्बद्धाः, अपरे चारात्सम्बद्धाः। विभिन्नमार्गैः स्वच्छन्दरूपेण गभीरं प्रवहन्त्यो महानद्यः स्वस्वमार्गपतिता उपनदीरादाय सागरेण पत्या मिलिता अन्ते एकीभवन्ति यथा, तथैव तैस्तैर्दार्शनिकधुरन्धरैः प्रकल्पिता विचारधारा अन्ते वेदसागरमवाप्यैकीभवन्ति। सर्वदर्शनानामुद्गमस्थानं यथा वेदः, तथैव स लयस्थानमपि। अथवा समेषां दर्शनानां समन्वयालयो वेद इत्यप्यभिधाने न कश्चन दोषः। एवमनल्पानां पुराणेतिहासस्मृतिधर्मशास्त्रादीनां मूलं वेदः।

मूलमिदं परिरक्षितुं महर्षयो राजगृहस्य दुर्गाणीव षडङ्गानि व्याकरणादीनि प्राणैषुः। तत्र शिक्षाया अङ्गत्वं कीदृशम् ? कथं सा वेदानामुपकारिकेति विमृशामः।

'शिक्ष विद्योपादाने' इति शिक्षतिधातोर्निष्पन्नश्शिक्षाशब्दः। वेदविद्याया उपादानं ग्रहणं प्राप्तिरिति यावत्। प्राप्तिश्चास्या गुरुमुखादेव, नान्येनोपायेनेत्यध्ययनविधिर्ब्रूते। 'स्वाध्यायोऽध्येतव्यः' इति विधिः स्वकुलपरम्परागतशाखाया अध्ययनं विधत्ते। अर्थादध्ययनेन गुरुमुखोच्चारणानुच्चारणेन स्वशाखासमवाप्तव्येति। उत्पत्त्याप्तिविकृतिसंस्कृतिरूपेषु चतुर्विधेषु कर्मस्विदमध्ययनमाप्तिसंस्कारकर्मेति शास्त्रविदः। संस्कारकर्मणामेष नियमो यत् संस्कृतस्य पदार्थस्य भूते भाविनि वोपयोगो भवेदिति।

गुरुमुखोच्चारणानूच्चारणविधया संस्कृतस्यास्य शब्दराशेः क्व वोपयोगो भवेत्? यदीदं वाक्यं किञ्चित् प्रकरणमारभ्य पठितं भवेत् तर्हि प्रकरणसम्बन्ध्यपूर्वसाधकत्वेनोपयोगो भवेत्। न चैतदस्ति अस्यानारभ्याधीनत्वात्। अतः कथमाप्तिसंस्कारकर्मेति भवत्याशङ्का? अस्याश्शङ्काया इदमुत्तरं भवति यदग्निहोत्रदर्शपूर्णमासादिक्रतवो ज्ञानवन्तं पुरुषं त्रैवर्णिकमधिकारिणमपेक्षन्ते, उपनीताधिकारत्वादध्ययनस्य। उपनीताश्च त्रैवर्णिका एव भवन्ति, न चतुर्थ इति शूद्रस्यानधिकारः सिध्यति। तेन त्रैवर्णिकानामधिकारिणां विशेषणत्वेनाध्ययनविधिसिद्धा विद्या स्वीकर्तव्या। एवञ्चाध्ययनविधेरनारभ्याधीतत्वेऽपि नियमविधित्वं सिद्धं भवति —अध्ययनविधिसिद्धज्ञानवानेवोत्तरक्रतुष्वधिकरोति, नान्य इति। एवञ्चाध्ययनेनावाप्तस्य संस्कृतस्य वा स्वाध्यायस्य स्वतोऽपुरुषार्थत्वात् फलाकांक्षायामधीतवेदजन्यधर्मावबोधस्य दृष्टस्य स्वर्गादिसाधनतया फलत्वात्, तमेव प्रयोजनवदर्थावबोधापरनामधेयमधीतस्वाध्यायः फलत्वेन गृह्णाति। तथा चाधीतेन स्वाध्यायेनार्थावबोधं भावयेदिति वाक्यार्थः पर्यवसन्नो भवति।

अस्मिन् प्रसङ्गे किञ्चिद् वक्तुमिच्छामि —वटोरध्ययनारम्भे स्वाध्यायाध्ययनविधिरर्थावबोधायाध्ययनं विधातुं न क्षमते, अर्थावबोधरूपफलेच्छायास्तस्यां दशायां वटोरभावात्। पितृगुरुप्रेरणयैव स कथञ्चित् प्रवर्तनीयो भवति। यदा हि स वटुः कालान्तरे गृहीतपदपदार्थसंगतिको भविष्यति, तस्यार्थावबोधः स्वत एव सिध्यति। यद्यध्ययनविधिरर्थावबोधान्त एव स्यात्, तर्हि कृत्स्नायाः स्वशाखाया अध्ययनं न स्यात्, ब्राह्मणस्य राजसूयप्रकरणाध्ययनेन तदर्थज्ञानम्, राजन्यस्य बृहस्पतिसवनप्रकरण ध्ययनेन तदर्थज्ञानम् वैश्यस्य राजसूयबृहस्पतिसवनप्रकरणाध्ययनेन तदर्थज्ञानञ्च व्यर्थं स्यात्। अर्थज्ञानं तु सामर्थ्येन तत्तत्कर्मानुष्ठानाङ्गं स्वीकृतं शास्त्रविद्भिः। तेषां कर्मणामनुष्ठानप्रसङ्ग एव नोदेति यदा तदा तत्तदध्ययनस्य किं प्रयोजनं स्यात्? अतो 'विधिस्सर्वांशे प्रवर्तते, निषेधस्त्ववयवेऽपि प्रवर्तते' इति न्यायस्यानुसर्तव्यत्वेनाध्ययनविधेरर्थावबोधान्तत्वं त्यक्तव्यं भवेत्। न चेदमनुचितम्। अत एवाध्ययनविधिरक्षरानुपूर्व्यवधारणरूपग्रहणार्थं इति स्वीकर्तव्यम्।

अयमर्थः—ऋग्भाष्यभूमिकायां सायणाचार्योद्धृतैः पुरुषार्थानुशासनसूत्रैः **'बोधान्तत्वेऽध्ययनाकात्स्न्यर्म्'** इत्यादिभिस्सिद्धो भवति । तथा — **ब्राह्मणेन निष्कारणो वेदः षडङ्गोऽध्येयो ज्ञेयश्च'**[१] इति महाभाष्यप्रदर्शितश्रुतिद्वाराप्यध्ययनं वर्णानुपूर्व्यवधारणरूपग्रहणार्थमिति सिध्यति । अध्ययनस्य बोधान्तत्वे 'ज्ञेयश्च' इति विधेरानर्थक्यापत्तेः ।

किञ्च, स्मृतिपादस्य कल्पसूत्राधिकरणे कल्पानां सूत्राणां षडङ्गानां मन्वादिस्मृतीनाञ्चापौरुषेयत्वम्, अथवा पौरुषेयत्वमिति सन्दिह्य **'मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमेके'**, **'यदृचोऽधीते'** इत्युपक्रम्य **'पुराणानि कल्पान्'** इत्यादिप्रमाणैरमीषामध्ययनविधिदर्शनात्, नित्यत्वमपौरुषेयत्वञ्च पूर्वपक्षितम् । अनेन पूर्वपक्षन्यायेन षडङ्गानामप्यध्ययनेन गुरुमुखोच्चारणानूच्चारणेन कल्पसूत्राणां षडङ्गानाञ्च वेदवदाप्तिसंस्कारः क्रियते स्मेत्यवगम्यते । तथैवाद्यतनेऽपि वैदिकसमाजे तादृशा वैदिका उपलभ्यन्ते, ये च वाचोविधेयतया षडङ्गानि कल्पसूत्राणि च परिरक्षन्ति । अतश्च यथा हि वेदाध्ययनमाप्तिसंस्कारकर्म, तथैव षडङ्गाद्यध्ययनमपि तादृशं कर्मेति सिध्यति । पूर्वपक्षिणोऽयं न्याय इति न तत्र हेयदृष्टिर्भवितुमर्हति, तथाविधाध्ययनस्याधुनापि दृश्यमानत्वात् । वेदाध्ययनस्यार्थज्ञानफलकत्वमनन्तरकालिकम्, अक्षरानुपूर्वीग्रहणं तु प्राथमिकम् । असञ्जातविरोधित्वन्यायेन तदेव फलं प्रथममेष्टव्यम् । वेदानां पदपदार्थावबोधमात्रेणार्थज्ञानं न सम्पादितं भवेत्, किन्तु वाक्यार्थज्ञानसम्पादनेनैव फलं सिद्धमिति परिगण्यते । तच्च गुरुकुलवासपूर्वकं मीमांसाध्ययनजन्यम् । ततः पूर्वमक्षरानुपूर्व्येव धारणमावश्यकम् । केवलं वेदवाक्यार्थज्ञानवान् मीमांसको वा वैयाकरणो वा वेदाध्यायीति न परिगण्यते । अक्षरानुपूर्व्यवधारणसमय एव शिक्षाया भवत्यावश्यकता ।

तैत्तिरीयोपनिषदि **'अथ शीक्षां व्याख्यास्यामः'**[२] इत्युपक्रम्य **'वर्णः स्वरः मात्रा बलं साम सन्तानः इत्युक्तः शीक्षाध्यायः'**[३] इत्युपसंहृतम् । इमां श्रुतिमवलम्ब्यैव शिक्षाग्रन्थान् चिरन्तनाः प्रवर्तयाम्बभूवुः 'शिक्ष' विद्योपादाने धातोः शिक्षाशब्दः—शिक्ष्यन्ते वेदनीयत्वेनोपदिश्यन्ते स्वरादयो यत्र सा शिक्षा, तद्वाचकः । शिक्षैव शीक्षा भवति । तत्र निरूपणीयाः पदार्थाः षट्— अकारादयो वर्णाः, उदात्तादयस्स्वराः, ह्रस्वदीर्घप्लुता मात्राः, स्पृष्टेषत्स्पृष्टादयः प्रयत्ना बलम्, अतिद्रुतत्वमतिविलम्बितत्वं परिहृत्य यथोपदेशमुच्चारणं साम, पूर्वस्योत्तरेण सन्धानं सन्तानः संहिता । एवंप्रकारेण शिक्षारूपोऽध्यायोऽध्येतव्यः, गुरुमुखोच्चारणानूच्चारणविधाया प्राप्तव्य इति श्रुतेरर्थः ।

---

१. महाभाष्यम्—पस्पशाह्निकम्, पृ० २३. निर्णयसागरीयं संस्करणम् ।

२. तै० उ० १।२; ३. तत्रैव ।

अध्ययनस्य पठनस्य च भूयान् भेदः । वेदं पठति, वेदमधीते इत्यनयोर्व्यवहारयोरर्थेऽस्ति पार्थक्यम् । अध्ययनं तु गुरुमुखोच्चारणानूच्चारणरूपम्, पठनं त्वेवं न भवति । एवञ्च वेदवत् षडङ्गानामप्यध्येयत्वे सिद्धेऽध्ययनेन कथं वेदोऽवाप्तव्य इत्याकांक्षायां शिक्षाग्रन्था इतिकर्तव्यताकांक्षां पूरयन्ति ।

तत्रानेकहायनेभ्यः पूर्वं काशिकराजकीयविद्यालयाध्यापकेन पण्डितश्रीयुगलकिशोरव्यासेन डॉ॰ ग्रिफिथमहोदयप्रेरितेन शिक्षासङ्ग्रहः कश्चन प्रकाशितः । यस्मिंश्च माध्यन्दिनशाखासम्बन्धिन्य एकविंशतिशिक्षाः, ऋग्वेदसम्बन्धिन्येका, नारदगोतमलोमशशिक्षास्तिस्रः सामशाखासम्बन्धिन्यः, अथर्वशाखासम्बन्धिन्येका माण्डूकशिक्षा च विद्यन्ते । इमा याज्ञवल्क्यवसिष्ठ-कात्यायन-पराशर-पाणिनिप्रभृतिभिः प्रवर्तिताः । काश्चन चिरन्तनैर्याज्ञिकप्रवरैः प्रणीता उपलभ्यन्ते । सर्वलक्षणमञ्जरीकारैर्व्यासशिक्षाव्याख्यातृभिः श्रीराजाघनपाठिभिः स्वव्याख्यायामुल्लिखिताः शिक्षा बह्वयः—

प्रथमा व्यासशिक्षा च लक्ष्मीशिक्षा द्वितीयिका ।
भारद्वाजी तृतीया च शिक्षारण्या तुरीयिका ।।
पञ्चमी शम्भुशिक्षा च षष्ठी चापिशली तथा ।
सप्तमी पाणिनेश्शिक्षा चाष्टमी कौशली तथा ।।
वासिष्ठी नवमी चैवं नव शिक्षाः प्रकीर्तिताः ।
यो जानाति भरद्वाजशिक्षामर्थसमन्विताम् ।।
स ब्रह्मस्थानमाप्नोति गृहमेधी गृहं यथा ।। इति ।

कौण्डिन्यशिक्षापि काचनोपलभ्यते लध्वी । अमीषां शिक्षाग्रन्थानां विलोकनेन ज्ञायते यत्तस्य तस्य वेदस्य बह्वचः शाखा इति । तत्तच्छाखाया अध्ययनावसर एवाचार्याः स्वस्वशिष्येभ्यः शिक्षाग्रन्थविषयान् बोधयन्तो लक्ष्येषु प्रदर्शयन्तश्च वेदेन सह गुरुमुखोच्चारणानूच्चारणविधया शिक्षाग्रन्थानपि ग्राहयामासुः । तेऽपि शिष्याः स्वस्यशिष्यान् । एवं गच्छति बहुतिथे काले शिष्याणां स्मरणशक्तेर्न्यूनतामनुभवन्तस्तात्कालिकसाधनसामग्रीरादाय शिक्षाग्रन्थविषयान् लिपिबद्धानकुर्वन् । एकामेव शाखामाश्रित्य यत्र नानाशिक्षा विरचिता विलोक्यन्ते, तत्रान्येनोत्सृष्टं गुरुपारम्पर्येण प्राप्तमेव विषयमपरो लिखतीति मुद्रितशिक्षासङ्ग्रहादवगच्छामः ।

अत्रैवमनुशीलनम् भवितुमर्हति—रामायणमहाभारताद्यवलम्ब्य संख्यातीतानि काव्यानि नाटकानि च यथा कवयो निबबन्धुः, न तथा शिक्षाकारा ग्रन्थान् प्राणैषुः । यद्येवं तर्हि एकस्याः कस्याश्चन शाखाया अध्ययनेऽध्यापने च वैचित्र्योपलम्भस्य स्यादवसरः । न चैतदस्ति । आ च हिमवतः, आ च कुमारिकायाः समानरूपत्वमेवाध्ययनस्याध्यापनस्य च निर्दिष्टशाखाया अनुभवामः । काव्येषु नाटकेषु

च तत्तत्कवेः प्रतिभावैचित्र्येण कथावस्तुनो विचित्रतामनुभवामः। अत्र च प्रतिभा-वैचित्र्यस्य प्रसङ्ग एव नोदेति। परम्पराप्राप्तस्य परिरक्षणं विहाय नान्यत्किमप्युद्देश्यं शिक्षाग्रन्थानाम्।

वेदानां रक्षणं शब्दतोऽर्थतश्च। शब्दतो रक्षणाय व्याकरणं शिक्षा छन्दश्चेति त्रीण्यङ्गानि, निरुक्तं ज्योतिषं कल्पश्चेति त्रीणि वेदार्थसंरक्षणायेति विभागः प्राचीनैराश्रितः। व्याकरणञ्च शिक्षाया मूलं सदपि लौकिकवैदिकसाधारणम्। शिक्षा तु वेदस्य शब्दराशेः परिरक्षणाय प्रवृत्ता। तत्र देशभेदेन तेषु तेष्वाचारेषु व्यवस्थितेऽपि प्रामाण्यबुद्धिस्तुल्यैवेति यथा होलाकाधिकरणे व्यवस्थापितम्, तथैव शाखाभेदेन शिक्षाग्रन्थेषु भिन्नेष्वपि सर्वत्र प्रामाण्यबुद्धिरविकलैव।

एकां तैत्तिरीयशाखामाश्रित्य शिक्षायास्तत्र कीदृशोपकारजनकतेति दर्शयामः। व्यासशिक्षां तैत्तिरीयशाखिनस्स्वीकुर्वन्ति। यथा शिक्षाग्रन्थस्तथा प्रतिशाखं प्रातिशाख्यमपि पूर्वजैर्विरचितमुपलभ्यते। शिक्षाग्रन्थस्साधारणः, प्रातिशाख्यं त्वसाधारणम्। द्विविधयोरपि ग्रन्थयोर्विषयस्तु समान एव। किन्तु प्रकृतिपाठव्यवस्थायै प्रातिशाख्यम्। संहितापाठः पदपाठः क्रमपाठश्चेति त्रयः प्रकृतिपाठाः, जटाघनादिपाठा विकृतिपाठा इति स्थितः। संहितान्तर्गतानि पदानि विभज्य यदा पाठः क्रियते, तदा स पदपाठ इति, 'अग्ने यं यं यज्ञं यज्ञमध्वरम् अध्वरं विश्वतः' इत्यानुलोम्येन प्रथमं द्वितीयेन. द्वितीयं तृतीयेनेत्येवंविधया पाठः क्रमपाठ इति वैदिकानां मार्गः।

प्रातिशाख्यं त्रिविधमपि प्रकृतिपाठं व्यवस्थापयितुं प्रवृत्तम्। शिक्षा तु विकृतिपाठनियामिका। विकृतिपाठे पदानामानुलोम्येन प्रातिलोम्येन च पाठः कर्तव्यो भवति—'अग्ने यं यमग्न अग्ने यं यं यज्ञं यज्ञं यं यं यज्ञम्, यज्ञमध्वरमध्वरं विश्वतो विश्वतोऽध्वरमध्वरं विश्वतः' इत्येवं पदानामनुलोमविलोमौ भवतः। अत्र विकृतिपाठावसरे पदसन्धिस्वरसन्धिद्वित्वणत्वयत्वादिनियामकतया शिक्षाग्रन्थः प्रवर्तित इत्येकेनापरस्य न गतार्थता भवति। क्रमपाठपर्यन्तं समग्रायाश्शाखाया गुरुमुखोच्चारणानूचारणविधयैवाध्ययनं भवति। विकृतिपाठस्य तु गुरुणा सह शिष्यणां पाठः। तत्र सन्धिणत्वयत्वादिस्थलेषु शिष्याणां स्खलने सति गुरुस्तद्दूरीकरोति। एवं प्रतिपदं प्रतिवर्णं प्रतिस्वरं प्रतिमात्रां च रक्षितुं जागरूका यथा भवेयुरध्यापका अध्येतारश्च, तथा शिक्षा नियमानुपदिशति। अत एवोक्तम्—

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम्॥

ध्वनि स्थानञ्च करणं प्रयत्नः कालता स्वरः।
देवताजातिरेतैश्च वर्णा ज्ञेया विचक्षणैः॥ इति।

तत्र व्यासशिक्षायां षट्षष्टिसंख्याकान् वर्णान् प्रविभज्य तेषु प्लुतवर्णान् विसर्गमोङ्कारं जिह्वामूलीयोपध्मानीयो शुद्धानुस्वारं गकारसंयुक्तानुस्वारं चतस्त्रस्स्वरभक्तीः रङ्गौ चतुरो यमांश्च विहायावशिष्टान् अष्टाचत्वारिंशद्वर्णान् पञ्चसु राशिषु परिगणय्य तत्रैकैकस्य वर्णस्य देवता विहिताः—'अनिलाग्निमहीन्द्वर्काः पञ्चानां त्वर्गदेवताः' इति। वायुदेवताकः – अ आ ए क च ट त प य षाः, अग्निदेवताकाः—इ ई ऐ ख छ ठ थ फ र साः, भूदेवताकाः—उ ऊ ओ ग ज ड द ब ल हाः, चन्द्रदेवताकाः—ऋ ॠ औ घ झ ढ ध भ व लाः, सूर्यदेवताकाः—ऌ ङ ञ ण न म क्ष शाः। तदस्य विधायकं व्याससूत्रम्—'अदादेत्प्रथमयषाः, ऌनासिक्यपक्षशोत्तराः' इति। अत्र प्रथमपादेन प्रथमो राशिः, द्वितीयपादेन पञ्चमो राशिश्च प्रदर्शितः। ऌनासिक्यक्षशा उत्तरा येभ्यस्त इति यच्छब्देन मध्यमास्त्रयो राशयः सिध्यन्ति।

एवम्—

> ब्रह्मजातिर्भवेदुच्चः क्षत्रजातिस्तु नीचकः।
> वैश्यजातिर्भवेत् स्वारः शूद्रस्तु प्रचयः स्मृतः॥

इति व्यासाचार्यः।

उदात्तानुदात्तस्वरितप्रचयानां जातीः प्रदर्श्य सर्वेषां स्वरवर्णानां वर्गप्रथमद्वितीयवर्णानां ब्रह्मजातित्वम्, वर्गतृतीयचतुर्थवर्णानां क्षत्रजातित्वम्, वर्गोत्तमानामन्तस्थानाञ्च वैश्यजातित्वम्, अनुस्वारविसर्गोष्मणामवरजातित्वञ्च व्यवस्थापयति। तत्तद्वर्णानां या या जातिर्निश्चिता, तस्या उच्चारणावसरे यदि व्यतिक्रमो भवेत्, तर्हि तज्जातिसंहारकत्वदोषः, तत्तजातिपरिरक्षणञ्च भवतीति शिक्षाकार उपदिशति—

> यदन्यजातिरुच्येत तत्तत्संहारको भवेत्।
> यज्जात्युच्चारणे तेषां तज्जातिपरिरक्षणम्॥[१] इति।

व्यासशिक्षोक्तनियमानुसारेण 'अग्नि' इति पदस्य संरक्षणं वैदिकाः कथं कुर्वन्तीति प्रदर्शयितुमिच्छामि—

'स्वरपूर्वं इयाद् द्वित्वं व्यञ्जनं व्यञ्जनोत्तरे'[२] इति।

विध्यनुसारेण 'अग्निः' अकारोत्तरगकारस्य द्वित्वे जाते 'अग्ग्निः' इति निष्पद्यते। उत्तमपरादनुत्तमात् स्पर्शाद्यमो भवतीति नियमेन तृतीययमो गकारः। तथा च 'अग्ग्ग्निः' इति निष्पन्नम्। अग्निशब्दस्यान्तोदात्तत्वात् प्रथमोऽनुदात्तः। 'अग्ग्ग्निः' इति स्वरयुक्तं पदं सम्पन्नम्। अस्य व्यासशिक्षोक्तक्रमेणेदं स्वरूपं भवति—शुद्धवर्णक्रमः, स्वरवर्णक्रमः, मात्रावर्णक्रमः, अङ्गवर्णक्रमः, वर्णसारक्रमश्चेति पञ्चसु क्रमेषु पञ्चमप्रकारे प्रदर्शितेऽवशिष्टक्रमाणां स्वरूपं स्वयं ज्ञातं भवतीति पञ्चमक्रम एव प्रदर्श्यते।

संवृतकण्ठोत्थित-संवाराख्यबाह्यप्रयत्नसहित - नादध्वनिजनित-नात्युपसंहृत-हनुस्थान तथाभूतौष्ठकरण-संवृतप्रयत्नैकमात्रिक-अग्निदेवताक-क्षत्रियजातितमोगुण-सहित कनिष्ठिकाङ्गुल्याद्यरेखान्यासयोग्यशरीरह्रासैधित - गलविलविनिस्सृतमृदुध्वनिक-वृषभरुततुल्य-ऋषभस्वरहेतुभूत-हृदयस्थानोत्पन्नह्रस्वानुदात्तस्वरगुणक - वायुदेवताकब्राह्मणजात्यकार-अर्धमात्रिकविराम-संवृत-कण्ठोत्थितसंवारघोषाल्पप्राणाख्य-बाह्यप्रयत्नसहित नादध्वनिजनित-हनुमूलस्थान-जिह्वामूलकरण-स्पृष्टप्रयत्नद्व्यणुमात्रिक-पूर्वाङ्गभूत-भूमिदेवताक- क्षत्रियजातिकगकारद्वित्व-तादृशध्वनिजनित-संवृतनाशिक-हनुमूलस्थान जिह्वामूलकरण -स्पृष्टप्रयत्नाणुमात्रिक-पराङ्गभूततृतीययम-संवृत कण्ठोत्थित-संवारघोषाल्पप्राणाख्य-बाह्यप्रयत्नसहित-नादध्वनिजनित-विवृतनासिकोत्तरदन्तमूलाधोभागस्थान जिह्वाग्रकरण -स्पृष्टप्रयत्नार्धमात्रिक-पराङ्गभूत-सूर्यदेवताक वैश्यजातिकनकार संवृतकण्ठोत्थित-संवाराख्यबाह्यप्रयत्नसहित-नादध्वनिजनित,तालुस्थान-अत्युपसंहृतकल्पौष्ठसहित-जिह्वामध्यकरण-विवृतप्रयत्नैकमामित्रकभूमिदेवताक-ब्राह्मणजाति-सत्त्वगुणसहित-तर्जन्यङ्गुलि- मध्यरेखान्यासयोग्य - शरीरायामश्लक्ष्णीकृतगलबिलविनिसृत-परुषध्वनिक-अजारुततुल्य- गान्धार-स्वरहेतुभूत-मूर्धस्थानोत्पन्नोदात्तस्वरगुणक अग्निदेवताक-ब्राह्मणजातिक-इकाराणुमात्रिकविराम-विवृतकण्ठोत्थित-विवाराघोष-महाप्राणाख्य-बाह्यप्रयत्नविशिष्टश्वासध्वनिजनित- कण्ठोपरिभागस्थान-तदधोभागकरण-विवृतप्रयत्नार्धमात्रिक-पूर्वाङ्गभूत–सूर्यदेवताक-शूद्रजातिक–विसर्जनीयद्विमात्रिक–विरामा इति 'अग्निः।

प्रतिपदमेवं वैदिकानां रक्षणप्रकारः। सर्वस्यास्य नियमा मत्सम्पादितायां व्यासशिक्षायां स्पष्टं निर्दिष्टाः। अधुनापि जीवन्ति कतिपये वैदिका निर्दिष्टक्रमेण वेदसंरक्षकाः। इमे चात्र शिक्षाश्लोकाः––

व्याघ्री यथा हरेत् पुत्रं दंष्ट्राभ्यां न च पीडयेत्।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत्॥

नातिव्यक्तं न चाव्यक्तमेवं वर्णानुदरीयेत्।
पयःपूर्णमिवामत्रं हरन् धीरो यथामति॥

सुव्यक्तस्सुस्वरो धैर्यं तच्चित्तत्वं चतुर्गुणाः।
एतद्युक्तः पठेद् वेदं स वेदफलमश्नुते॥

ध्वनिः स्थानञ्च करणं प्रयत्नः कालता स्वरः।
देवता जातिरेतैश्च वर्णा ज्ञेया विचक्षणैः॥

संहिताञ्च पदञ्चापि क्रमञ्चैव जटां पठन्।
लक्षणज्ञस्तवाप्नोति ब्रह्मज्ञानं हि शाश्वतम्॥ इति।

अत्रायं निष्कर्षः—प्रदर्शितेऽग्निपदे प्रायो वाय्वादयो देवताः, चतस्रश्च जायतो मिलिता इति निर्दिष्टविधयावगतमस्माभिः। विभिन्ना अपीमा जातयो देवताश्च

संहत्यैकमर्थमवबोधयन्तीत्यपि नाप्रत्यक्षम्। वेदगतमेकैकं पदममुमर्थमवबोधयति। सति चैवमस्माकं राष्ट्रस्य मस्तके को वा वज्रपातो जातः ? वज्रपातजनितकष्टमसहमाना राष्ट्रनायका हस्ताबुद्यम्योच्चैराक्रोशन्ति—'यज्जातयस्समुच्छेत्तव्याः, सङ्करविवाहाः कारयितव्याः' इति। तथा नियोक्तुं शक्यते, किन्तु—

आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य॥

इतिदं विचारणीयम्।

शिक्षाकाराणां धर्मग्रन्थप्रणेतॄणाञ्च वचनानुसारेण सर्वा अपि जातयो यथाधिकारं मिलित्वा राष्ट्रसमुन्नतये यतेरन्, तर्हि कोऽयमशनेः पातो भविष्यति। निश्चितमहं ब्रवीमि—यदि नाम भारताद्वेदविद्या यस्मिन्नेव दिने नश्येत् तस्मिन्नेव दिने वज्रपातस्सुनिश्चितः। वेदानोकहस्य मूलमेव छेत्तुं प्रयतितवन्तो लोकायतिकाः, न तेषामुद्यमस्साफल्यमवायत्। अद्य ज्ञाताः केचन यथाजाताः कथयन्ति—यत्तैत्तिरीयशाखा न वेदः, सर्वोऽपि ब्राह्मणभागो न वेदः मन्त्रान् विरच्य केचन संहितायां योजितवन्तः, योजितानाञ्च तेषां विनियोगाय नूतनानि कर्माणि प्रवर्तितानि, प्रथमं सात्त्विकानि कर्माण्यैष्टिकान्येवासन्, अनन्तरं सौमिकान्याडम्बराणि वैदिकैः कल्पितानीति।

तैत्तिरीयशाखाध्यायिनो भारते सर्वत्र व्याप्तास्सन्तीति न मया वक्तव्यम्। ये च स्वशाखाविहितानि स्मार्तानि जातकर्मप्रभृत्यौर्ध्वदेहिकान्तानि कर्माणि, श्रौतानि दर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादीनि च कर्माणि यथावन्निर्वर्तयन्तोऽद्यापि दृश्यन्ते। प्रवरोच्चारणावसरे गोत्रं सूत्रं शाखाश्चाद्युनापि निर्दिशन्ति। तत्र तत्र वङ्गदेशे, असमदेशे चाहमन्वभवं यदात्मनस्तैत्तिरीयशाखावलम्बित्वं व्यवहरतः श्रोत्रियान्। स्वस्वकुलपरम्परागतः खल्वयं व्यवहारः। महाराजदशरथस्य महिष्याः कौशल्यायाः सुमित्रायाश्च पुरोहितस्तैत्तिरीयशाखी आसीदिति महर्षिवाल्मीकिपद्यादवगच्छामः—

कौसल्याञ्च सुमित्राञ्च भक्तः पर्युपतिष्ठति।
आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित्[1]॥ इति।

आदिकाव्यमिदं रामायणम्। तच्च—

वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना[2]॥

इति वचनेन वेदरूपम्। तत्र तैत्तिरीयशाखाया उल्लेखः। तत्रापि तैत्तिरीयाणामाचार्य इत्यभिधानेन पुरोहितस्य तस्याचार्यत्वम्—

१. वाल्मीकीयं रामायणम्। २. तदेव।

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविशेषज्ञो गच्छेदाचार्यसंसदम् ॥

इति शिक्षाशास्त्रोक्तं वाल्मीकिरभिप्रैतीति गम्यते ।

अत्र 'तैत्तिरीयाणाम्' इति बहुवचनान्तं पदं विशेषेण ध्यानमर्हति । अधीततैत्तिरीयशाखानां बहूनामयमाचार्य इत्यवगम्यते । अयमप्याचार्यो गुरुमुखादधीततैत्तिरीयशाख एव स्यात् । एवं रामायणाद् बहोः कालात् पूर्वमेव भारते तैत्तिरीयशाखा प्रचारपथ आसीदिति निस्सङ्कोचं वक्तुं शक्यम् । तैत्तिरीयशाखानुसारेणापस्तम्बाचार्यो बोधायनाचार्यश्चाधानाग्निहोत्रप्रभृतिचयनान्तानां कर्मणां श्रौतसूत्राणि प्रणीतवन्तौ । व्यासाचार्येण च तैत्तिरीयशाखायाः कृते शिक्षाग्रन्थं प्रणीयास्मानन्वग्रहीत् । तदनुसारेण कृताध्ययनाः चयनान्तकर्मानुष्ठातारश्च संख्यातीता भारतेऽवर्तन्त, वर्तन्ते चेदानीमपि ।

अस्यां परिस्थितौ विंशतितमे शतके कश्चन यथाजातः, यश्च प्रथमं पदार्थमाचमनप्यनुष्ठातुं न जानाति, स्वगोत्रं सूत्रञ्च न परिचिनोति, स कथयति निस्सङ्कोचं लिखति च यत्तैत्तिरीयशाखा न वेदः, आपस्तम्बेन मन्त्रान्निर्माय तद्विनियोगाश्च कर्माणि च प्रवर्तितानीति । व्यासशिक्षाया यान्युदाहरणानि प्रत्युदाहरणानि च तानि सर्वाणि तैत्तिरीयशाखामवलम्ब्यैव सन्तीति न तिरोहितं व्यासशिक्षाध्येतॄणाम् । विशेषेणैतस्य प्रलापस्य साधूत्तरं डॉ० मण्डनमिश्रेण मदन्तेवासिना न्यायप्रकाशभूमिकायां दत्तमिति नाहमस्मिन् विषये लेखनीं व्यापारयितुमभिलषामि ।

किञ्च—

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ।
समानो मन्त्रः समितिस्समानी समानं मनः सह चित्तमेषाम्[१] ।

इत्यादिमन्त्रो यमाशयमुपदिशति तमेव शिक्षाग्रन्थोऽप्यवद्योतयतीव ।

शिक्षासु क्वचिदागमः क्वचिद् द्वित्वं क्वचिल्लोपश्च निरूप्यन्ते । 'त्रपु च मे' 'मिथु च मे' इत्यत्र 'त्रपुश्च मे' 'मिथुश्च मे' इति शकारागमः, 'विभु च मे' 'प्रभु च मे' इत्यत्र तद्भावः, 'सुश्चन्द्र दस्म' इत्यत्र शकारागमः, 'प्र चन्द्रमाः' इत्यत्र तदभावः । एवं 'षट् सम्पद्यन्ते' 'विद्वान् सोमेन' 'प्रत्यङ् सोमः' इत्यादौ 'षट्त्सम्पद्यन्ते' 'विद्वान्त्सोमेन' प्रत्यङ्क्सोमः' इत्यागमवर्णा अनेके समुपदिश्यन्ते । 'विश्वारासि' 'प्रावणेभिः' इत्यादौ दीर्घः । 'गर्भो अस्य' 'यमो अस्य' इत्यादौ पूर्वरूपाभावः । 'ऋक्क्च मे' 'दधिक्राव्ण्णः' इत्यादौ द्वित्वम् इत्यादीन्यनेकानि वर्णस्वरूपाणि ज्ञेयत्वेन शिक्षासूपदिश्यन्ते । उदात्तोच्चारणे देहदैर्घ्यम्, अनुदात्तोच्चारणे देहस्य

१. ऋग्वेदः—१० १९१।२–३ ।

सङ्कोचः, उदात्तानुदात्तयोस्समाहारः समावेशः स्वरितस्य, उदात्तश्रुतित्वं स्वरितस्येतीमे स्वरधर्मा अवबोध्यन्ते। उदात्तप्रचययोर्मुखं स्थानम् अनुदात्तस्य हृदयम्, प्रचयस्य च शिर इति स्वराणां स्थानानि। 'प्रजापेतिः' इत्यत्र चत्वारोऽपि स्वरा वर्णाश्च स्वस्वजातिदेवताभिस्सह मिलिता अस्मानुपदिशन्ति, भवन्तोऽप्येवमेव मिलिता राष्ट्रस्य कार्याणि साधयन्त्विति। अनुदात्तस्वरः क्वचन विक्रमसंज्ञां लभते। द्वयोरुदात्तयोर्द्वयोः स्वरितयोः, उदात्तस्वरितयोः, स्वरितोदात्तयोः, प्रचयस्वरितयोर्मध्ये योऽनुदात्तः स विक्रम इत्युच्यते। स्वरितस्वरः–अभिनिहतः क्षैप्रः, प्रश्लष्टो नित्येश्चे ति विभक्तः। एतज्ज्ञानं छात्राध्यापकयोरध्ययनावसर आवश्यकम्। एवम्—

> हस्तेन वेद योऽधीते स्वरवर्णार्थसंयुतम्।
> ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते॥ इति।

फलश्रुत्या सामवेदे यथा हस्तस्वरस्तथा ऋग्यजुर्वेदयोरप्यस्तीति ज्ञायते। वर्णानामुच्चारणे कालनिर्णयोऽपि वर्णितः शिक्षासु। वन्यकाकेनोक्तः काल एकमात्रः, वायसोक्तो द्विमात्रः, मयूरोक्तस्त्रिमात्र इति मात्राकालास्त्रयः। मात्रायाश्चतुर्थो भागोऽणुः, अर्धमात्रस्तु व्यक्तमात्रः कालः। प्रतिवर्णं कालमवगत्य यदुच्चारणेन फलविशेषोऽपि शिक्षायां प्रतिपादितः। वर्णोच्चारणावसरे च न हि उ वा स्म ह ईम् वै नु इत्येतेषां पूर्वपदेन यदि संहिता तर्हि पूर्वतो विश्रामो न कर्तव्य इति नियमः। एवं पूर्वोत्तरवर्णानामङ्गाङ्गिभावोऽपि विशेषेण शिक्षाकारा उपदिशन्ति। अङ्गाङ्गिभावोऽयमस्मभ्यमुपदिशति–यल्लोकेऽपि सम्भूयैकं कार्यं राष्ट्रसमुन्नतिरूपं कर्तुमुद्यता जनाः मिथोऽङ्गाङ्गिभावमापन्नाः कुर्युरिति।

महर्षिर्जैमिनिरौत्पत्तिकसूत्रे 'तस्य ज्ञानमुपदेशः' इति कथयन् उपदेशपदेन विशिष्टमुच्चारणमभिप्रैति। उच्चारणे वैशिष्ट्यञ्च नियतस्वरवर्णक्रमादिनियमाधीनम्। एतादृशमुच्चारणमनुशिष्याणामुच्चारणं यत्तदेव वेदाध्ययनम्। अत एतादृशोच्चारणव्यापारे शिक्षाग्रन्था महान्तमुपकारं जनयन्तो वेदाङ्गत्वेन परिगण्यन्ते।

एवं भगवतश्श्वासकस्य वेदपूरुषस्य संरक्षणाय शिक्षादिरूपेषु दुर्गेषु विद्यमानेष्वपि राजानं ग्रहीतुं चेष्टन्ते सम्प्रत्यपि बहवः। एतेषां यत्नेन न कापि हानिर्भविता श्रुतेर्मातुः। अस्माकं यत्नश्चेच्छिथिलस्तर्हि अध्येतॄणामभावेन नष्टाश्शाखा इवावशिष्टा अपि शाखा विलयं गच्छेयुरिति महती भीतिः। भीतेरस्या अपाकरणाय संस्कृतविश्वविद्यालयेन विशेषेण ध्यानं देयम्। यो व्यतिक्रमस्सम्प्रति वेदाध्ययने परिलक्ष्यते स विश्वविद्यालयेन दूरीकर्तव्यः। तदर्थं योग्या आचार्या नियोक्तव्याः, पूर्वोक्तनियतवेदाध्ययनपरिपाटी परिचालनीया। वेदाध्येतारः छात्रा यथा परीक्षापिशाचिकया ग्रस्ता न भवेयुः, तथाविधो मार्गं आविष्कर्त्तव्यः। अत्र विशेषेण कुलपतिमहोदया दृष्टिं निक्षिपेयुरिति विश्वसिमि।

द्वितीयं प्रवचनम्*

# वेदविषये पाश्चात्त्यकृतविमर्शसमीक्षा

पूज्यतमाः कुलपतयः, सभासदः पण्डितपुङ्गवाः, प्रेयांसश्छात्राश्च ! अद्य वेदविषये पाश्चात्त्यैः कृतं विमर्शमवलम्ब्य तत्समीक्षात्मकं किञ्चिदिव प्रस्तोतुमभिलषामि ।

वेदस्तु न केवलं भारतवर्षस्य, किन्तु विश्वस्य जगतो महानिधिः, निखिलविद्यास्थानानामुद्गमस्थानम्, अक्षय्यसुकृतावाप्तये परमं साधनम्, दुःखत्रयदलनाय महाहेतिः, सांसारिकरोगापनुत्तये निरुपममौषधम्, सामाजिकव्यवस्थाया मार्गदर्शी, सच्चारित्र्यस्य शिक्षायाश्च गुरुरिव ग्राहकः, कुमार्गगामिनां मानवानामुपदेशक इव सन्मार्गप्रवर्तकः, भूवलयस्यायं कल्पतरुः । पवित्रमिमं शब्दराशिं मूलमाश्रित्य प्रवृत्तस्सर्वोऽपि संस्कृतवाङ्मयनिवहः । अनेन समुपदिष्टैव सरणिस्सकलजनहितसाधिका । अस्मा एव स्पृहयन्ति निखिला अपि शिक्षाशास्त्रिणः । खनेर्विविधानि रत्नानीवास्मादेव तत्त्वान्युद्धृतानि रत्नानीवास्मादेव तत्त्वान्युद्धृत्य दार्शनिकाः पौराणिका अन्ये च समाजपरिष्कर्त्तार आपस्तम्बादयः प्रकाशयाञ्चक्रुः । अस्यैव साहाय्येन सर्वं भारतवर्षं सकललोकस्पृहणीयमनितरसाधारणञ्च गौरवमद्याप्याबिभर्ति । अस्मिन्नेवास्माकं भारतमातुश्च प्राणा निहिता वर्तन्ते । नैकरूपाणामपि भारतीयानामेकरूपत्वापादने महासूत्रस्थानीयोऽयं शब्दराशिः । यथा हि वायुना सूत्रेण सर्वाणि भूतान्याबद्धानि सन्ति, तथैवानेनापि वेदात्मना सूत्रेण मिथो विरुद्धान्यपि दर्शनानि पुराणानि साम्प्रदायिकतत्त्वानि च सुदृढमाबद्धानि । एक एवात्मा सर्वभूतात्मा, एक एव देवोऽग्निमित्रवरुणेन्द्रादिनानारूपाणि धत्ते, तथैवायं शब्दराशिर्विविधविद्यास्थानानां रूपाण्याधत्ते । यथा रत्नाकरस्य वीचयो रत्नाकरादनन्यत्वं भजन्ते, तथैवास्मात् समुद्भूतानि शास्त्रजालानि । बहुरूपास्स्यन्दमाना नद्यः समुद्रराजेनैकरूपतामापद्यन्ते, तथैव नानारूपाण्यपि दर्शनानि वेदाख्ये शब्दराशौ निलीयैकरूपतां भजन्ते । एकं सद्वस्तु द्रष्टॄणां कल्पनाभेदेन भिन्नं प्रतिभाति, एकैव माता निरूपकभेदेन भिन्नानि नामानि रूपाणि च परिगृह्णाति, तथैव जननी श्रुतिरपि ।

वेदविषये भारतीयानां संख्यावतां दृष्टिरन्यादृशी, विदेशीयानां तदनुयायिनाञ्च भारतीयानां दृष्टिरन्यादृशी । मिथो विरुद्धे इमे दृष्टी भवतः । एका चाकृत्रिमत्वदृष्टिरपरा च कृत्रिमत्वदृष्टिः । एकत्रानुपहसनीयत्वम्, अपरत्र चोपहसनीय-

त्वम् । क्वचिदर्था अपि शब्दाननुधावन्तीति भारतीया मन्यन्ते, शब्दा एव सर्वत्रार्था-ननुधावन्तीत्यपरे । अलौकिकार्थविदकत्वं वेदस्येति भारतीयाः, लौकिकार्थविदकत्व-मेव वेदस्येत्यन्ये ।

शब्दार्थयोर्नियतो नित्यश्च सम्बन्ध इत्येके, सोऽनियतोऽनित्यश्चेत्यपरे । मन्त्र-द्रष्टृत्वं महर्षिषु पश्यन्ति भारतीयाः, कर्तृत्वञ्च निर्द्धारयन्ति तदितरे । एवं दृष्टि-भेदे च मुख्यं कारणं यद्भारतीयानां स्वीयत्वबुद्धिर्वेदसन्दर्भे, पाश्चात्त्यानां तु परकीय-त्वबुद्धिः । यादृशोऽभिनिवेशः, यादृशी च श्रद्धा भारतीयानां वेदसन्दर्भे, न तादृशोऽभि-निवेशो न च तादृशी श्रद्धा देशान्तरीयाणां भवति । साम्प्रतिकी परिस्थितिस्त्यज्यतां प्राचीनभारते स्वाध्यायाध्ययनं नियतकर्तव्येष्वनन्यतममासीद् द्विजानाम् । स्वाध्या-याध्ययनव्यापारात् प्रच्युतिर्महते दोषाय प्राक् पर्यगण्यत । सहस्रशः शतकानि वत्स-राणां स्वाध्यायाध्ययनतन्तुमविच्छिन्नं परिरक्षन्तः पूर्वजा यापयाम्बभूवुः । नित्यनै-मित्तिककर्मणां यथायथमनुष्ठानम्, मीमांसया वेदवाक्यार्थावधारणं तत्परिशीलन-मित्यादीन्यनेकानि तेषां परिरक्षणसाधनानि । एतेषु यदा किञ्चिच्छैथिल्यमन्वभूयत पूर्वजैः, तदा परम्परासमागतं क्रममवलम्ब्य सूत्रलक्षणग्रन्थाः प्रणीताः ।

कल्पसूत्राणां स्वरवैदिकप्रक्रियाया अन्येषाञ्च लक्षणग्रन्थानां प्रातिशाख्य-प्रभृतीनां विरचनात् पूर्वमपि पूर्वोक्तस्तन्तुरविच्छिन्न एवासीदिति दृढतरैः प्रमाणै-र्निरूपयितुं शक्यते । परम्परया समागतानेव नियमान् सङ्गृहीतवन्तः प्राक्तनाः । प्रतिपद्-अष्टमी-पर्वकालः सङ्क्रान्तिरित्यादीनि दिनानि मन्त्राध्ययनेऽनध्यायाः, किन्तु तेषु कालेषु श्रौतानि स्मार्तानि च कर्माण्यनुतिष्ठन्तो मन्त्राननुच्चारयन्त एवाभवन् । **'स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात्'** इत्यापस्तम्बसूत्रात् पूर्वं ग्रहण-धारणयोरेवाध्ययनयोः प्रतिपदादयोऽनध्यायाः, न तु कर्मानुष्ठान इति नियमं श्रोत्रिया न प्रज्ञातवन्त इति वक्तुं न शक्यम्, किन्तु याज्ञिकानामाचारं यथायथं जानन्नापस्तम्बाचार्यस्सूत्रयतीत्येष्टव्यमेव ।

श्रौतकर्मणामनुष्ठाने सोमपूर्वत्वमिष्टिपूर्वत्वञ्चासीद् याज्ञिकानाम् । तदेव सूत्रयति सूत्रकारः—**'मन्त्रान्तैः कर्मादीन् सन्निपातयेत्'**, **'आधारे धारायाश्चादिसं-योगः, विकल्पो याज्यानुवाक्यासु'** इत्यादयो नियमाः सम्प्रदायतः प्राप्ता एव महर्षि-भिर्लिखिताः । ञित्-नित्-प्रत्ययान्तानां पदानामाद्युदात्तत्वं **'ञ्नित्यादिर्नित्यम्'** इति सूत्रप्रवृत्तेः पूर्वमेव छात्रानध्यापका ग्राहयन्ति स्म । स्थलविशेषेष्वनुस्वारागमः, तस्य च गकारसंयुक्तत्वम्, यथा—'अग्नी ँ रफ्सुषदः' 'प्रत्युष्ट ँ रक्षः', 'स ँ समिद्यु-वसे' इत्यादौ । व्यासशिक्षयामप्युक्तम्—

> रेफाभावात्तु नात्पूर्वं लुप्तान्माच्च तदुत्तरात् ।
> नकाराद्याकृतेर्लुप्तादनुस्वारागमो भवेत् ॥

अनुस्वारो यजुष्येवमध्यायेऽपि यदा भवेत् ।
तदा गकारसंयुक्तो न शान्तिश्शामरूपतः ॥[१]

इति व्यासशिक्षातः पूर्वमेवाध्ययनाध्यापनसम्प्रदाय आसीदित्येव स्वीकर्तव्यम् ।

स्वरप्रक्रिया वैदिकीप्रक्रिया लक्षणग्रन्था वा सम्प्रदायात् प्राप्तानि लक्ष्याण्यवलम्ब्यैव महर्षिभिः प्रवर्तिताः । अन्यथा दक्षिणाचारेण कर्तव्यम्', यज्ञोपवीतिना कर्तव्यम्' इत्यादिस्मृत्युदयात् पूर्वं याज्ञिकाः श्रौतानि स्मार्तानि च कर्माणि वामहस्तेन निवीतिनः प्राचीना वीतिनो वा समाचरन्तोऽभवन्निति शङ्काया अवसरो भवेत् । अत एवमादीनां ग्रन्थानां प्रादुर्भावात् पूर्वमपि सुदृढः कश्चन सम्प्रदाय आसीदित्यनुमानं नासङ्गतम् । न चास्य सम्प्रदायस्य जन्मपत्रिका केनापि कार्तान्तिकेन निर्मातुं शक्या । न चाद्यावधि केनापि निश्चित्येदं निरूपयितुमपार्यत यद् बीजं प्रथमम् उत वृक्ष इति । अनिदम्प्रथमताकात् कालात् प्रवृत्तानां पदार्थानां निश्चये नान्यत् किञ्चित् साधनं भवितुमर्हति ऋतेऽविच्छेदेन परिप्राप्तायाः परम्परायाः ।

किञ्च, वेदाध्ययनकर्तॄणां भारतीयानां वेदग्रन्थपठितॄणामाधुनिकानाञ्च भूयान् प्रभेदः । अध्ययनं पठनञ्च नैकरूपे भवतः । गुरुमुखोच्चारणानूच्चारणव्यापारेऽध्ययनपदप्रयोगः शास्त्रविदां सम्मतः, पठनपदन्तु वर्णवाचनरूपे साधारणव्यापारे प्रयुज्यते । असाधारणाध्ययनव्यापारवद्भिरेव चिरन्तनी सा परम्परा ज्ञायते, न तु केवलं पठितृभिः, नियतस्वरवर्णक्रमविशिष्टाया आनुपूर्व्या अधिगमनेऽध्ययनव्यापारः, तद्रहिताया आनुपूर्व्याः शब्दतोऽर्थतो वाधिगमने पठनव्यापारः । स्वरवैदिकव्याकरणप्रातिशाख्यलक्षणग्रन्था असाधारणेऽध्ययनव्यापार एवोपयुज्यन्ते । अथवा ते ग्रन्था एवाध्ययनस्यासाधारण्यं प्रतिपादयितुं प्रवृत्ताः ।

"ञ्नित्यादिर्नित्यम्'[२] इति सूत्रोक्तो नियमोऽध्ययनव्यापार एव समन्वितो भवति, न केवलं पठनव्यापारे । नियमानां ज्ञानमन्यत् । तेषां प्रयोगात्मना परिपालनमन्यत् । परिपालयितृभिरेव सा परम्परा संरक्ष्यते, न केवलं ज्ञानवद्भिः । विदेशीयास्तदनुयायिनश्च कामं नियमज्ञानवन्तो भवेयुः । सत्यमेव ते सुपरिश्रम्य शाब्दबोधं सम्पादितवन्तः स्युः । स्वीयविमर्शदृष्टचा वेदविषये यत्किमपि लिखितवन्तो भवेयुः, किन्तु वेदवाक्यानामर्थप्रतिपादनाय निर्णयाय वा या सामग्री निगमनिरुक्तव्याकरणमीमांसादिरावश्यिकी, तामनादृत्यैव लेखनीं व्यापारयामासुः । अज एकपाद देवः इत्यस्य एकपादयुक्तो मृगः' ( One footed goat ) इति ग्रिफिथ्महोदयो ब्रूयात् । नूतनस्य पदार्थस्याविष्कारे बोधने वा क्वचित् सत्यमस्ति वैचित्र्यम् । नूनं तत्र प्रतिभायाः कौशलं परिगण्येत किन्तु तदितराविरोधेनैव प्रतिपाद्यमानं वैचित्र्यमावहेत् कौशलं वा प्रकटयेत् । सत्यपि विरोधे तत्परिहाराय भूयांस

---

१. व्यासशिक्षा—२३७ ।  २. अष्टाध्यायी ६।१।१९७ ।

उपायाः समुपदिष्टास्सन्ति शास्त्रेषु। तानादाय तत्र तत्र प्राप्तं विरोधं प्रशमयितुं यतन्ते दार्शनिकाः। नवीनाविष्कारे तु न विरोध परिहारोपायाः, नापि तत्प्रशमने कियानपि यत्नः। प्रत्युत विरोधमेवावलम्ब्य वेदानामितस्ततो नयनं कुर्वन्ति, तेषामुपहसनीयत्वञ्चाविष्कुर्वन्ति नवीनाः। वेदानां सन्निकृष्टकालत्वं कृत्रिमत्वञ्चेति नाद्यतनमिदम्, चिरादेवमादयश्शङ्काः प्रवर्तन्ते स्म, तासां परिहाय भूयसी सामग्री एकत्रीकृता शास्त्रकारैः। तत्र च सुमहत्साफल्यमप्यवाप्नुवंस्ते।

एतेषां विचारधारासु परिशील्यमानासु स्फुटमेवं निर्णेतुं शक्यते—ऋग्यजुस्सामाथर्वभेदेन विभक्तेषु चतुर्षु वेदेषु संहिताभागानां विवरणपराणि ब्राह्मणानि सन्ति नियतानीति प्रतीयते। मन्त्रेष्वधीयमानेषु निरुक्तव्याकरणपरिष्कृतमतीनां नूनमर्थाविरोधो भवेत्। किं तेन जातेनार्थाविबोधेन प्रयोजनमिति जिज्ञासायां न किमपि साधूत्तरं लभ्यते। न खलु पदपदार्थविबोधेन प्रयोजनमिति जिज्ञासायां न किमपि साधूत्तरं लभ्यते। न खलु पदपदार्थविबोधमात्रेण मन्त्राणां प्रयोजनं सिध्यति। न हि मन्त्रभागः कथाया आख्यायिकाया वा बोधनाय प्रवृत्तः, येन कथामाख्यायिकां वावगत्य मनः प्रसीदेत्। निरतिशयेन मननव्यापारेण खलु महर्षिभिः प्राप्ता इमे मन्त्राः। एतेषां दर्शनेन किल ते ऋषयस्समभवन्। अतस्तदनुकूलं किमपि विशिष्टं कार्यं मन्त्राणां वक्तव्यम्। तदपि तैरेवावघृतम्। तद्बोधकमेव भवति ब्राह्मणम्। मन्त्राणां यः क्रमस्तमनुधावन्ति ब्राह्मणानि, अथवा ब्राह्मणेन यः क्रमोऽवलम्बितस्तदनुसारेण मन्त्रा एकीकृता इति सन्देहे मन्त्रा एव प्रथमं रचिता अनन्तरञ्च ब्राह्मणानीति द्राक्प्रब्रूयाद्विदेशीयो विमर्शकः। तस्य च मते सृष्टेरादौ लब्धजन्मानो मानवाः पशुतुल्या आसन्, तृणानि पर्णानि च खादन्तस्तान्येव वसानाः संस्कृत्या सभ्यतया च विहीना अभवन्, क्रमेण विकसिता अभूवन्निति हि सिद्धान्तः।

सृष्टिशब्दः प्रलयशब्दो वा सापेक्ष इति न तस्य बुद्धौ समारोहति। प्रलयगतस्यैव सृष्टिः सृष्टस्यैव च प्रलय इति न स समालोचयति। यदि समालोचयेन्न तर्हि संहिता ब्राह्मणयोः पौर्वापर्यम्। प्रलयकाले येषां प्रलयस्तेषामेव सृष्टिरिति कुतः पौर्वापर्यम्? नेष्यते यदि न तर्हि साधयितुं शक्यंमनयोरादिमत्त्वम्। मन्त्रब्राह्मणपाठयोः प्राबल्यदौर्बल्यविचारावसरे मीमांसका मन्त्रपाठस्यान्तरङ्गत्वं ब्राह्मणपाठस्य च बहिरङ्गत्वं व्यवस्थापयाम्बभूवुः। इमे चान्तरङ्गबहिरङ्गते पाठयोरेव न मन्त्रब्राह्मणयोः। मन्त्रैर्विना ब्राह्मणानां ब्राह्मणैश्च विना मन्त्राणां स्वरूपलाभो दुष्करः। भागद्वयमपि बध्नन्त्येकेन सूत्रेण श्रौतस्मार्तकर्माणि। तेषाञ्चानुष्ठानाय मानवाः। मानवानां कर्मणाञ्च यथाधिकारं नियतस्सम्बन्धः। तानि कर्माणि भवन्तु कायिकानि, मानसिकानि वाचिकानि वा। सर्वविधैरपि तैर्मानवानां नियतस्सम्बन्धः।

आत्मचिन्तनं क्रियताम्, देवा वा यागादिभिराराध्यन्ताम्, जप्यन्तां वा मन्त्राः, सर्वत्र तेषां प्रयोगावगमो ब्राह्मणाधीनः। प्रयोगश्च मानवाधीनो मन्त्र-साध्यश्चेत्ययं याज्ञिकमीमांसकानां राजमार्गः। अनादी यथा सृष्टिप्रलयौ, तथैव मन्त्र-ब्राह्मण-कर्म-मानवानां मिथस्सम्बन्धोऽप्यनादिः। क्वचित् काचिन्मानवाः कर्मरहिता अभवन्, कर्माणि मन्त्रविहीनान्यासन् मन्त्राश्च ब्राह्मणसम्बद्धा नाभूवन्निति साधनं दुष्करम्।

विदेशीयास्तु विमर्शका नेमां परम्परामङ्गीकुर्वन्ति, नाप्यत्र विश्वसन्ति, न चाप्येतादृशेष्वलौकिकफलजनकेषु कर्मसु श्रद्दधते। तेषां मन्त्रेषु पदपदार्थसम्बन्ध-जनितार्थावगतिमात्र एव मनः प्रसरति। तद्बलेन ते यत्किमपि वदेयुः। भारतीया-श्चिरन्तनाः पुनः कञ्चन मनोहरमविच्छिन्नसम्प्रदायमवलम्बमानाः संहितागतान् मन्त्रान् ब्राह्मणविहितकर्मसु विनियोजयन्तस्तानि कर्माणि यथावदैहिकम् आमुष्मि-कम्, ऐहिकसंवलितामुष्मिकञ्च फलमवाप्तुमन्वतिष्ठन्।

सांसारिकावस्थायां मानवैर्यावन्ति फलानि कामयितुं शक्यन्ते व्यष्टया समष्टया वा यथा—धनं तेजः श्रुताध्ययनसम्पत्तिः, पुत्रपौत्रभृत्यसम्पत्तिः, आयुरा-रोग्यम्, जनतासङ्ग्रहः, विविधानां दुस्साध्यानाम् असाध्यानाञ्च रोगाणां निवृत्तिः, वृष्टिः, क्षेमसुभिक्षता, ईतिबाधादिनिवृत्तिः, सामूहिकरोगनिवृत्तिः, जनताया एकते-त्यादीनि समेषामेषां साधनाय कर्माण्युपदिष्टानि सन्ति वेदेषु। अधुनाऽमीषां साध-नाय यावन्तो लौकिका उपाया विज्ञानेनाविष्कृता अवलम्ब्यन्ते, तथैव चिरन्तने कालेऽलौकिकानि कर्माणीमान्यवलम्बितानि पूर्वजैरित्यत्र सन्ति बहून्युदाहरणानि—

रमयति मरुतः श्येनमायिनं मनोजवसं वृषण ँ सुवृत्तम्।
येन शर्ध उग्रमवसृष्टमेति तदश्विना परिधत्त ँ स्वस्ति॥

इति कश्चन मन्त्रो मरुतो देवतास्सम्बोध्य प्रवृत्तः। हे मरुतः! यूयमतिवेगेन समा-यान्तं पुरोवातं तथा क्रीडयत, यथा पश्चाद्वातस्य निरोधस्स्यात्, येन मेघेभ्यः तीव्र-धारारूपेण पतज्जलं ग्रीष्मेणातिसन्तप्तामिमां पृथिवीं प्राप्नुयात्। तदिदं जलं हे अश्विनौ पृथिव्याः क्षेमकरं यथा स्यात्तथा परितो धारयतमिति तस्यार्थः।

अस्यार्थस्य ज्ञानेन किमस्माकं प्रयोजनं निर्गलति? पश्चाद्वातो ग्रीष्मवर्धको वृष्टिप्रतिबन्धकश्च, पुरोवातश्च ग्रीष्मशामको वृष्टिप्रदश्चेति किं वयं न जानीमः? ग्रामवासिनस्सर्वेऽपि प्रवयसः पुरुषाः वृद्धाश्च स्त्रिय इमं विषयं परिचिन्वन्त्येव। तस्यास्य किं प्रयोजनमिति प्रश्ने पाश्चात्यो विमर्शको ब्रूयान्निष्प्रयोजनमेवेति। भारतीयास्तु—'मरुतः' इति पदेन त्वगिन्द्रियवेद्यं वायुमेव केवलं न मन्यन्ते, किन्तु तदधिष्ठात्र्या देवताया बुद्धिस्तेषां मरुच्छब्देन भवति। देवतायाश्च कर्मभिस्सम्बन्धो नियत इति प्रागवोचम्। तदिदं द्रढयति ब्राह्मणभागः—'रमयत मरुतः श्येनमायिन-

मिति पश्चाद्वातं प्रतिर्मावति पुरोवातमेव जनयति' इति स्तुवन् कारीरेष्ट्यां मन्त्रं विनियुञ्जानः । तथैव—

> नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
> भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥[१]

इति मन्त्रश्चन्द्राभेदेनादित्यं प्रतिपादयन् किं रूपकालङ्कारं शिक्षयति ? अथवा किं रूपकालङ्कारस्यायं मन्त्रो मूलमिति स्वीकारमात्रेण मन्त्रस्य प्रयोजनवत्ता प्रसिध्यति ? अनेन प्रसाधनेन किं विशिष्टं प्रयोजनं साधितं स्यात् ? इत्यजानानेभ्योऽस्मभ्यं ब्राह्मणभागः—'यः पाययक्ष्मगृहीतस्स्यात्तस्मा एतमादित्यं चरुं निर्वपेत्' इति राजयक्ष्मरोगेण पीडितं तस्मादुन्मोचयितुमिष्टिं विधाय तत्रास्य मन्त्रस्योपयोग इत्युपदिशति । एवमादयस्सहस्रशो मन्त्रा ब्राह्मणेन तत्र तत्र क्रतुषु यथायथं विनियुक्ता दृश्यन्ते ।

अत्रैवं निश्चेतुं शक्यम्—संहितागता मन्त्राः प्रयोजनविशेषमलभमानाः कर्मविशेषमाकांक्षन्ते, कर्माणि च ब्राह्मणविहितानि कैर्मन्त्रैः कर्तव्यानीत्यपेक्षन्ते । तत्रैकोऽपरस्य न्यूनतां पूरयन् द्वावपि मिलितौ कृतार्थौ भवत इति । यद्यत्र पौर्वापर्यक्रम आश्रीयेत, तर्हि य एव प्रथममुत्पन्नो विरचितो वा स चिरकालमाकांक्षावानेव तिष्ठेत् । तावत्पर्यन्तमुत्पन्नं भागमवाप्यापि जनाः किं कुर्युः ? विना मन्त्रैः कर्मानुष्ठानमसम्भवम्, विना च कर्मभिर्मन्त्राणां नोपयोग इति ते तूष्णीमासन्निति कल्पनीयम् । तदिदं न युक्तियुक्तमिति प्रतिभाति । भारते प्रचलितायाः कर्मानुष्ठानपरम्परायाः देशं कालञ्च न वयं निर्णेतुं शक्नुमः । मनसापि चिन्तयितुमशक्यः खलु कालो व्यतीतोऽस्याः परम्परायाः । अनुमानमप्यत्र कुण्ठितमेव भवति । अत एव पाश्चात्त्यविमर्शकेषु 'मैक्समूलरः' महोदयो वैदिकमतविकासावरोधार्थमेव प्रवृत्ताद् बौद्धमतात् पूर्वमेव ख्रिस्तोः पूर्वं पञ्चमशतके सर्वं वैदिकसाहित्यं संहिताब्राह्मणोपनिषदारण्यकादिकमासीत् । तत्रापि ख्रिस्तोः द्विशताधिकसहास्राद् वत्सरेभ्यः सहस्रवत्सरपर्यन्तं वैदिकमन्त्राणामृचां प्रारम्भिकः कालोऽभ्युपगन्तुं शक्यत इत्यभिप्रैति ।

एवमेव पाश्चात्त्यपण्डितः 'विन्टर्नित्ज' महोदयः, 'मैक्समूलर'महोदयसम्भावनास्पदेषु वत्सरेषु सङ्कोचं विकासञ्च कुर्वन् वैदिकसाहित्यस्य यदि काचिन्निश्चिता तिथिरुन्नीयेत, तर्हि ख्रिस्तोः पञ्चशतवत्सरेभ्यः पूर्वमित्येव वक्तुं शक्यत इति निरूपयति ।

एवमेव 'मूर'महोदयः ( Oriental Sanskrit Text ) इति स्वीये ग्रन्थे कांश्चन मन्त्रान् परिगणय्य तत्र 'कृञ्' तक्ष' प्रभृतीनां धातूनां प्रयोगबलात् मन्त्रेषु

---

१. ऋग्वेदः—१०।८५।१९ ।

चर्षीणां विश्वामित्रजमदग्निप्रभृतीनां नामोपलम्भाच्च वेदानां नित्यत्वं कथमित्याक्षिपति।

तथैव 'मेक्डोनल्'महाशयो वैदिकलौकिकसंस्कृतभाषाभेदमवधारयन् ऋग्वेदस्य दशमं मण्डलमत्यर्वाचीनमित्यादिकं स्वीये संस्कृतेतिहासग्रन्थे लिखति।

एवं लिखतामेषामिदं कारणं भवितुमर्हति यद्वेदं पुस्तकाकारमिमे मन्यन्ते, न श्रुतिरूपम्, नापि ग्रन्थाकारम्। अत एव ते प्रथमं पुस्तकं द्वितीयं पुस्तकमिति ऋग्वेदगतमण्डलानि निर्दिशन्ति। मण्डलमष्टकं वर्गश्चेति न पुस्तकं भवति। प्रथमं श्रुत्येकगोचरा ये शब्दराशयोऽभवन् श्रुतिशब्दवाच्याः कालान्तरे ग्रथितास्सन्तो ग्रन्थशब्देनाभ्यधीयन्त। ततो लिपिनिबद्धाः सम्प्रति च ते मुद्रिताः पुस्तकशब्दवाच्याः अभूवन्। अस्माकं चिरन्तनीयं परम्परा यच्छ्रुत्यैव बहुकालं गृहीताः श्रुतीः कालान्तरे विभज्य यथायथं प्रवर्तितवान् भगवान् व्यासः। अत एव स लोकैर्वेदव्यास इति प्रसिद्धिमलभत। अनन्तरं केचन काण्डादिना विभज्याध्यापयाम्बभूवुः। अत एव ते काण्डर्षय इत्युच्यन्ते सम्प्रत्यपि।

यथा सूक्तानां मन्त्राणाञ्च द्रष्टारो नियमेन स्मर्यन्ते, तथैव काण्डर्षयोऽपि। इयमस्मत्परम्परा। विदेशीयास्त्वस्यां परम्परायां नान्तर्भूताः; तथापि ते निस्सङ्कोचं ब्रुवते—भारते देशान्तरेभ्यस्समागता आर्या इति। तद्वयं सर्वात्मना न केवलं विश्वसिमः, तथैव चास्मदपत्यानि ग्राहयामः। महतो दुःखस्यायं विषयो यदा वयं पारतन्त्र्यनिगडनिबद्धा आस्म, तदा केनापि कारणेन विदेशीयैः प्रवर्तितां शिक्षापद्धतिमस्मदपत्यानि ग्राहयितुं निर्बन्धमन्वभवाम। इदानीं स्वातन्त्र्यमवाप्य बहुषु हायनेषु व्यतीतेष्वपि वास्तविकशिक्षापद्धतिं प्रवर्तयितुमक्षमाः स्मः।

किञ्चिदिवास्माभिः प्रक्कालेऽवस्थितं वृत्तं सिंहावलोकनन्यायेन संवीक्षणीयम्—मीमांसासूत्रकारस्य जैमिनेः काले कल्पानां सूत्राणां षडङ्गानां मन्वादिस्मृतीनामपि मन्त्रब्राह्मणयोरिव वेदत्वं लोकैस्साध्यते स्म। एवं साधने तेषामियं युक्तिरासीद् यदिमे पूर्वोक्ताः सन्दर्भा अपि तदानीन्तने समये श्रुतिग्राह्या वाचोविधेयाश्चाभवन्। यथा वेदा नियमेन श्रवणेन्द्रियग्राह्यास्सन्तः श्रुतिशब्दवाच्यास्तथैवैतेषामपि तद्ग्राह्यत्वेन कथं तच्छब्दव्यवहारो न भवत्विति। तत्र परीक्षको महर्षिजैमिनिः सयुक्तिनिर्देशं व्यवस्थापयामास यत्कल्पसूत्रादीनां प्रामाण्ये न काचन विप्रतिपत्तिः, किन्तु वेदमूलत्वेनैव तदङ्गीकर्तव्यम्, न वेदत्वेन, तत्तत्पुरुषकर्तृकत्वेन स्मर्यमाणत्वादिति। एवमेव शिष्टाकोपाधिकरणसम्बन्धिषु वर्णकेष्वेकस्मिन् शाक्यादिग्रन्थानामुच्छिन्नशाखामूलकत्वमाशङ्क्य परिहृतम्। एतेनेदं विज्ञायते यत् प्राचीनभारते वेदत्वेन वेदमूलकत्वेन तस्य तस्य प्रामाण्यसाधने प्रवृत्तिमतां लोकानां हृदयेषु वेदविषये कीदृशः श्रद्धातिशयोऽवर्तत इति।

इदानीन्तनभारतीयेषु समाजिनः स्वाभिलषितशब्दसन्दर्भेष्वेव वेदत्वं चिरन्तनात् कालादविच्छिन्नपारम्पर्येण परिप्राप्तेष्वपि वेदत्वं खण्डयितुं प्रवृत्ता विलोक्यन्ते।

इदन्तु स्वीकर्तव्यमेव भवति यद् बह्वृचो वेदशाखा अध्ययनाध्यापनपरम्परालोपेन जैमिनेः काल एवोच्छिन्ना इति। अत एव शाक्यादिग्रन्थानामुच्छिन्नशाखामूलकत्वशङ्काया उदयस्सङ्गतो भवति। एवं मीमांसकैरुन्नीते पथिसत्यपिपुस्तकयुगान्तर्गता विमर्शका मण्डलेषु काण्डेषु च पुस्तकत्वभ्रान्त्या वदन्ति यद् ऋग्वेदस्य प्रथमं दशमञ्च पुस्तकमर्वाचीनम्, इतराणि च पुस्तकानि प्राचीनानीति। अत्र च ते भाषाभेदमाकलयन्ति। अस्मात्तं तु संस्कृतमेकैव भाषा। लौकिकं वैदिकञ्च संस्कृतमनन्यमेव। लोकवेदाधिकरणन्यायेन जैमिनिः—य एव लौकिकाश्शब्दास्तदर्थाश्च त एव वेदेऽपीत्यभ्युपगच्छति। कतिपये शब्दाः पुनर्नूनं वेदेषु लौकिकशब्देभ्यो भिन्ना इवावभान्ति, तावता नानयोर्भेद आपादयितुं शक्यते।

लोके गृहीतपदपदार्थसङ्गतिक एव वेदे पदानां सङ्गतिं गृह्णाति। वैदिकपदानां सङ्गतिगहणाय नान्यः कश्चनोपायो दृश्यते। यत्र च शब्दभेद उपलक्ष्यते तत्र पृथगनुशासनानि विद्यन्ते। लोकेऽग्निशब्दस्य दहनमेकमेव प्रवृत्तिनिमित्तम्. तदादाय वेदे तस्यार्थावबोधकत्वे सत्यपि मन्त्रार्थानुसन्धानबलेनान्यान्यपि प्रवृत्तिनिमित्तानि स्युः। यथा—एत्य दग्ध्वा नयति, अग्रे पुरस्तान्नीयतेप्रणीयते, अग्रं नयति अग्निर्देवः, अग्निः पुरोहितः, अग्निर्देवानामाह्वाता इति। नैतावता वैदिकाग्निशब्दो लौकिकाग्निशब्दाद् भेदमावहेत्। क्वचिदिन्द्रशब्दस्याग्निरर्थः, पावकोऽग्निः, पवमानोऽग्निः, शुचिरग्निरित्येवं विभिन्नार्थबोधकोऽग्निशब्दो दृश्यते। एवं प्रयुज्यमानस्यास्य नियामकं शास्त्रं प्रमाणीक्रियते पूर्वजैः। विना प्रमाणेन क्वाप्यर्थभेदो नेष्यते। प्रस्तरशब्दो वेदे दर्भमुष्टिविशेषे वर्तते, लोके तु शिलायाम्, पीलुशब्दवाच्यो वृक्षो वेदे, लोके तु गजः, यूपशब्दो दृष्टादृष्टसंस्कारवाची वेदे, लोके तु केवलं काष्ठविशेषे, आचार्यशब्दोऽलौकिकार्थविदको वेदे लोके तु भृतकाध्यापकवाची।

एवं भेदे सन्ति मीमांसान्यायाः प्रमाणम्। अनेन भाषाभेद उन्नेतुं न शक्यते। भाषा तूभयत्र संस्कृतमेव। प्रयोगभेदमात्रेण भाषाभेदो न सिध्यति। प्रान्तभेदेन हिन्दीशब्दा भिन्नाः सन्तीति न हिन्दीभाषाभिन्ना परिगण्यते। अतो वैदिकलौकिकशब्दा अनन्या एवेति लोकवेदाधिकरणन्यायः।

किञ्च. भाषागतं सारल्यं काठिन्यं वा न भाषाभेदप्रयोजकं भवितुमर्हति। आभ्यां कामं शैलीभेदस्स्यात्, न भाषाभेदः। एक एव लेखकः क्वचित् कठिनान् शब्दान् प्रयुङ्क्ते, क्वचिच्च सरलान्। दीर्घसमासयङ्लुङन्तशब्दघटितानि वाक्यानि ग्रन्थस्य काठिन्यमावहेयुः, तदघटितानि च सारल्यम्। एकस्मिन्नेव ग्रन्थे रसानुसारेण प्रकरणानुरोधेन वा सरलकठिनशब्दाः प्रयुक्ता भवेयुः। तावता न तत्र पौर्वापर्यं

प्राचीनार्वाचीनत्वरूपं साधयितुं शक्यम्। पाश्चात्त्यविमर्शकैरतिप्राचीनत्वेन स्वीकृत एव वेदभागे शैलीद्वयमनुभवामः—'अग्निर्होता नो अध्वरे', 'हृ सश्शुचिषद्वसुरन्तरीक्षसद्'इति। एवमर्वाचीनत्वेन परिगण्यमाने वेदभागे 'यो वश्शिवतमो रसः', 'सृण्येव जर्भरी तुर्फरीतू' इत्यत्रोभयमप्यनुभवामः।

एवञ्च भाषागतसारल्यकाठिन्ये समादाय भाषाभेदप्रतिपादनं युक्तिसङ्गतं न प्रतिभाति। किञ्च, विमर्शकानां कथनानुसारेण ऋग्वेदीयं दशमं मण्डलमर्वाचीनमिति स्वीकारे एकस्मिन्नेव क्रतौ द्वितीयतृतीयादिमण्डलसूक्तानां दशममण्डलसूक्तानामपि ब्राह्मणभागेन विनियोगः कृतो दृश्यते। तत्र वक्तव्यं भवेत्— यद् दशममण्डलविरचनानन्तरमेव ब्राह्मणाविर्भाव इति। तदत्र ब्राह्मणसंहितयोः पौर्वापर्यं न भवितुमर्हतीति पूर्वमवोचाम।

निरर्थकाश्शब्दा वेदेषु वर्तन्त इति कश्चिद्विमर्शकः परिगणयति। नायं स्थाणोरपराधो यदेनमन्धो न पश्यति' इति न्यायेन न वेदगतस्य शब्दस्यायं दोषः। एतादृशेषु स्थलेषु शब्दानामर्थनिर्णयाय तत्सिद्धिपेटिका मीमांसकैस्समुद्घाटिता वर्तते। निगमनिरुक्तव्याकरणादयस्तु सन्त्येव। एतेषु साधनेषु सत्सु कथं निरर्थकत्वं शब्दानाम् ? शब्दानां क्वचिन्मुख्योऽर्थो भवति, क्वचिच्च गौणः। अयञ्च शब्दानां धर्मः। स च लोके यथा, तथा वेदेऽपि। केचन शब्दास्तथा वर्तन्ते यांश्चार्था एवानुधावन्ति। लौकिकोऽर्थो न प्रसिध्यतीति न वैदिकाश्शब्दा निरर्थका इति साधनमनुचितम्। क्वचिच्च शब्दानुपूर्व्येव शब्दार्थ इति स्वीकर्तव्यं भवति। पङ्कजाक्षीति लोके तिन्त्रिणीदलाक्षीमपि नारीं बोधयत्येव। गङ्गाधर इति तस्यापि नाम यश्च पिपासवे जनाय जलस्य बिन्दुमपि न ददाति। अत्रानुपूर्व्येव खलु शब्दार्थः। अत एव 'हुँ फट्' 'अस्त्राय फट्' इत्यादिषु मन्त्रेष्वानुपूर्व्येवार्थः।

किं बहुना, प्रसिद्धार्थकेष्वपि स्थलेषु क्वचिदानुपूर्व्येवार्थस्स्वीक्रियते वेदेषु। यस्मिन् कर्मण्यग्निर्देवता तत्र त्यागावसरे 'अग्नये' इत्यानुपूर्व्येव स्वीक्रियते, न तु जातवेदसे, वह्नये इत्यादि। अग्निवह्निजातवेदश्शब्दाः पर्यायवाचिनः, तथापि आनुपूर्वीनियम आद्रियते मीमांसकैर्याज्ञिकैश्च।

वेदशब्देषु केषाञ्चनाश्लीलार्थकत्वं वर्णयन् विमर्शको वेदेऽनादरतामाविष्करोति। अश्लीलत्वं हि न शब्दस्य नियतो धर्मः। वक्तृबोद्धव्यभेदेनैव शब्दस्याश्लीलार्थकत्वं परिगणनीयम्। 'इयं कनकलता पुष्पिता शोभते' इति परिणतवयोभिरुच्चरिते वाक्ये नाश्लीलता, तस्मिन्नेव स्त्रीलोलुपेन यूना समुच्चारितेऽश्लीलता। वल्मीकजन्ममुनिः स्वीये रामायणे वरारोहे' पदमसकृत्प्रयुङ्क्ते। तदपि सीतां सम्बोध्य। प्रतिपत्तृषु केचन रूढमर्थं प्रतिपद्यन्ते, अपरे च व्युत्पत्तिलभ्यमर्थम्। व्युत्पत्तिलभ्येऽर्थे केचन तुष्यन्ति, अपरे च तटस्था भवन्ति। तावता किं रामायणस्य

वाल्मीकेर्वा हेयत्वमनादरता वा सिध्यति ? रामायणं वाचयन्तो वयं सीता सम्बोध्य रावणमुखान्निस्सृतमिमं शब्दं शृणुमो हनुमन्मुखादपि । उभयत्र किं भावभेदं न गृह्णीमः ?

वामदेव्यपदनिर्वचनावसरे **'आपो वा ऋत्वियमार्च्छन् तासां वायुः पृष्ठे व्यवर्तत, ततो वामं वसु समभवत् तन्मित्रावरुणावपश्यताम्, तावब्रूतां वामं वा देवेभ्योऽजनि'** इति वेदवाक्यं प्रवृत्तम् । रजोधर्मं प्राप्ताभिरद्भिः वायोस्सङ्गमे सति श्रेष्ठं वसु सञ्जातम् । तच्च देवसम्बन्धि, तेनेदं वामदेव्यं साम इति तदर्थः । अत्र रजोधर्माद्यर्थप्रतिपादनेनाश्लीलत्वं वर्णयति विमर्शकः । अश्लीलदोषत्वं व्रीडा-जुगुप्सा-मङ्गलव्यञ्जकत्वेनालङ्कारिका आस्थिषत । तदत्र ब्राह्मणवाक्ये पूर्वोक्तान्यतमव्यञ्जकत्वं दुरुपपादम् । अपां रजोधर्मप्राप्तिः, वायोश्च तत्सङ्गमः, वामस्य धनस्य समुत्पत्तिः, तस्य च देवसम्बन्धित्वमित्यस्मिन्नर्थे न तात्पर्यम्, किन्तु 'वामदेव्यम्' इति शब्दनिर्वचनायैवेदं ब्राह्मणं प्रवृत्तम् । निर्वचनसिद्धस्य शब्दस्य सामविशेषोऽर्थः । साम्नोऽस्य गानावसरे श्रोतार उद्गातारो वा किं जिह्रियति ? किं वा जुगुप्सन्ते ? अथवा अमङ्गलमवबुध्यन्ते ? एवं सत्यत्राश्लीलस्य क्वावसरः ?

कश्चन विमर्शकाग्रणीः पाश्चात्यस्तदनुयायी भारतीयश्च **'एको ममैका तस्य, द्वौ मम द्वे तस्य, त्रयो मम तिस्रस्तस्य, चत्वारो मम चतस्रस्तस्य, पञ्च मम न तस्य किञ्चन, योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः'** इति प्रयाजानुमन्त्रणमन्त्रमुदाहृत्य स्वप्रतिभाप्रकर्षमवद्योतयति यत् प्राञ्चो भारतीयाः स्त्रीणां विषये कियदपकृष्टबुद्धय आसन्, ऋत्वनुष्ठाता कामयते यन्ममैकः पुत्रो भवतु तस्य चैका कन्या, मम द्वौ पुत्रौ भवताम्, तस्य च द्वे कन्ये, एवं त्रयो मम भवन्तु, तस्य तिस्रः, चत्वारो मम चतस्रस्तस्य, पञ्च मम, न तस्य किञ्चन इति वदन् कियदन्याय्यमाचरति स्त्रीणां विषय इति । सत्यमेवायं सम्भ्रान्तो यथाजातो विमर्शकः । पूर्वापरसन्दर्भानवलोकनजनितोऽयं सम्भ्रमस्तपस्विनः । असुरैस्सह शस्त्रैरस्त्रैश्च योद्धुं नेच्छन्तो देवा वाग्युद्धाय प्रवृत्ताः प्रथमम् 'एको मम' इत्यब्रुवन्, असुराश्चैकेति । एवं चतुस्सङ्ख्यापर्यन्तमवसितम् । **'पञ्च मम'** इति देवा अब्रुवन्, असुराश्च तदूर्ध्वं वक्तुमसमर्थाः खमपश्यन् । देवाश्च **'न तस्य किञ्चन'** इति वदन्तोऽसुरान् निगृहीतवन्त इति सन्दर्भः । पञ्चादिशब्दानां लिङ्गद्वयेऽपि समानमिति प्रसिद्धम् । एवं वाग्युद्धेनासुराणां निग्रहः । किं शब्दगतलिङ्गमवगत्य भारतीयानां प्राचां स्त्रीष्वपकृष्टत्वबुद्धिरित्यारोप्यते विमर्शकमहोदयेन ? उत प्रकारान्तरमाश्रित्य ? खेदस्यायं विषयो यदेकेन पाश्चात्येनेदमुक्तमिति तत्पुच्छावलम्बिनो भारतीया अपि सभासु विषयमेनं विशदीकृत्य सभासदो हासयन्ति, पुस्तकेषु च लिखन्ति । शृङ्गे ग्रहीतव्ये पुच्छग्रहणं कुर्वन्त इमेऽतिशोचनीयां दशामापन्नाः ।

किञ्च संवादरूपेषु मन्त्रेषु वैषयिकानर्थानुपलभ्य तत्रादरतां प्रकटयन् कश्चन विमर्शकः ऋक्संहितायाः प्रथममण्डलस्यैकोनाशीत्युत्तरशततमं सूक्तं षड्चमुदाहरति। संहितागतानां मन्त्राणाञ्चानुक्रमणिकाकार ऋषिं छन्दो देवतां विनियोगञ्च यथायथं निर्दिशति। इदं प्रमाणमवलम्ब्य मन्त्रार्थविवरणं क्रियते। मन्त्रार्थे प्रतीते तस्य तात्पर्यनिश्चयाय मीमांसान्याया आश्रीयन्ते। निगमनिरुक्तव्याकरणानि पदपदार्थनिर्णये साहाय्यमाचरन्ति। इमास्सामग्रीरादायैव भाष्यकारस्सायणो भाष्यं विरचयामास। तत्र प्रधानसामग्री अनुक्रमणिका। निगमनिरुक्तव्याकरणैः पदार्थे ज्ञातेऽपि प्रकृतसङ्गतिर्विनियोगश्चानुक्रमणिकयैव बोद्धव्यौ भवतः। विनियोगश्च मन्त्राणां तृचानां सूक्तानां वा श्रौतकर्मसु क्रियते। येषाञ्च मन्त्रतृचसूक्तानां श्रौतकर्मसु न विनियोगस्तेषां लैङ्गिको विनियोग इति सम्प्रदायः। तत्तन्मन्त्रगतसामर्थ्यमवबुध्य तस्मिन्नर्थे तद्विनियोगो लैङ्गिकविनियोगः कथ्यत इति स्थितिः।

तत्र 'पूर्वीः षट् जायापत्योः लोपामुद्राया अगस्त्यस्य च द्व्यृचाभ्यां रत्यर्थं संवादं श्रुत्वाऽन्ते वासी ब्रह्मचारी अन्त्ये बृहत्यादी अपश्यत्' इत्यनुक्रमणिका वर्तते। 'पूर्वीः' इति सूक्ते षड्चस्सन्ति। तत्र प्रथमद्वचृचस्य लोपामुद्रा ऋषिः, द्वितीयद्वचृचस्यागस्त्य ऋषिः, तृतीयद्वचृचस्यागस्त्यशिष्य ऋषिः। तृतीयद्वचृचस्य प्रथमा बृहतीच्छन्दस्का, शिष्टा ऋचः त्रिष्टुभः। दम्पत्योः संवादश्रवणजनितमागः क्षपयितुं शिष्योऽपश्यदन्तिमं द्वचृचम् इत्यनुक्तमणिकाया अर्थः। (अत्र प्रथममन्त्रचतुष्टयेन योऽर्थो बुध्यते तत्राश्लीलं दोषमुद्भावयति विमर्शकः।)

अत्रायं विवेकः—अस्य सूक्तस्य श्रौते कर्मणि विनियोगोऽनुक्रमणिकायां न दृश्यते। तेन लैङ्गिकविनियोग आश्रयणीयः। यदि कदाचिल्लोके दम्पत्योः रहस्सम्भाषणं श्रुतिपथमागच्छेत्, तर्हि तद्दोषनिर्हरणाय मन्त्रोऽयं जप्तव्य इति तात्पर्यं कल्पनीयम्। अगस्त्यलोपामुद्रे एवंप्रकारेण भाषणमकुरुतामित्यत्र न तात्पर्यम्। शिष्यश्रुतसंवादानुपूर्वीद्रष्टृत्वमेवानयोः। नात्र लोपामुद्रा मन्त्रोक्तप्रकारेण चकमे, न चाप्यगस्त्यस्तस्याः प्रार्थनां समर्थयामास। गणिताध्यापकस्य शब्दा अर्थाननुसृत्य न गच्छन्ति, किन्तु गणितस्योत्तरसम्पादनाय शिष्यस्तेषां शब्दानामर्थं कल्पयति। तत्र यथा शब्दानेवार्था अनुधावन्ति, तादृगेवेदम्।

किञ्चाष्टममण्डलस्य प्रथमसूक्तगतं चतुस्त्रिंशं मन्त्रमुदाहृत्य तस्याश्लीलार्थकत्वमाकलयन्ति विमर्शकाः। इन्द्रदेवताकस्यास्य सूक्तस्यैकोनत्रिंशत्संख्याकानामृचां गवामयनान्तर्गतमहाव्रते कर्मणि निष्केवल्यशस्त्रे विनियोगमनुक्रमणिकाकारः प्रदर्श्यावशिष्टानां दानस्तुतिपरत्वं निर्दिशति। तत्रान्तिममन्त्रस्य लैङ्गिकं विनियोगं सूत्रकारोऽभिप्रैति। यदि कस्यचन पुंस्त्वावरोधकं प्रतिबन्धकं स्याद यूनः, न तु प्रवयसः, तर्हि मन्त्रेणानेन तन्निवर्तयितुं शक्यमित्यर्थे तात्पर्यं परिकल्प्य तत्र विनियोग

एष्टव्यः। भूयसां रोगाणां निवृत्तिर्मन्त्रैस्तद्युक्तकर्मभिश्च भवतीति प्रागवोचाम। एवं वक्तारः कामं भवेयुः, न तु प्रयोगात्मना प्रदर्शयितार इत्याक्षेप्तारो नूनं भवेयुः, किन्तु सन्तीदानीमपि तादृशाश्चमत्कारकारिणः श्रोत्रिया नियतवेदाध्यायिनो भारते। अतो नेयमावश्यकता यन्मन्त्रा अर्थानुसारिण एव भवेयुरिति। यदि चार्थानुसारिण एव मन्त्राः स्वीक्रियेरन्, तर्हि नित्यानां नैमित्तिकानाञ्च कर्मणामुच्छेद एव स्यात्। सति पापे तन्निवृत्तिर्मन्त्रैरिष्यते, असति च तस्मिन् मन्त्रानुपूर्वीसमुच्चारण-मभ्युदयकारीत्येव नित्यनैमित्तिककर्मसु मन्त्राणां नात्यर्थं स्वीक्रियते।

प्रातः सायं सन्ध्यानुष्ठानावसरे 'सूर्यश्च मा मन्युश्च मन्युपतयश्च', 'अग्निश्च मा मन्युश्च मन्युपतयश्च' इत्यादिमन्त्रैर्जलप्राशनं क्रियते। सर्वविधपापरक्षणरूपोऽर्थो मन्त्रेण प्रकाश्यते। मन्त्रस्यास्योच्चारणेन सर्वविधपापानां ध्वंसो भवतीति पापाचरणेन सह जलप्राशने सन्ध्यानुष्ठातारः प्रवर्तेरन्। अथवा पापरहिता वय-मित्यनुष्ठातारः सन्ध्याकर्मणो विरता भवेयुः। अतो नित्यनैमित्तिककर्मसु मन्त्रानु-पूर्वीसमुच्चारण एव तात्पर्यमेष्टव्यम्। अत एव याज्ञिका नित्यनैमित्तिककर्मणा-मनुष्ठाने फलं नास्ति, अननुष्ठाने च प्रत्यवाय इति व्यवस्थां स्वीकुर्वन्ति। एतेन मन्त्राणां विवक्षितार्थत्वं नास्तीति साधयितुं न शक्यते। सत्यपि विवक्षितार्थत्वे मन्त्र-गता ये शब्दा असमवेतार्थाभिधायिनः, तेषामानुपूर्वीसमुच्चारण एव तात्पर्यमिति मन्त्राधिकरणन्यायानुकूल्यं सम्पादितं भवति। एवञ्च विमर्शकप्रदर्शितमन्त्रो नाश्लीलपरो भवितुमर्हति।

भारतीया एव केचन विमर्शकम्मन्या ब्राह्मणभागस्य 'तद्धैके. तदु तथा न कुर्यात्' 'तन्नादृत्यम्' इत्यादिवाक्यान्युदाहृत्य पृच्छन्ति यच्छास्त्रग्रन्थेष्विव ब्राह्मण-भागेष्वपि खण्डनमण्डनरीतेर्दृश्यमानत्वात् कथं ब्राह्मणभागोऽपौरुषेयो वेदो भवितु-मर्हतीति। सत्यमेवायं प्रश्नो जटिलः दुरुत्तरश्च। उपलब्धब्राह्मणग्रन्थेभ्य एता-दृशानि स्थलान्येकीकृत्यानुसन्दधानोऽहमस्मि। तत्र द्वित्राणि स्थलानि प्रदर्शयितु-मिच्छामि। शतपथब्राह्मणे –'तद्धैके स्रुक्संमार्जनान्यग्नावभ्यादधति " तदु तथा न कुर्यात् " तस्मादु परास्येदेवैतानि' (श० ब्रा० १।२।४।११, इति दृश्यते।

दर्शपूर्णमासयोः स्रुचां जुहूपभृद्ध्रुवाणां वेदाग्रैः संमार्जनं विहितम्—'स्रुचः सम्मार्ष्टि' इति। वेदस्य शयानवत्सजान्वाकृतिरूपस्य दर्भमुष्टिविशेषस्याग्रभागा एव सम्मार्जनानि। एतैः स्रुचः पात्राणि सम्मृज्य तानि केचन शाखिनोऽग्नौ प्रक्षिपन्ति, तत्तथा न कर्तव्यम्, किन्तु तानि चात्वाले निरस्येदेवेति ब्राह्मणस्यार्थः। निरसनं वा भवतु अग्नौ प्रहरणं वा वेदाग्राणाम् उभयमप्युपयुक्तानां तेषामाकीर्णकरतानिवर्तकं कर्मैव भवति। एवं शतपथब्राह्मणस्य स्थितिः। अस्मिन्नेव विषये तैत्तिरीयब्राह्मणं पश्यामः। शतपथब्राह्मणवाक्यं तैत्तिरीयशाखां विषयीकरोतीति प्रतीयते। तैत्तिरीयाः संमार्जनानि अग्नौ प्रहरन्ति। नैतावता शतपथब्राह्मणस्य तैत्तिरीयशाखापरवर्तित्वं

निर्णेतुं शक्यम् । तैत्तिरीयशाखायामपि शतपथब्राह्मणविषयाणां खण्डनमुपलभ्यते । अत्र कथमस्माभिरेवं निर्णेतुं शक्यं यच्छतपथब्राह्मणं परवर्ति, तैत्तिरीयब्राह्मणं वेति ।

तैत्तिरीयशाखायाम् 'स्रुवसंमार्जनान्यग्नौ प्रहरति·····' इत्युपक्रम्य तान्येके वृथैवायास्यन्ति तत्तथा न कार्यम्····· ····· तस्मादेतान्यग्नावेव प्रहरेत्' ( तै० ब्रा० ३।३।२ ) इत्युपसंहारवाक्यं श्रूयते । अस्यां परिस्थितौ किं पूर्वं मिमुत्तरमिति कथं निश्चीयताम् । एवं पुरोडासपरिमाणविषये तैत्तिरीयशतपथब्राह्मणयोः परस्पर खण्डनमण्डने उपलभ्येते । अत एवमादयो विषयाः सत्यमेव विमर्शयोग्याः, झटिति निर्णेतुमशक्याः । बलवत्तरप्रमाणोपलम्भपर्यन्तं मीमांसकैरवलम्बितः पन्था एव निष्कण्टकः । एतादृशानां पदार्थानामनुसन्धानाय संस्कृतविश्वविद्यालयश्छात्रान् प्रोत्साहयेदिति सम्भावयामि ।



तृतीयं प्रवचनम्ः

# महर्षिजैमिनेः पदार्थपरीक्षणसरणिः

समेषां दर्शनानां शास्त्राणाञ्च यावन्तः प्रवर्तकाः सर्वे एव ते विचारकाः, चिन्तकाः परीक्षकाश्च। स्वस्वदर्शनौपयिकानि प्रमेयजातानि सुविचार्य सुचिरं परिचिन्त्य परीक्ष्य च स्वस्वग्रन्थेषु प्रतिपादयन्ति। मीमांसाशास्त्रप्रवर्तको महर्षिजैमिनिरपि विचारकश्चिन्तकः परीक्षकश्च। दर्शनेषु मीमांसायाः पृथगेकं विशिष्टं स्थानमस्ति। अत एव सांख्यमीमांसकाः, ब्रह्ममीमांसकाः, प्रमाणमीमांसकाः, अलङ्कारमीमांसकाः, वाक्यमीमांसका इति मीमांसपदसंयोजनेन सर्वे एव विचारका आत्मनो गौरवमवद्योतयन्ति। पूज्यविचारवाचकः खलु मीमांसाशब्दः। विचारे पूज्यत्वञ्च निष्पक्षपातेन विषयपरीक्षणम्। तच्च सर्वैरेव दार्शनिकैः क्रियत इति भवन्ति सर्व एव मीमांसकाः। एवं सत्यपि साधारण्ये निरुपपदं मीमांसापदं पूर्वतन्त्रमेव विषयीकरोतीति दर्शनसमाजे प्रसिद्धिः। तत्र भगवान् जैमिनिर्वाक्यमीमांसकः, मीमांसाशास्त्रञ्च वाक्यशास्त्रमिति च प्रसिद्धम्। वेदवाक्यावबोधितं धर्मस्वरूपं याथातथ्येन परीक्षते जैमिनिः। अत एव 'तस्य निमित्तपरीष्टि' इति प्रतिजानीते। तदर्थमेव विपुलं शास्त्रं तेन प्राणायि। सर्वेभ्योऽपि वेदवाक्येभ्यस्साक्षात्परम्पराया वा धर्म एव निर्गलतीति प्रतिपादनायेयान् प्रयासो महर्षेः।

तत्र वाक्यार्थज्ञानं पदार्थावबोधपूर्वकमिति प्रायः समेषां तीर्थकाराणां सम्मतिः। पदार्थानामन्यथाभावे वाक्यमपि विपरीतार्थप्रकाशकं भवेत्, तेन च धर्मस्य वेदवाक्यार्थरूपस्य तथ्यं स्वरूपं विघटितं स्यादिति निश्चिन्वन् जैमिनिर्लोकवेदाधिकरणे—लोके ये शब्दाः, ये च तेषामर्थास्त एव वेदेऽपीति व्यवस्थाप्य सर्वेष्वधिकरणेषु वेदवाक्यमेकैकमुदाहृत्य तदर्थान् परीक्षते। आवश्यकतानुसारेण वाक्यार्थाधिगमौपयिकान् शब्दतदर्थानपि विशेषेण स्वयं युक्तिभिः प्रमाणैश्च निश्चिनोति। एवं निश्चये का परिपाटीति कानिचनाधिकरणानि दिदर्शयिषामि।

वेदानां प्रामाण्यमपौरुषेयत्वञ्च सिषाधयिषुर्महर्षिः शब्दतदर्थतत्सम्बन्धानां स्वरूपमादौ विवेचयति। वेदानां परतः प्रामाण्यं पौरुषेयत्वं वा पुरुषसम्बन्धादेष्टव्यम्। स च पुरुषानुप्रवेशः त्रिविधस्सम्भाव्यते—शब्दार्थयोस्सम्बन्धं कुर्वन्तः शब्दमेव वा समुत्पादयन्तः, वाक्यवाक्यर्थसम्बन्धं विदधाना वा पुरुषा वेदेषु प्रवेशमर्हन्ति। तत्र जैमिनिरौत्पत्तिकसूत्रेण तयोस्सम्बन्धं नित्यं व्यवस्थापयति। अत्र भाष्यकारः श्रीशबरस्वामी सौत्रम् 'अव्यतिरेकश्च' इत्यंशं विवृण्वन् लिखति—'न हि सम्बन्धव्यतिरिक्तः कश्चन कालोऽस्ति, यस्मिन् न कश्चिदपि शब्दः केनचिदर्थे-

नासम्बद्ध आसीत्। कथम् ? सम्बन्धक्रियैव हि नोपपद्यते। अवश्यमेव सम्बन्धं कुर्वता केनचिच्छब्देन कर्तव्यः। येन क्रियेत तस्य केन कृतः ? अथान्येन केनचित् कृतः, तस्य केनेति तस्य केनेति तस्य केनेति नैवावतिष्ठते। तस्मादवश्यमनेन सम्बन्धं कुर्वताऽकृतसम्बन्धाः केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः' इति।

अनेन सन्दर्भेणेदं निर्गलति यज्जगति शब्दार्थव्यवहार ऋतुलिङ्गन्यायेन बीजाङ्कुरन्यायेन वा विच्छिन्नः प्रवहति। कस्मिंश्चिदपि काले जगतीतले मानवा व्यवहारमन्तरा मूका नाभवन् विविधाभिश्चेष्टाभिर्नैकविधैरव्यक्तैर्ध्वनिभिर्वा वानरा इव नरा व्यवहरन्तो नासन्, सम्प्रति यथा वयं वर्तामहे, तथैव प्राक्कालेऽपि मानवा अवर्तन्त, नरा नरेभ्य एवाजायन्त, न वानरेभ्यः शिशवः स्वस्वमातृभ्य एव प्रथमं शब्दोच्चारणमशिक्षन्त, तदर्थांश्चावागच्छन्। शब्दतदर्थावगमाय व्यवहार एव प्रधानं कारणम्। किं बहुना, सर्वमेव लौकिकं कार्यजातं शब्दमूलकमेव प्रववृते। शब्दार्थव्यवहारस्य कालनिर्णये प्रवृत्तः पुरुषो गजस्य कौपीनधारणव्यापारे प्रवृत्त इव स्यात्। सुचिरं विमृश्य चिरन्तना आत्मन इव पूर्वजान् निर्द्धारयन्तः 'न **सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते'**[१] इति सिद्धान्ते विश्वासमाबबन्धुः; न ह्याधुनिका इव विज्ञानशब्दघटितभाषापदप्रयोगमायया किमपि किमपि लिखितुं तत्प्रचारयितुञ्च प्राक्तनाः प्रावर्तन्त ! शब्दतदर्थनिर्णये तद्व्यवहारे च तेषां स्वस्वपूर्वतनानां व्यवहार एव मूलम्, न तु कृमिकीटसरीसृपपतङ्गशाखामृगाणामव्यक्तशब्दव्यवहारः। आत्मन इव परे द्रष्टव्या इति हि नीतिरुचिता। यथा वयं मानवाः, तथा तेऽपीत्यत्रैवौचित्यं भाति, न तु यथा ते कृमिकीटादयः तथा वयं मानवा इत्यत्रः। भाषाशास्त्रिणां 'ते' इति तच्छब्दवाच्याः कृमिकीटादयः, 'वयम्' इत्यस्मच्छब्दवाच्या मानवाः। कथमत्रौपम्यं सङ्गच्छताम् ? अव्यक्ता ध्वनयस्तेषाम् व्यक्ताश्च वाचोऽस्माकम्। ध्वनिमात्रसादृश्यञ्चेदुभयेषां न तर्हि काचिद्विप्रतिपत्तिः। अन्ये च ध्वन्यात्मकाश्शब्दाः, अन्ये च वर्णात्मकाः। ध्वनिभिर्वर्णा अभिव्यज्यन्ते। अभिव्यञ्जकाभिव्यक्तयोर्भेदमाकलयामो न त्वैक्यम्।

वर्णानुकूलैरेव ध्वनिभिर्वर्तितव्यम्, न तु ध्वन्यनुकूलैर्वर्णैः। करणापाटवादिना क्वचिद् ध्वनिभिर्वर्णाः कामं निस्सरेयुः महाशयः' इति स्थाने 'मोशै' इति, कामं तत्रार्थप्रत्ययोऽपि जायते, किन्तु साधुत्व तत्र न प्रतियन्ति तीर्थङ्कराः। गौरिति वक्तव्ये गावीत्युच्चारयतीति हि व्यवहरन्ति शास्त्रज्ञाः। न तत्र गावीशब्दस्य साधुत्वग्रहस्तेषाम्। अर्थप्रतीतिमात्रेण न शब्दस्य साधुत्वग्रहः। न हि शुक्तौ रजतप्रतीतिमात्रेण तत् सत् प्रत्यक्षं मन्यत इति यथा। अर्थप्रत्यायने यावानादरश्शब्देषु ततोऽप्यधिक आदरस्तत्साधुत्वे। शुद्धाशुद्धत्वे वस्त्रभाण्डादिष्वे-

१. वाक्यपदीयम्–१।११३।

वार्थेषु न परिगण्येते, किन्तु शब्देष्वपि। शुद्धाशुद्धत्वे साध्वसाधुत्वे च शास्त्रैकसमधिगम्येऽलौकिके स्तो यूपाहवनीयाविव। मार्तिके पात्रे चुश्चूषाकारेण कश्चन पानीयं पिबति, तदेव पात्रं गङ्गाजलेन प्रक्षाल्याप्यपरः पानीयं तेन न व्यवहरति, तथा प्रक्षालितेन पात्रान्तरेण राजतादिनापानीयं व्यवहरति साधारणो जनः। शिष्टास्तु स्वव्यवहाराय नैजं पात्रं संरक्षन्ति। एवमस्ति शुद्धाशुद्धत्वे दृष्टिः। यागीयेषु व्रीह्यादिषु द्रव्येषु यथा प्रोक्षणादयस्संस्काराः, तथा शब्देष्वपि निगमनिरुक्तव्याकरणादिभिरनेके संस्कारास्सन्ति विहिताः। एवं संस्काराहिताश्शब्दास्साधवः, तद्विहीनास्त्वसाधवः।

यास्कपाणिन्यादिभिः प्रवर्तिताश्शब्दसंस्काराः केवलं साधुत्वप्रयोजनकाः, न तु साधुशब्दनिष्पादकाः। लक्ष्यैकचक्षुषः खलु भवन्ति महर्षयः। इको यणचि,[१] इति सूत्रप्रवृत्तेः पूर्वं इ उ ऋ लृणां य व र लाः सन्धिवर्णा नाभवन्, सूत्रप्रवृत्तेरनन्तरमेवेमे वर्णा इति साधनं दुष्करम्। मित्रे चर्षौ' इति सूत्रात् प्राङ् महर्षेर्विश्वमित्र इति नामासीत् सूत्रानन्तरञ्च तन्नामविश्वामित्रोऽभवदिति प्रतिपादनं न विमर्शकानां रञ्जकं स्यात्; प्रत्युत लाघवैकदृष्टिः पाणिनिः विश्वामित्रस्य कृते चतुर्वर्णात्मकं सूत्रमेव रचयन् विश्वामित्रं न विसस्मारेति कथनं मनोरञ्जकं स्यात्। एवञ्च लक्ष्याविरोधेन महर्षयश्शास्त्रेषु प्रावर्तन्तेति स्वीकर्तव्यम्।

अत एव भगवान् जैमिनिः पिकनेमाधिकरणे परम्पराप्राप्तं शब्दार्थव्यवहारमनुसृत्य 'पिकमालभेत', 'पैलवो दण्डः' इत्यादिवाक्येषु पिकादिशब्दानां लोकव्यवहारसिद्धमेवार्थं व्यवस्थापयति।

अयमत्र विशेषः - पिक-नेम-सत-तामरसादयः शब्दा आर्याणां व्यवहारे न सन्निपतन्ति, अनार्याश्च तान् व्यवहरन्ति कोकिलार्धाद्यर्थेषु। अनार्यव्यवहारपतितत्वात्तानर्थानपरिगृह्य निगमनिरुक्तव्याकरणादिसंस्कारेण योऽर्थ आपतति तत्परिग्रहं जैमिनिर्न वाञ्छति, किन्तु तानेवार्थान् स्वीकरोति ये चानार्यव्यवहारपतिताः। यद्यपि गोक्षीरन्यायेन जैमिनेस्तेऽर्था अग्राह्या एव, तथापि शब्दार्थव्यवहारे गोक्षीरन्यायस्य प्रसक्त्यभावाद् न दोषः। पीलुशब्दस्य तु द्वेधा व्यवहारः—वृक्षे गजे च। उत्तरप्रदेशेषु 'पीलवान्' इति हस्तिपे प्रयोगो दृश्यते। अतः पीलुशब्दो हस्तिवाची। वैदिकास्तु वृक्षे पीलुशब्दं प्रयुञ्जते। वैदिकाः शास्त्रस्थाः, ते यथा शब्दार्थव्यवहारमविप्लुतपारम्पर्येण परिपालयन्ति न तथा लौकिकाः। लौकिकास्तु यथाकथञ्चिदर्थावबोधाय शब्दान् व्यवहरन्ति।

'चोर' शब्दोऽकारान्तः, स्तेन वाची प्रसिद्धः। शब्दमिममुकारान्तम् 'चोरु' इति परिकल्प्य द्रविडदेशेष्वन्ने व्यवहरन्ति। एवं 'वैरी' इति पदं रेफान्तं विधाय

---

१. अष्टाध्यायी–६।१।७७।

'वैरु' इत्युदरे व्यवहरन्ति । एवमादिषु शब्देषु शास्त्रस्थानां यत्र प्रयोगस्तत्रैव तस्य पदस्य प्रयोग इति जैमिनेर्मतम् ।

अयमत्र जैमिनेर्निष्कर्षः—येषां शब्दानां म्लेच्छेष्वार्येषु च विभिन्नार्थेषु प्रयोगः, यथा—यववराहादीनाम्, तत्रार्यप्रसिद्धिरेव बलीयसी, वाक्यशेषानुगुणत्वात्तस्याः । ये च शब्दाः कस्मिश्चिदर्थे म्लेच्छप्रयोगेष्वेव वर्तन्ते, आर्यैश्च क्वाप्यर्थे न प्रयुज्यन्ते, तेषां शब्दानां त एवार्था गृह्यन्ते ये म्लेच्छप्रयोगविषयाः । येषां शब्दानामुभयेषामपि विभिन्नेष्वर्थेषु प्रयोगः यथा पील्वादिशब्दानां तत्र वैदिकप्रसिद्धविषया एवार्था ग्राह्याः, अविप्लुतव्यवहारपरिपालकत्वाद्वैदिकानाम् । देशभाषापभ्रंशपदानि चोरु, वैरु इत्यादीनि विप्लुतिभूयिष्ठानि न ग्राह्याणि इति । एवञ्च शब्दार्थयोस्सम्बन्धोऽविप्लुतव्यवहारसिद्धो नित्य इति तत्र न पुरुषानुप्रवेशः ।

सोऽयं सम्बन्धः क्रियात्मको मीमांसकानामित्यस्य प्रश्नस्य श्रीशबरस्वामी भाष्यकारो वदति **'यो व्यपदेश्यस्सम्बन्धस्तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यस्संज्ञा संज्ञिलक्षण इति'** इत्यादिना ।

अस्यार्थः—संयोगादीनां सम्बन्धान्तराणामभिमतानामसम्भवेऽपि **'शब्देनाऽर्थमभिधत्ते'** इत्यादिव्यवहारानुरोधेनार्थप्रतीत्युद्देश्यिकायां शब्दकरणिकायामभिधानक्रियायां शब्दज्ञानरूपायां तज्जन्यप्रतिपत्तिरूपफलशालित्वेन यत्कर्मत्वं वाच्यत्वरूपमर्थस्य तस्यामेव च यत्कारणत्वं वाचकत्वरूपं शब्दस्य तादृशो वाच्यवाचकभाव एव सम्बन्धश्शक्तिरूपः शब्दार्थयोरनिवार्य इति ।

शक्तिरियमपौरुषेया शब्दगताऽर्थगता च भवति—**'सामर्थ्यं सर्वभावानां शक्तिरित्यभिधीयते'** इति वार्त्तिकात् । शक्तेरतिरिक्तपदार्थत्वमभ्युपयन्ति मीमांसका इति प्रसिद्धमेव । सोऽयं वाच्यवाचकभावरूपोऽपौरुषेयस्संबन्धो नित्य इति मीमांसकसरणिः ।

शब्दकर्तृत्वेन वेदेषु पुरुषानुप्रवेश इत्यस्मत्सपक्षीया अपि मन्वते दार्शनिकाः । सोऽयमपि पक्षः परीक्षितो जैमिनिना शब्दनित्यत्वाधिकरणे । एकैकस्य दर्शनस्य प्राधान्येन निरूपणीयो वा विषयः कश्चन निश्चितः । तस्यैव निर्वाहाय तत्सम्बद्धाः पदार्थास्तदनुकूलतया व्यवस्थाप्यन्ते दार्शनिकैरिति स्थितिः । तत्र यत् प्रमाणानां प्रमेयानाञ्चैव प्राधान्येन विवेचनाय प्रवृत्तं प्रमाणशास्त्रमिति प्रथते काणादं गौतमीयं वा, तत्र प्रमाणानां प्रामाण्यं परत इति पन्था अवलम्बितः । तन्निर्वाहाय शब्दस्य कृतकत्वमवस्थापितम् । शब्दस्याप्तनिर्मितत्वे प्रामाण्यम्, अनाप्तनिर्मितत्वे चाप्रामाण्यम् । अतो वेदस्यापीश्वरनिर्मितत्वेन ईश्वरस्य चाप्तत्वेन वेदप्रामाण्यं सिद्धं भवतीति प्रमाणशास्त्रस्य तात्पर्यम् । चतुर्विंशतिगुणेषु शब्दस्यापि परिगणनात्, तत्स्वरूपविवेचनावसरे तस्य नित्यत्वं प्रसाध्य, तत्प्रामाण्यस्य कृते परतस्त्वसरणो समा-

श्रितायां वेदस्यापि तथाविधं प्रामाण्यमव्याहतमिति कणादगौतमयोराशयः । प्रमाण-प्रमेयैकनिरूपणाय प्रवृत्ताविमौ कणादगौतमौ वेदेन सह दूरतस्सम्बन्धमावहत इत्यत्र न कश्चन संशयः। कथञ्चिद्वेदप्रामाण्यं संसाध्यात्मनो वैदिकसूत्रेण संयोजने तेन च वेदबहिर्भूतानां निष्कासने तन्मतखण्डने चाप्तस्येश्वरस्य साधनमावश्यकमिति मन्वानौ कणादगौतमौ पद्धतिमिमां शिश्रियात इत्यभ्यूहितुं शक्यते ।

जैमिनीयं दर्शनं तु साक्षाद्वेदसम्बद्धम् । वेदार्थधर्मस्यैव विवेचनाय सम्प्रवृत्तं वाक्यशास्त्रमिति कथ्यते। प्रमाणप्रमेयानां विवेचनन्तु गौणं समाश्रित्य अथवा ईषद्भेदेनान्यतस्सिद्धं वा तेषां स्वरूपमङ्गीकृत्य मुख्यतया वेदवाक्यार्थविचाराय प्रवृत्तस्य जैमिनेर्वाक्यार्थौपयिकशब्दतदर्थतत्सम्बन्धविषये यद्विवेचनम्, तस्य च या पद्धतिस्तस्या अतिशयत्वे समादरे च न कियानपि सङ्कोचो भवेदिति विभावयामः। अतः शब्दस्य नित्यत्वेन तद्द्वारा वेदेषु पुरुषानुप्रवेशो दुर्लभः । शब्दस्वरूपं प्रतिपाद-यितुं भाष्यकारश्शबरस्वामी 'अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः इत्युपक्रम्य **'तस्मादक्षराण्येव पदम्'** इत्युपसंहरति ।

सन्दर्भस्यास्येदं तात्पर्यम् 'गौः घटः' इत्यादौ क्रमिकाः श्रूयमाणा ये वर्णास्ते-षामनित्यतयाऽर्थविबोधकत्वानुपपत्तेः श्रूयमाणगकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽर्थ-प्रत्यायकत्वेनेष्टव्य इति स्फोटवादिनोऽभिप्रयन्ति । मतमिदमौचित्यमावहति न वेत्यत्र विचारो न सङ्गत इति पश्यामि । साधकबाधकयुक्तयो भूयस्यः स्युः । केन-चित् खण्डनमात्रेण स्फोटवादो निरस्त इत्यवधारणं नोचितम् । साधकैश्च प्रमाणैः स्फोटवादोऽवस्थापित इति सोऽस्यैरपि स्वीकर्तव्य इति न निर्बन्धः । सर्वोऽपि शास्त्र-कारः स्वशास्त्रमर्यादायां तिष्ठन् परिशीलयति — इदमुचितम् उतानुचितमिति ।

तत्र मीमांसकमर्यादेयम्— **'स्वाध्यायोऽध्येतव्यः'** इति विधिः स्वकुलपरम्प-रागतायाः शाखाया अध्ययनकर्तव्यतां बोधयति । अध्ययनञ्च गुरुमुखोच्चारणानूच्चा-रणम्। उच्चारण मनूच्चारणञ्च वर्णानां भवति। वर्णा एव श्रोत्रेण गृह्यन्ते। श्रोत्रगृहीतेऽर्थे लोके शब्दशब्दः प्रसिद्धः । लौकिकवैदिकशब्दानामनन्यत्वं लोकवेदा-धिकरणन्यायसिद्धम् । गकारादिव्यतिरिक्तोऽर्थविबोधकश्च शब्दो न श्रोत्रग्राह्यः । कामं तस्य बौद्धिकत्वमुपपन्नम् स्यात् । न तेन मीमांसकानां कोऽपि लाभः । यदि वर्णा नित्या भवितुमर्हन्ति, तर्हि न कोऽप्यर्थावबोधने प्रत्यूहः । यदि वा तेऽनित्याः, तर्हि पूर्वपूर्ववर्णजनितसंस्कारसहितान्तिमवर्णः प्रत्यायक इति विधयाऽर्थावबोधे न कोऽप्यन्तरायः । अतः स्वाध्यायाध्ययनविधिनाऽक्षराणि गृह्यन्ते, तान्येवाक्षराणि नित्यानि सन्ति, अर्थावबोधने निमित्ततां भजन्त इति । एवं वाक्यवाक्यार्थसम्बन्धे कर्तृद्वारा वेदस्यैव वा प्रबन्धस्य निर्माणद्वारा पुरुषानुप्रवेशो दुर्घट इति वाक्याधिकरणे वेदापौरुषेयत्वाधिकरणे च व्यवस्थापितं जैमिनिना ।

इदमिदानीं विवेचनीयम् — यज्जैमिनिः तदनुयायिनो मीमांसकाश्च वेदवाक्यार्थनिर्णयाय वाक्यगतानां पदानामर्थावधारणे कानुपाया-वलम्बन्त इति। अश्वप्रतिगृहेष्टिविधायकं वाक्यमस्ति—'यावतोऽश्वान् प्रतिगृह्णाति स तावत्संख्याकान् वरुणदेवताकचतुष्कपालद्रव्यकयागान् कुर्यात्' इत्यापाततोऽर्थः प्रतीयते। अत्र सिद्धान्ते। प्रतिगृह्णीयात्' इत्यस्य 'प्रतिग्राहयेत्' इत्यर्थं स्वीकृत्य अश्वानां दातैव क्रतूनिमान् समाचरेत्, न तु प्रतिग्रहीता इति व्यवस्थापितं जैमिनिना।

अयमत्रत्यसन्दर्भविवेकः—'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तन्निरवपत् ततो वै स वरुणपाशादमुच्यत, वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इत्यन्तं परकृतिरर्थवादः। अन्ते च 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति विधिवाक्यम्। प्रजापतिर्वरुणायाश्वमनयत्—अदात्। 'सः' प्रजापतिः स्वां स्वकीयां देवतां सम्प्रदानभूतं वरुणम् आर्च्छत् प्राप्तवान्। प्रजापतिरश्वं दत्वा वरुणग्रहं प्राप्तवानित्यर्थः। 'सः' प्रजापतिः पर्यदीर्यत—जलोदरेण व्याधिना उदरे विदीर्णोऽभवत्। 'सः' प्रजापतिः एतं वारुणं चतुष्कपालं यागमपश्यत्; तन्निरवपत् तमन्वतिष्ठत्, ततः—तेन सः प्रजापतिः वरुणग्रहादमुच्यत इत्यर्थवादभागस्यार्थः। तत उर्ध्वं विधिः—'यावतोऽश्वान्' इति। अत्र प्रतिपूर्वकगृह्णातेर्यदि प्रतिग्रहोऽर्थस्तर्हि उपक्रमगतार्थवादस्य सङ्गतिर्न स्यात् अर्थवादगतैः 'सः' इति तच्छब्दैः प्रजापतेरेव दानुरभिधानात्। तात्पर्यनिर्णायकप्रमाणेषु उपक्रमोपसंहाराविति प्रथमं प्रमाणम्। तेन उपक्रमानुसारेणोपसंहारः कर्तव्यो भवति। विध्यपेक्षयार्थवादस्य दुर्बलत्वेऽपि उपक्रमगतस्य तस्य प्राबल्यमङ्गीकर्तव्यं भवति। अतस्तदनुरोधेनोपसंहारस्य विधिगतस्य प्रतिपूर्वकगृह्णातेर्दानमेवार्थं एष्टव्यः— योऽश्वान् प्रतिगृह्णीयाद् दद्यात् प्रतिग्राहयेद्वा स वारुण्येष्ट्या यजेत इति। सर्वमिदमालोच्य जैमिनिस्सूत्रयति– 'सा लिङ्गादार्त्विज्ये स्यात्' (३.४.३७) इति। सा—वारुणीष्टिः आर्त्विज्ये—ऋत्विसम्प्रदानके याजमानेऽश्वदाने स्यात् लिङ्गात्—उपक्रमसामर्थ्याद् इति सूत्रस्यार्थः।

देशभाषासु 'सम्भ्रान्तपण्डितः' इति सम्भ्रान्तपदमुत्कर्षे, 'भीषणसुन्दरः' इति भीषणपदमाधिक्ये च प्रयुज्यमानमनुभवामः। तत्र कारणे पृष्ठे भाषाविज्ञानिनो ब्रुवन्ति यदस्मिन्नर्थेऽयं शब्दः प्रचलित इति। संस्कृते च सम्भ्रान्तपदं भीषणपदञ्च भ्रान्तियुक्तस्य भयङ्करस्य च वाचक इति प्रसिद्धम्। सत्यामप्येवं प्रसिद्धौ, जानन्तोऽपीमां प्रसिद्धिं विरुद्धार्थे तयोश्शब्दयोः प्रयोगे न सङ्कोचमाचरन्ति। तत्र च हेतुः प्रचलितत्वमेव। प्रचलितत्वञ्चाधारशून्यमेव। शब्दानुपूर्व्यामपभ्रंशस्सहजः, किन्तु कस्मिश्चनार्थे प्रसिद्धस्यार्थान्तरे प्रयोगो विना कारणेन क्रियमाणश्शास्त्रस्थानुद्वेजयेदेव।

मीमांसका एकत्र प्रसिद्धशब्दं तद्विपरितेऽर्थे कल्पयन्ति किन्तु तत्रोचितं कारणं परिदर्शयन्ति। किन्तु विपरीतार्थावलम्बने यद् यत्र कारणम्, तदेव कारणं स्थलान्तरेऽप्यर्थान्तरावलम्बायेति नातिदिशन्ति। यथा—'कदाचन स्तरीरसि नेन्द्र-सश्चसि दाशुषे' इति मन्त्रे प्रयुक्त इन्द्रशब्दो वज्रहस्ते प्रसिद्धः, अतोऽयं मन्त्र इन्द्र-देवताककर्मणि विनियोक्तव्यो लिङ्गात्। अयमेव मन्त्रः क्वचिद् गार्हपत्योपस्थाने 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विधिना विनियुक्तो गार्हपत्यमग्निं प्रकाशयितुं प्रवर्तते। तत्र इन्द्र'पदस्य गार्हपत्यार्थबोधकत्वं स्वीक्रियते। अत्रार्थान्तरे इन्द्र-शब्दस्य प्रयोगे विनियोजकं ब्राह्मणवाक्यं कारणम्। त्रिधिमन्त्राधिकरणन्यायेन विधिमन्त्रयोरैकार्थ्यं संरक्षणीयमिति हेतोर्ब्राह्मणवाक्यानुसारेण मन्त्रगतेन्द्रशब्दस्य इदिधातोरन्प्रत्ययान्तस्य परमैश्वर्यसम्पन्नो गार्हपत्य एवार्थः स्वीक्रियते। अयमेवैन्द्री-न्याय इति कथ्यते। एवं 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इति कश्चन मन्त्रः। 'प्रजापतिर्वै हिरण्यगर्भः' इति वाक्यशेषेण हिरण्यगर्भः प्रजा-पतिः। समवर्तताग्रे जातः' इति प्रपञ्चसृष्टेः प्रागाविर्भावकथनम्। 'भूतस्य पतिः' इति स्वसृष्टजगदुत्पत्तित्वम्, 'एक आसीत्' इति सृष्टेः प्रागेकत्वञ्च।

इदं सर्वं सृष्टिकर्तरि प्रजापतावुपपद्यते। अस्यां स्थितावयं मन्त्रः 'हिरण्य-गर्भः समवर्तताग्र इत्याघारमाघारयति' इति वाक्येन वायव्ययागे आधाराङ्गत्वेन विनिःयुक्तः। आघारशब्दस्य घृतेन क्षारणमर्थः। चतुरस्त्राकारे आहवनीये वाय-व्यादाग्नेयान्तम्। एवं निर्ऋत्यादीशानान्तञ्च घृतं क्षार्यते। तदिदं पूर्वाघार उत्तरा-घारश्चेति कर्मद्वयम्। प्रकृतौ दर्शपूर्णमासयोः पूर्वाघारोऽमन्त्रकः प्रजापतिदेवताकः, उत्तराघारञ्च समन्त्रक इन्द्रदेवताकश्च भवतः। अतिदेशेन कर्मद्वयमिदं वायव्य-विकृतियागं प्राप्तम्। तत्र हिरण्यगर्भमन्त्रस्य प्राकृतमिन्द्रदेवताकं मन्त्रं बाधित्वा उत्तराधार एव निवेश इति दशमतृतीये सिद्धान्तितं जैमिनिना। उत्तराधारस्येन्द्रदेव-ताकत्वेऽपि 'यो ह वै खलु वाव प्रजापतिः स उ वै इन्द्रः' इति वाक्यशेषेण प्रजा-पतिशब्दस्येन्द्रोऽर्थ इत्यवलम्ब्य विधिमन्त्रयोरैकार्थ्यं संरक्ष्यते। अयमेव हिरण्यगर्भ-न्याय इति व्यवह्रियते। एवञ्चोचितं कारणं प्रदर्श्यार्थान्तरे प्रसिद्धानां पदानाम-र्थान्तरे निवेशो मीमांसकमर्यादासिद्धः।

दार्शनिकपदार्थविवेचनावसरे तस्य तस्य दार्शनिकस्य पृथक् पृथक् पन्थाः कामं भवेत्। स च पन्थाः स्वस्वदर्शनपरम्परां मर्यादाञ्चानुसृत्य प्रवर्तते। मतान्त-रस्य समालोचनावसरे खण्डनप्रसङ्गे च मतान्तरसम्बन्धिनीं परम्परां मर्यादाञ्चानु-सृत्यैव समालोचनेन खण्डनेन वा भवितव्यमित्यस्ति दार्शनिकानां समयः। स्वस्व-दर्शनेऽपि पूर्वजानां मतमवरजैस्समालोच्यते खण्ड्यते च किन्तु तावता नेदमभ्युप-गन्तुं शक्यते यदेकस्मिन्नेव दर्शने परम्परा मर्यादा च भिन्नेति। स्वस्वपरम्परायां

मर्यादायाञ्च स्थित्वैवावरजः समालोचयति खण्डयति च। सोऽप्यवरजः कालान्तरे पूर्वजो व्यवह्रियेतैव।

एवं खण्डनमण्डनपरम्परायां समर्यादायां सत्यामप्येकरूपतां दार्शनिका न जहति। शब्दार्थस्वरूपविषये तु समेषां दार्शनिकानां विमर्शकानाञ्चैकरूप्यमेव स्वीकर्तव्यं भवेत्। शब्दस्यानित्यत्वं साधयितुमैदम्पर्यमावहन्तोऽपि 'घटः' इत्येवानुपूर्वीमुत्पादयेयुः कम्बुग्रीवादिमति न तु टघः' इति। शब्दः कृत्रिम इत्येतावता यथा तथा वा पुरुषश्शब्दान् रचयितुं प्रभुर्न भवेत्। एवमर्थस्वरूपविषयेऽपि। प्रान्तभेदेन देशभेदेन वा घटस्याकारा भवन्ति भिन्नाः, तथापि तत्तदाकारवति घटशब्दप्रयोगस्तु नियतः। पिकशब्दः परिवर्तनेन कपिर्भवति। अतः कपिशब्दस्य निर्माणं पिकशब्दाज्जातमिति कथनं किं युक्तियुक्तम्? एवं कटपयादिसंख्याशास्त्रानुसारेण पिककपिशब्दयोरेकैव एकादश' रूपा संख्या निष्पद्यत इत्यनयोरेक एवार्थ इति किं निश्चेतुं शक्यम्? यद्येवं तर्हि घट इत्यस्य एकचत्वारिंशत् सङ्ख्या समायातीति टघशब्दोऽपि घटार्थकस्स्यात्। अतश्शब्दतदर्थस्वरूपतत्सम्बन्धविषये किञ्चन प्रबलं नियामकं प्रमाणं सर्वैरेष्टव्यम्।

तदत्र मीमांसकैरवधृतं प्रमाणं निराबाधमित्युत्पश्यामः। तत्र मीमांसावेदवाक्यार्थनिर्णयाय प्रवृत्ता शब्दशब्दार्थं आवश्यकतानुसारेण सप्रमाणं विवेचयतीति पूर्वमवोचाम। वेदानर्थतश्शब्दतश्च संरक्षितुं षडङ्गानि महर्षिभिः प्रवर्तितानि सन्ति प्रसिद्धानि। तत्र शिक्षाव्याकरणच्छन्दोविचितयो वर्णम्, तत्समुदायपदम्, तत्समुदायं वृत्तमपि यथायथमवबोध्य वैदिकीमक्षरानुपूर्वीमनपायं परिरक्षितुं प्रावर्तन्त। तथार्थव्यवस्थोपयोगिनस्त्रयो निरुक्तं ज्यौतिषं कल्पश्चेति। यावद्वेदे शब्दस्य प्राधान्यम्, तावदेवार्थस्यापि। यदि शब्दप्रधान एव वेदोऽभविष्यत्, न तर्हि जैमिनिः शब्दवत्तदर्थतत्सम्बन्धान् नित्यानवक्ष्यत्। पाणिनेर्वैदिकप्रकरणं स्वरप्रकरणञ्चेममेव विषयमवद्योतयतः—यद्वेदेषु शब्दानां स्वराणाञ्चाध्ययनपरम्परासमागतं नियतं स्वरूपं कीदृशमिति। प्रातिशाख्यापरपर्यायः शिक्षाया अध्ययनेन स्पष्टं प्रतीयेन यच्छब्दस्वरूपपरिपालने तस्याः कीदृशी जागरूकतेति।

एवं वैदिकच्छन्दसां परिरक्षणे छन्दोविचितेः। एवमर्थव्यवस्थोपयोगिनां निरुक्तज्योतिषकल्पानां कियदुपकारकत्वमिति तत्तद्ग्रन्थपरिशीलनपरिपक्वमतिवैभवानां न तिरोहितं किञ्चित्। इमान्यङ्गानि पुराणन्यायधर्मशास्त्राख्यानि त्रीण्युपाङ्गानि च प्रमाणतयाऽवलम्ब्य जैमिनिः शब्दतदर्थस्वरूपविवेचनं करोति। दशमाध्यायस्य पञ्चमपादे **'अनभ्यासे पराक् शब्दस्तादर्थात्'** (१०.५.३९) **आग्रयणाद्वा पराक् शब्दस्य देशवाचित्वात् पुनराधेयवत्'** (१०.५.४१) इति सूत्रद्वयम्। प्रथमं सूत्रं पूर्वपक्षिणः, सिद्धान्तिनश्चोत्तरं सूत्रम्। **'पराञ्चमुक्थ्यान्निगृह्णाति'** इति वेद-

वाक्यार्थनिर्णयाय 'पराञ्चम्' इति शब्दस्यार्थे विचारः। अनभ्यासार्थकः पराक्शब्दः पूर्वपक्षिणः 'पराचीस्सामिधेनीरन्वाह' इति वेदवाक्ये पराक्शब्दस्यानभ्यासवाचित्वादिति पूर्वपक्षिणो युक्तिः। सिद्धान्तिनस्तु स शब्दः कालवाची 'पराचीनमग्न्याधेयादग्निं पुनरादधाति' इति वेदवाक्ये कालवाचितया तस्य शब्दस्य प्रयोगादिति युक्तिः।

अत्रायं विषयविवेकः ज्योतिष्टोमे सोमयागे षोडशीनामा कश्चन गृहः। गृहशब्दस्य दारव उलूखलाकारः पात्रविशेषोऽर्थः। अस्मिन् ग्रहे सोमरसः कस्मात् पात्राद् ग्रहीतव्य इति विवादः। 'आग्रयणात् षोडशिनं गृह्णाति' इति वाक्यद्वयेन पात्रदयाद् ग्रहीतव्यमित्युभयोरपादानत्वं स्पष्टमवगम्यते। किन्तु 'उक्थ्याद् गृह्णाति' इति वाक्यस्य 'पराञ्चमुक्थ्याग्निगृह्णाति' इति वाक्येनैकवाक्यतां कृत्वा 'उक्थ्यात्' इति पञ्चम्या अपादानत्वं सम्भवति न वेति विचारस्समापन्नः।

तत्र पूर्वपक्षी 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति वैयाकरणमर्यादामवलम्ब्य पराक्शब्दस्यानभ्यासार्थकत्वं वेदबोधितं स्वीकृत्यानभ्यासो यथास्यात् तथा षोडशिनि उक्थ्यापादानकस्सोमरसो ग्राह्य इति स्वपक्षमुपस्थापयति। सिद्धान्ती तु पराक्शब्दस्य सप्रमाणं कालवाचित्वमङ्गीकृत्योक्थ्यग्रहग्रहणोत्तरकालमाग्रयणान् षोडशिग्रहे सोमो ग्राह्य इत्यभिप्रैति। तत्राग्रयणस्यैवापादनत्वम्, न तूक्थ्यस्येति सिध्यति। पूर्वपक्षे सिद्धान्ते च पराक्शब्दार्थस्य प्रमाणं तुल्यं वेदरूपम् तर्हि कतरः पक्षो ग्राह्यः ? विनिगमनाविरहात् पक्षद्वयं तुल्यमेव स्यादिति चेत्, पूर्वपक्षे तस्यानभ्यासवचनत्वे उक्थ्याद् अनभ्यासमित्यन्नयस्स्यात्। तत्र प्राप्ते षोडशिग्रहणे उक्थ्यापादानकत्वस्यानभ्यासस्य च विधाने वाक्यवेदः। उक्थ्यात् पराचीनमुर्ध्वंकालीनमित्यन्वये उक्थ्यापादानत्वाभावात् प्राप्तं षोडशिग्रहणमुद्दिश्योर्ध्वकालत्वमात्रविधाने वाक्यभेदाभावः। उक्थ्याश्यपादानत्वाभावे पञ्चमी तु **अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते'** इति सूत्रेण भवति। चैत्रात् पूर्वः फाल्गुन इत्यादिप्रयोगनिर्वाहाय दिशि दृष्टश्शब्दो दिक्शब्द इति वैयाकरणैर्व्याख्यातत्वात्। यद्यपि पूर्वपक्षिमते 'उक्थ्यात्' इत्यत्र कारकविभक्तिस्सिद्ध्यति, सिद्धान्ति नस्तुमत उपपविभक्तिः तथापि पूर्वपक्षिमतं वाक्यभेदादिबहुदोषवदिति **उक्थ्यात् पराञ्चम्'** इत्युपपद विभक्त्याश्रयणस्यैत्रोचित्वात्। तस्मादाग्रयणादेव षोडशिग्रहणम्।

अनेन सन्दर्भेणेदं निश्चितं भवति यत् कस्यचन शब्दस्यार्थनिर्द्धारणाय पूर्वापरसन्दर्भं वाक्यशेषं वृद्धव्यवहारं निगमनिरुक्तव्याकरणादिकञ्च पर्यवेक्षणीयम्, तदनुसारेणैव निश्चितोर्थः प्रत्येतव्य इति।

षष्ठाध्यायस्यान्तिमेऽधिकरणे पशुशब्दार्थो विचारितः। पशुशब्दो जीवमात्रे वर्तते 'पशुपतिः' इत्यादौ, चतुष्पात्स्वेव व्यवह्रियते पशवश्चरन्ति इत्यादौ। कृमिकीटपतङ्गादिष्वण्डजेषु पशुशब्दव्यवहारो न दृष्यते। अस्यां स्थितौ **'पशुना यजेत'**

'अग्नीषोमीयं पशुम्' इत्यादिवेदवाक्येषु पशुशब्दार्थः क इति विचाराय प्रवृत्त-जैमिनीयस्सूत्रयति—'छागो वा मन्त्रवर्णात्' इति। अत्रत्यः पूर्वपक्षी आकृत्यधिकरणन्यायसिद्धं शब्दानां जातिवाचकत्वमङ्गीकृत्य पशुत्वमेव पशुशब्दार्थः, तस्य साक्षाद्यागसाधनत्वेऽनुपपन्ने सति परिच्छेदकतया व्यक्तेरुपस्थितौ या कापि पशुव्यक्तिर्यागसाधनमिति मन्यते।

सिद्धान्ती च जातिवाचकत्वं शब्दानामपरित्यज्य वाक्यशेषाधिकरणन्यायेन छागविशेषव्यक्तौ जातेः पर्यवसानमिति व्यवस्थापयन् छागव्यक्तिर्यागसाधनमिति मन्यते। तत्र सिद्धान्तिनः छागस्य वपाया: मेदसः' इति मन्त्रोऽवलम्बः। अर्थवादो यथा विधिगतसामान्यस्य विशेषार्थव्यवस्थापकः, तथा मन्त्रोऽपि तादृशकार्यसम्पादने क्षमः।

यद्यपि विध्यर्थवादयोरेकवाक्यत्वादर्थवादस्य विधिगतसामान्यव्यवस्थापकत्वं यथा, न तथा मन्त्रस्य, मन्त्रस्तु स्थलनान्तराधीनो विध्येकवाक्यतामवाप्तुं न क्षमः. तथापि मन्त्राणां प्रयोगविध्येकवाक्यतायास्सत्त्वात् प्रयोगविधिना तस्योपसंहारः कर्तुं शक्यत इति न दोषः। विशेष्यविशेषणभावस्सर्वत्र नैकरूपः क्वचिदेकपदोपात्तयोरपि भवति, यथा—पशुना इत्यत्र लिङ्गसंख्यादेः प्रकृत्यर्थे, प्रकृत्यर्थस्य च कारके प्रत्यार्थे क्वचित् पदद्वयोपात्तयोः। यथा—शुक्लः पट इत्यत्र। क्वचिच्च वाक्यद्वयस्थयोरपि। यथा प्रयोगवचनमन्त्रवाक्ययोः। तदिदमुपसंहृतं जैमिनिना—'न वा प्रयोगसमवायित्वात्' इति सूत्रेण। अतः पशुशब्दः छागपर एव। एवञ्च शब्दार्थावधारणाय क्वचिमन्त्रस्यापि व्यापृतिरस्तीति सिध्यति।

'पृष्ट्यष्षडहो बृहद्रथन्तरसामा कार्यः' इत्येकं वाक्यम्। अत्र 'बृहद्रथन्तरसामा' इति शब्दस्यार्थो विचारितो दशमस्य पञ्चमे। बृहदिति रथन्तरमिति च साम्नोर्नामनी। षडह इति षड्भिर्दिनैस्साध्यस्सोमयागः। स च द्विविधः—पृष्ठ्यः, अभिप्लवश्च। पृष्ठस्तोत्रयुक्तः पृष्ठ्यः, अभितः प्लवते यः सोऽभिप्लवष्षडहः। द्वादशाहे क्रतौ पृष्ठ्यष्षडहो यस्तस्य विकृतिः गवामयनिकष्षडहः। प्रकृतौ द्वादशाहिकषडहे क्रमेण षट्सु दिनेषु रथन्तरं बृहद् वै रूपं वैराजं शाक्वरं रैवतमिति षट् सामानि विहितानि। तद्विकृतावस्मिन् गवामयनिकषडहे बृहद्रथरन्तरयोरेव साम्नोर्गानम्, न तु वैरूपादेरिति वाक्यमिदमवबोधयति। तत्र प्रत्यहं बृहद् रथन्तरमित्युभे सामनी गेये, उत बृहद्रथन्तरं बृहद्रथन्तरमिति षट्सु दिनेष्वावृत्त्या एकैकस्मिन्दिन एकैकं गेयमिति विप्रतिपत्तिः।

बृहद्रथन्तरसामन्शब्दस्य द्वेधा समासः—बृहच्च रथन्तरञ्चेति बृहद्रथन्तरे, ते सामनी यस्य स इति त्रिपदबहुव्रीहिरिति। अन्यपदार्थस्तूभयत्र समानः, किन्तु द्वन्द्वगर्भबहुव्रीहौ इतरेतरसाहित्यस्य प्रतीतेर्यस्मिन्नहनि बृहत् तस्मिन् रथन्तरसाहित्य-

मप्यावश्यकमित्यन्यपदार्थं एकैकस्मिन्नहनि सामद्वययोगः प्रतीयते। त्रिपदबहुव्रीहौ तु न, तथाप्येकैकस्मिन्नहन्येकैकस्य साम्नो योगः प्रतीयते। अतोऽन्यपदार्थस्य समानत्वेऽप्यनुष्ठाने वैलक्षण्यमापततीति समासेनार्थविधारणमावश्यकम्। तत्र **द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचनम्'** इति भगवतः कात्यायनस्य वचनेन त्रिपदबहुव्रीहौ द्वन्द्वसमासावश्यम्भावाद् नित्यग्रहणेन पाणिनीयविभाषाधिकारस्य **'यथोत्तरं मुनीनां प्रामाण्यम्'** इति नीत्या सङ्कोचावश्यम्भावाद् द्वन्द्वगर्भबहुव्रीह्याश्रयणेनेतरेतरसाहित्येनैव साम्नोर्विधानमिति प्रत्यहं सामद्वयं गेयमिति पूर्वपक्षिण आशयः।

अत्र सिद्धान्तसूत्रं जैमिनेः—**'विभक्ते वासमस्तविधानात्तद्विभागेऽविप्रतिषिद्धम्'** इति। बृहद्रथन्तरे सामनो विभक्ते प्रत्यहमन्यतरत्स्यादित्यर्थः।

अत्र हेतुः—असमस्तविधानादिति। त्रिपदबहुव्रीहिमाश्रित्यासमस्तयोः—इतरेतरनिरपेक्षयोः साम्नोर्विधानादित्यर्थः। कात्यायनवचनन्तु बृहद्रथन्तरसामा इत्यत्र न प्रवर्तते। त्रिपदबहुव्रीहौ अवान्तरद्वन्द्वतत्पुरुषयोर्महाविभाषया विकल्पे प्राप्ते, द्वन्द्वतत्पुरुषाभावपक्षे **'द्वन्द्वाच्चुदषहन्तात्समाहारे'**, **'गोरतद्धितलुकि'** इति समासान्तप्रत्ययाभावे सति **'वाक्त्वक्प्रियः'**, **'पञ्चगोधनः'** इत्यपि प्रयोगः प्रसज्येत। वाक्त्वचप्रियः, पञ्चगवधन इत्येव प्रयोग इष्यते। अतोऽवान्तरद्वन्द्वतत्पुरुषयोर्नित्यत्ववचनम्। एवञ्च यत्रावान्तरद्वन्द्वतत्पुरुषयोः प्रवृत्तावप्रवृत्तौ च शब्दरूपान्यत्वं तत्रैवेदं कात्यायनवचनं प्रवर्तते। बृहद्रथन्तरसामा इत्यत्र त्रिपदबहुव्रीहौ द्वन्द्वप्रवृत्तौ तदप्रवृत्तौ च न रूपान्यत्वमवलोक्यते। अतो नात्र द्वन्द्वस्य नित्यता। तर्ह्यत्र द्वन्द्वगर्भद्विपदबहुव्रीहिर्वा तद्रहितत्रिपदबहुव्रीहिर्वेति कथं निश्चीयतामित्यत्राह तद्विभागेऽविप्रतिषिद्धमिति। परस्परनिरपेक्षतया साम्नोर्विधाने सति अतिदेशवाक्यमविरुद्धमित्यर्थः। यथा प्रकृतौ द्वादशाहिकषडहे प्रतिदिनमेकैकं साम गीयते चेन्न विरोध इति तात्पर्यम्। पूर्वपक्षिणो मते प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशवाक्यं नानुसृतं स्यात्. सिद्धान्तिनस्तु मते तदनुसृतं स्यादिति भावः।

स्वरभेदेनार्थभेदः अर्थभेदेन च पदभेद इति रीत्या द्वन्द्वगर्भबहुव्रीहौ बृहद्रथन्तरसामा इत्यत्र पूर्वपदं बृहद्रथन्तरपदम्, तच्च समासस्वरेणान्तोदात्तम्, तत्प्रकृतिकस्वर एव बृहद्रथन्तरसामशब्दः। त्रिपदबहुव्रीहौ च पूर्वपदं बृहत्पदम्, तत्र प्रातिपदिकस्वरेणान्तोदात्तम्, तत्प्रकृतिकस्वरो बृहद्रथन्तरसामशब्द इति रूपान्यत्वमत्रापि विद्यत इवाभातिः तथापि शिक्षाग्रन्थेषु ब्राह्मणभागे भाषिकस्वरस्य स्वीकृतत्वान्नात्र स्वरभेदप्रयुक्तरूपान्यत्वप्रसक्तिरिति मीमांसकसम्प्रदायः। एवञ्च वाक्यार्थविधारणाय मीमांसकाः क्वचिद् व्याकरणम्, क्वचित् शिक्षाग्रन्थम्, क्वचिदर्थवादम्, क्वचिन्मन्त्रवर्णनम्, क्वचिच्चोपक्रमोपसंहारसन्दर्भं प्रामाणीकृत्य शब्दतदर्थनिश्चये प्रवर्तन्ते।

तत्रायं विशेषः पूर्वपक्ष्यपि यन्मतं प्रस्तौति तदपि पूर्वोक्तप्रमाणेष्वन्यतममादायैव। पूर्वपक्ष इत्येतावता न स प्रमाणविहीनो भवति। सिद्धान्त्यभिमतप्रमाणेषु

प्रदर्श्यमानेष्वपि तत्र वर्तमानं दौर्बल्यं न्यूनतां वा समुद्घाटच सिद्धान्ती स्वमतं व्यवस्थापयति शब्दार्थस्वरूपचिन्तनधारेयं मीमांसायामनितरसाधारणी। जैमिनि-सूत्रेषु परिशील्यमानेषु तत्रेदं वैचित्र्यं स्पष्टमवभाति यज्जैमिनेः प्राक्कालवर्तिनां शब्दतदर्थविषये यन्मतं तदुल्लिख्य तैरुच्यमान हेतुश्च निर्दिश्य तदौचित्यानौचित्य-परीक्षणं महर्षिः करोतीति। एवं नैकविधया दृष्टचा निष्कृष्टवेदवाक्यार्थशब्दतदर्थ-विचारः प्रवर्तितो मीमांसकैः।

तत्र जातिसक्तिवादिनो मीमांसका इति प्रसिद्धम्। **'आकृतिस्तु क्रियार्थत्वात्'** इति सूत्रयन्नाकृत्यधिकरणे जैमिनिः शब्दस्यार्थं आकृतिरिति प्रतिजानीते, किन्त्वे-तदधिकरणपूर्वपक्षिणोऽपि व्यक्तिशक्तिवादिनस्स एव हेतुः, यश्च सिद्धान्तिनो जाति-शक्तिवादिनः। **'व्रीहीन् प्रोक्षति'** इत्यत्र व्रीहिशब्दार्थो यदि व्रीहित्वं जातिः, तर्हि तत्र प्रोक्षणक्रिया न सम्पद्येतेति व्यक्तिरर्थं इति पूर्वपक्षिणो मतम्। **'श्येनचितं चिन्वीत'** इत्यत्र श्येनशब्दार्थो यदि व्यक्तिः, तर्हि चयनक्रिया नोपपद्यत इति जाति-रर्थं इति सिद्धान्तिनोऽभिमतम्। कथमत्र निर्णयो भवतु? नात्र निर्णयाय कस्यचन वैदिकस्य प्रमाणस्यावलम्बः पूर्वोत्तरपक्षिणो भवितुमर्हति। न चात्र कस्यचन महर्षे-रनुशासनं विलोकयामः—यज्जातिरेव शब्दस्यार्थो न व्यक्तिः, व्यक्तिरेव तादृशी न जातिरिति। शब्दार्थचिन्तनधारैव परिशीलनीया पूर्वोत्तरपक्षिणोः। तत्र यः पक्ष औचित्यमावहति प्राप्तान् विरोधान् परिहरेत्, शास्त्रमर्यादाञ्च नोल्लङ्घते स पक्षो ज्यायान् ग्राह्यश्चेति निर्णयः कर्तव्यः। एषा च चिन्तनधारा मीमांसकानाम्। **'श्येन-चितं चिन्वीत'** इत्यत्र श्येनशब्दस्य पक्षिविशेषव्यक्तिवाचित्वे चयनप्रयोग एवानु-पपन्नस्स्यात्। **'व्रीहीन् प्रोक्षति'** इत्यत्र व्रीहिशब्दस्य जातिवाचित्वे प्रोक्षणक्रियाया अनुपपत्तिरिति समानायामप्यनुपपत्तौ पूर्वपक्ष्यनुपपत्त्यपेक्षया सिद्धान्तिनोऽनुपपत्ति-र्गरीयसी दुर्वारा च।

पूर्वपक्षो दर्शपूर्णमासाङ्गव्रीह्यङ्गप्रोक्षणस्यानुपपत्तिं दर्शयति **'अङ्गगुणविरोधे च तादर्थ्यात्'** इति द्वादशिकाङ्गगुणविरोधन्यायेनाङ्गाङ्गप्रोक्षणानुपपत्त्यपेक्षया प्रधानाङ्गचयनानुपपत्तिर्गरीयसी। इत्थञ्चानुपपत्तिर्दुर्वारा। प्रोक्षणानुपपत्तिश्च द्रव्य-परिच्छेदकतया समाधातुं शक्या। 'श्येनचितं चिन्वीत' इत्यत्र तु श्येनपक्षिणो द्रव्यस्य प्रकृतेनोपयोगः। न हि श्येनपक्षिभिर्यागः क्रियते व्रीहिवत्, किन्तु इष्टकाभिश्चयन-क्रिया सम्पादनीया। तच्च चयनं श्येनाकारवत् सम्पादनीयम्। तत्र श्येनशब्दस्य व्यक्तिवाचित्वेऽनुपपन्नं चयनं स्यात्। अत आकृतिः शब्दस्य शक्येति सिद्धान्तः। शब्दार्थनिश्चये एतादृशी विचारधारा मीमांसकानाम्।



# अद्वैतवेदान्तबिन्दुः

## प्रथमं प्रवचनम्

## अद्वैतसिद्धेः शाङ्करवेदान्ते किं स्थानम्

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ।।

वाराणसेयसंस्कृतविश्वविद्यालयसम्बन्धिमान्यश्रीगङ्गानाथझामहोदयप्रवचनमालायां त्रीणि प्रवचनानि दातुं ममावसरो लब्ध इति महदिदं सौभाग्यम् । विषयस्त्वेतेषाम्—अद्वैतसिद्धेः शाङ्करवेदान्ते किं स्थानमिति । तत्राद्वैतसिद्धिरभिधेयप्रधाना द्वैतोपलक्षितब्रह्मसिद्धिः, द्वैताभाववद्ब्रह्मसिद्धिर्वा । तमभिधेयमभिलक्ष्य निबद्धो निबन्धोऽद्वैतसिद्धिर्नाम ।

### अद्वैतमेव तत्त्वम्

तत्राद्वैतपदार्थः द्वैताभावः, तस्य पारमार्थिकत्वे ब्रह्मस्वरूपत्वात् स एव तत्त्वम् । तदपारमार्थिकत्वे तु द्वितीयाभावोऽतत्त्वम्, तत्त्वन्तु ब्रह्मैव । तत्र तत्त्वपदं तत्तन्मतावलम्बिभिः स्वीयेषु सिद्धान्तेषु प्रयुज्यते सिद्धान्तान्तराण्यतत्त्वं मत्वा । अतो द्वैतिनोऽद्वैतमतत्त्वमिति, अद्वैतिनो द्वैतमतत्त्वमिति च मन्यन्ते । अतोद्वैतसिद्धिः "इह-कुमतिरतत्त्वे तत्त्ववादी वराकः" इति द्वैतमतत्त्वमिति मनुते । तत्र द्वैतिनामाक्षेपोऽद्वैतसिद्धान्तदृष्टयैवाद्वैतमतत्त्वमिति "अतात्त्विक एव वा तदभावः" इत्यद्वैतसिद्धिः स्वयं वदतीति; परन्त्वतात्त्विक एव वा निषेध इति सिद्धिवाक्यं द्वैताभावस्य मिथ्यात्वस्यापि मिथ्यात्वपक्षमादाय । तन्मते हि ब्रह्मैव तत्त्वम्, न तु मिथ्यात्वमिति न तेनाद्वैतातत्त्वतायां पर्यवसानम् ।

### मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वम्

द्वैतमिथ्यात्वमिथ्यात्वेन द्वैतसत्यत्वं न कथमपि, इति न मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वापत्तिः, इति द्वैतसत्यत्वापत्तिनिरासेन न द्वैतसत्यतायां पर्यवसानम् । द्वितीयाभावस्य मिथ्यात्वमिति पक्षो हि द्वितीयस्येव द्वितीयाभावस्यापि दृश्यत्वेन प्रतियोगि-तदभावयोरुभयोरपि निषेध्यतावच्छेदकैक्यमादाय निरूढम्, इति न तावता द्वैततात्त्विकतापत्तिः ।

### स्वाप्नजागरवैधर्म्यं ब्रह्मेतरमिथ्यात्वाविरुद्धम्

तत्र सत्यम्, "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रे 'वैधर्म्यं हि भवति स्वप्न-जागरितयोः। किं पुनर्वैधर्म्यम् ? बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु, नैवं जागरितोपलब्धं वस्तु स्वाभाविकं कस्याञ्चिदवस्थायां बाध्यते" इति भाष्येण जागरितोपलब्धस्तम्भाद्यशेषद्वैतप्रपञ्चस्याबाधितत्वलक्षणतत्त्वरूपता स्वीकृता। नह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्, इति शाङ्करभाष्ये ब्रह्मविद्याभरणादावन्यत्र चाद्वैतनिबन्धेषु निर्धारितम्; तथापि सर्वत्राद्वैतनिबन्धेषु व्यवहारनिर्वाहकं सत्यत्वमेव तत्र निरूपितम्। अनेन हि ज्ञानाकारातिरिक्ता अर्था न सन्तीति सौगतमतमेव निरस्यते। शाबरभाष्येऽपि निरालम्बनवादनिराकरणावसरेऽयमेवार्थः स्फुटीकृतः। एतावता च व्यावहारिकं प्रामाण्यं सर्वेषां प्रमाणानाम्, न तु पारमार्थिकं त्रैकालिकाबाध्यत्वमित्येव सिद्धयति।

अनेन हि प्रसङ्गेन स्वप्न-जागरयोर्व्यवहारदशायां बाधाबाधावेव मन्येते, इति स्वाप्नानां व्यावहारिकाणामपि न प्रामाण्यं जागरवत्; स्वाप्नस्य जागरे बाधित्वात्, जागरितस्य जाग्रदवस्थायामबाधितत्त्वाच्च, इति पारमार्थिकसत्यता द्वैतस्य नानेन भाष्येणावगन्तुं शक्यते।

इदं स्वाप्न-जागरितयोर्वैषम्यं न द्वैतिमते, अन्यत्र वा ईश्वरस्यैव विचित्रशक्तिविशेषेण वासनासहकारेण वा स्रष्टृत्वमिति स्वीकारात् स्वाप्न-जागरितयोर्वैधर्म्यं दुरुपपादम्; अन्यथा स्वाप्न-जागरितयोरेकरूपा तत्त्वता स्यात्, वैधर्म्यं वा स्यात्। अतः स्वाप्न-जागरितवैधर्म्यमात्रेण द्वैतमात्रस्य तत्त्वता नाद्वैतमतदृष्टया प्रचारयितुं शक्यते, इत्यद्वैतदृष्टयैवाद्वैतमतत्वमिति द्वैतिनां वादो हठवादः।

## द्वैतसिद्धान्तमात्रविमर्शोऽद्वैतसिद्धौ

अत्राद्वैतसिद्धेः शाङ्करवेदान्ते स्थानविचारावसरे द्वैताद्वैतसिद्धान्तयोर्विमर्शनमेव विषयः, न तु विशिष्टाद्वैतादिसिद्धान्तानां विमर्शनम्। अयमत्र द्वैताद्वैतसिद्धान्तयोर्वादप्रस्थानक्रमः।

| अद्वैतसिद्धान्तः | द्वैतसिद्धान्तः |
|---|---|
| (१) चित्सुखाचार्याणां तत्त्वप्रदीपिका | (१) जयतीर्थानां वादावलिः |
| (२) व्यासतीर्थानां न्यायामृतनिरासाय श्रीमधुसूदनसरस्वतीनामद्वैतसिद्धिः | (२) व्यासतीर्थानां न्यायामृतञ्च, येन चित्सुखाचार्याणां सिद्धान्ता निरस्यन्ते |
| (३) अद्वैतसिद्धेर्व्याख्या लघुचन्द्रिका, गुरुचन्द्रिका च पूज्यश्रीब्रह्मानन्दसरस्वतीनां तरङ्गिणीखण्डनरूपा, अपरश्च निबन्धः सिद्धिव्याख्या न्यायामृतकण्टकोद्धारखण्डरूपा। | अद्वैतसिद्धेर्निरासार्थं श्रीरामतीर्थानां तरङ्गिणी, न्यायामृतव्याख्या, स्वतन्त्राश्चापरे ग्रन्थाः न्यायामृतकण्टकोद्धारादयश्च। |

अतोऽवगम्यते शाङ्करवेदान्ते स्थानमद्वैतसिद्धेर्द्वैतवेदान्तनिरसन एव ।

यद्यपि प्रपञ्चसत्यत्व-मिथ्यात्वादौ, सगुण-निर्गुणवादादौ, सखण्डार्थाखण्डार्थवादयोः, अन्यत्र च बहुषु मतान्तरसाधारण्यं दृश्यते, परन्तु प्रधानं मुख्यं लक्ष्यं द्वैतसिद्धान्तनिरसनमेवाद्वैतसिद्धेः ।

## अद्वैतपदं श्रौतम्

तत्राद्वैतपमुपनिषत्सु माण्डूक्योपनिषद्यभिधेयप्राधान्येन प्रवृत्ते प्रकरणे, नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं नाप्रज्ञमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रप्रञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" इत्यभिधानप्रधानप्रकरणे, "अमात्रश्चतुर्थोऽव्यवहार्यः प्रप्रञ्चोपशमशिवोऽद्वैत एवमोङ्कार आत्मैव स विशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद" इत्यत्राम्नायते ।

## द्वैतिनामद्वैतपदव्याख्यानम्, तन्निरासश्च

अत्राद्वैतपदं द्वैतभाष्यव्ययाख्यायामुक्तमाण्डूक्योपनिषत्कारिकायाम्—

"निर्दुःखसुखरूपत्वात् शिवशब्दश्रुतौ श्रुतः ।
अन्यथाप्रत्ययो द्वैतं शमयेत्तं यतो हरिः ॥
अद्वैतस्तेन चोदिष्टः तुरीयः पुरुषोत्तमः ।"

इति माहात्म्यानुसारेणान्यथाप्रत्ययरहित इति, द्वैतपदमन्यथा ज्ञानमिति च न्यासतीर्थटीकायां व्याख्यातम् । अत्र व्यासतीर्थैः—"न विद्यते द्वैतं भिन्नं यस्मात्तदद्वैतमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे—अन्यथेति" इति स्वीयमद्वैतपदव्याख्यानमद्वैतमतनिरासार्थमितिविशदीक्रियते ।

श्रीनिवासटीका हि प्रकृतप्रकरणे 'न विद्यते द्वैतं भिन्नं यस्मात्तदद्वैतमित्यन्यथाप्रतीतिनिरासायाद्वैतशब्दार्थमाह—अन्यथाप्रत्ययः" इति पूर्वोक्तमेवार्थं द्वैतशब्दस्य व्याचष्टे ।

माण्डूक्योपनिषत्कारिका हि द्वैतमते न गौडपादीया कृतिः, किन्तु, तत्रागमप्रकरणमात्रंश्रुतिः । अन्यानि तु वैतथ्यप्रकरणम् अद्वैतप्रकरणम्, अलातशान्तिप्रकरणञ्च तन्मते स्वतन्त्रं प्रकरणम् । अतोऽद्वैतपदव्याख्यानं श्रुतिमनुसृत्यैव कर्तव्यम्, न तु तस्य तस्याचार्यस्य सिद्धान्तमात्रानुसारेणेत्यभिप्रेत्यैव व्यासतीर्थ-श्रीनिवासतीर्थयोरद्वैतपदव्याख्यानमत्र समुद्धृतम् ।

## त्रिपाद्ब्रह्मोपनिषदादिदृष्ट्याऽद्वैतपदार्थोऽद्वैताभिमत एव साधुः

अतः श्रुत्यन्तरानुसारेण तत्पदविवरणं किमत्र साम्प्रतमिति विचारणीयम् । तत्र च त्रिपाद्विभूतिमहानारायणोपनिषदि—"स एव तुरीयं ब्रह्म" इति तुरीयं

ब्रह्म प्रकृत्य "ज्ञानात्मा तुरीयात्मा" इत्यादि वाचकावाच्योऽद्वैतपरमानन्दो विभुर्मियो निष्कलङ्को निर्विकल्पो निरञ्जनो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चिदित्यद्वैतपदं द्वैतसामान्यवर्जितवस्तुपरमेवाम्नायते ।

परमहंसपरिव्राजकोपनिषदि "भगवन् ब्रह्म प्रणवः कीदृश इति ब्रह्मा पृच्छति । स होवाच नारायणः—ब्रह्म प्रणवः षोडशमात्रात्मकः सोऽवस्थाचतुष्टय-चतुष्टयगोचरो जाग्रदवस्थायाम्" इत्यादिना जाग्रदादितुरीयान्ताभिधेयप्रधानमोङ्कारोपासनं प्रक्रम्य, नारदपरिव्राजकोपनिषदि च "ऐक्यत्वादानन्दपूर्णत्वाच्च सोऽयमात्मा चतुर्विधः--चतुष्पाद् जागरितः स्थूलप्रज्ञो हि विश्वभुक्" इत्युपक्रम्य तुरीयमात्मानं प्रस्तुत्य विकल्पत्रयमत्रापि मायामात्रं विदित्वैवं सच्चिदेकरसो ह्ययमित्योमर्थस्य तुरीयस्य परमार्थत्वं जागरिक स्वाप्न सुषुप्तानां स्वप्नमात्रत्वञ्च प्रतिपाद्यते । तेन च "मायामात्रमिदं सर्वम्" इति सर्वस्य द्वैतस्य मायामात्रत्वं तुरीयस्य परमार्थत्वञ्च ज्ञाप्यते । इदमेवाभिप्रेत्य—

"मायामात्रमिदं सर्वमद्वैतं परमार्थतः"

इत्यागमप्रकरणम्, गौडपादकारिका वा । किं बहुना ? नृसिंहतापनीयोपनिषदि "ओंकार एव चतूरूपो ह्ययमोङ्कार" इति तुरीयं प्रक्रम्य "अविकल्परूपं हीदं सर्वम्, नैव तत्र काचन भिदास्ति । अथ तस्यायमादेशोऽमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः" इति माण्डूक्योपनिषदर्थोऽद्वैतात्माऽद्वितीय एव प्रतिपाद्यते, इत्यद्वैतपदस्य द्वैतिनां व्याख्यानं नृसिंहतापनीयोपनिषद्विरुद्धमपि । अयं चार्थो नृसिंहतापनीयोपनिषदि—"एकमेव तद्भवति ह्यविकल्पोऽपि नात्र काचन भिदाऽस्ति । नैव तत्र काचन भिदाऽस्ति । अत्र हि भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति तदेतदद्वयम्" इत्यादिना सुबालोपनिषदमप्यालोड्य व्यवस्थाप्यते ।

नृसिंहतापनीयोपनिषदपि नृसिंहस्वरूपमद्वितीयमात्मतत्त्वमेवेति स्पष्टं प्रतिपादयतीति, तस्य सगुणेश्वरपरतया केषाञ्चन व्याख्यानं निरालम्बम् ।

**गौडपादकारिकादृष्ट्याऽद्वैतपदार्थोऽद्वैताभिमत एवः न द्वैताभिमतः**

गौडपादकारिकाया वैतथ्यप्रकरणम्, अद्वैतप्रकरणम्, अलातशान्तिप्रकरणञ्च माण्डूक्योपनिषद्गतमद्वैतपदव्याख्यानार्थं प्रवृत्तम् । आगमप्रकरणगतम्

"मायामात्रमिदं सर्वमद्वैतं परमार्थतः"

इत्यागमप्रकरणवचनं द्वैतानां परस्परम्, द्वैतेश्वरयोः, द्वैतजीवानाम्, जीवेश्वरयोः, जीवानाञ्च भेदं पञ्चविधं स्पष्ठं निरस्यति । तत्र वैतथ्यप्रकरणं यथा–

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः ।
अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥ १ ॥

अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ।। २ ।।

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।
वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ।। ३ ।।

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।
यथा यत्र तथा स्वप्ने संवृतत्वेन भिद्यते ।। ४ ।।

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः ।
भेदाना हि समत्वेन प्रसिद्धेनैव हेतुना ।। ५ ।।

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ।। ६ ।।

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ।। ७ ।।

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम् ।
तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ।। ८ ।।

स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतोगृहीतं सद् दृष्टं वैतथ्यमेतयोः ।। ९ ।।

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः ।। १० ।।

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ।
क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः ।। ११ ।।

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुद्धयते भेदानिति वेदान्तनिश्चयः ।। १२ ।।

विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थितान् ।
नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ।। १३ ।।

चित्तकाला हि येऽन्तस्तु द्वयकालाश्च च ये बहिः ।
कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ।। १४ ।।

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।
कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ।। १५ ।।

जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ।
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथा स्मृतिः ।। १६ ।।

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ १७ ॥

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥ १८ ॥

प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः ।
मायैषा तस्य देवस्य यया संमोहितः स्वयम् ॥ १९ ॥

प्राण इति प्राणविदो भूतानीति च तद्विदः ।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥ २० ॥

पादा इति पादविदो विषया इति तद्विदः ।
लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥

वेदा इति वेदविदो यज्ञा इति च तज्ञविदः ।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥ २२ ॥

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः ।
मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः ॥ २३ ॥

काल इति कालविदो दिश इति च तद्विदः ।
वादा इति वादविदो भुवनानीति तद्विदः ॥ २४ ॥

मन इति मनोविदो बुद्धिरिति च तद्विदः ।
चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥ २५ ॥

लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः ।
स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥ २६ ॥

पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २७ ॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।
स्थितिरिति स्थितिविदः सर्वे चैव तु सर्वदा ॥ २८ ॥

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।
तं चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥ २९ ॥

एतैरेवाऽपृथग्भावैः पृथगेवेति लक्षितः ।
एवं यो वेद तत्त्वेन कल्पयेत् सोऽविशङ्कितः ॥ ३० ॥

स्वप्न-माये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।। ३२ ।।

भावैरसद्भिरेवायमद्वयेन च कल्पितः ।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ।। ३३ ।।

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।
न पृथग् नापृथक् किञ्चिदिति तत्त्वविदो विदुः ।। ३४ ।।

वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः ।
निर्विकल्पो ह्ययं दृष्टो प्रपञ्चोपशमोऽद्वयः ।। ३५ ।।

तस्मादेवं विदित्वैनमद्वैते योजयेत् स्मृतिम् ।
अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ।। ३६ ।।

निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ।। ३७ ।।

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु वाह्यतः ।
तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ।। ३८ ।। इति ।

## वैतथ्यप्रकरणार्थनिष्कर्षः

इदं वैतथ्यप्रकरणं सर्वभावानां वैतथ्यं प्रक्रम्य स्वाप्निकानां मिथ्यात्वं तद्-दृष्टान्तेन जागरिकाणामपि मिथ्यात्वं रज्जुसर्पादेरिव निरूपयति । अनेन चेदं सूच्यते—"वैधर्म्याच्च न स्वप्नादिवत्" इत्यनेन सूत्रितं स्वाप्नवैषम्यं जागरिकाणां व्यवहारकालबाधितत्वाबाधितत्वाभ्याम्, न तु सर्वात्मना बाधाबाधाभ्याम् इति तत्साधर्म्य-वैधर्म्ये उभे अपि विशदिक्रियेते, तेन च भगवत्पादमतरीत्या "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रगतभाष्यानुसारेण स्वाप्निकवैधर्म्याद् जागरितसत्यत्वमेवेति द्वैतिनामन्येषां केषाञ्चन कल्पना नावसरति । प्रपञ्चमिथ्यात्वानुमाने स्वाप्निकवदिति स्वाप्निकदृष्टान्तानुसंधानं तु स्वाप्निकदृष्टान्तेन ज्ञानाकारत्वमेव जागरिकाणामप्यर्थानामिति योगाचारमतनिरसनं स्वाप्निकविषये द्वैतिकेवलाद्वैतिनोः सिद्धान्तभेदं मनसिकृत्य । तत्र द्वैतिनोऽपि शुक्तिरूप्यादिभ्रमेष्वसत्ख्यातिं मन्वानाः सद्भिन्नत्वम्, सत्त्वेन प्रतीत्यर्हत्वञ्च स्वीकुर्वन्ति, इति प्रतिपन्नोपाधौ त्रैकालिकप्रतिषेधप्रतियोगित्वमित्यत्र दृष्टान्तता न विरुद्धेत्यभिप्रेत्यैव शुक्तिरूप्योदाहरणम् । अयं तु दृष्टान्तः सद्विविक्तत्वरूपचतुर्थानुमाने स्वात्यन्ताभाववति प्रतीयमानत्वेऽपि न विरुध्यते । ज्ञाननिवर्त्यत्वमपि द्वैतिभिरपि शुक्तिरूप्यादिस्थले शुक्तिसम्यग्ज्ञानबाधितत्वात् स्वीक्रियते । शुक्तिरूप्यादिस्थलेऽसत्ख्यातिस्वीकारस्तु तत्रासत्पदस्य पारिभाषिकत्वमभिप्रेत्यैव । तदीयमसत्ख्यातिपदं तु विपरीतख्यातिरिति

नामान्तरेणापि व्यपदिश्यते। नामान्तरेण तत्रान्यथाख्यातिरेवेति तदीयनिबन्धत एव ततस्ततोऽवगम्यते।

तत्रासत्पदं त्वविद्यमानत्वमात्रेण शुक्तौ। न तु सर्वथा तत्र प्रतीयमानस्य रजतस्यान्यत्राप्यसिद्धया; अन्यथा शशविषाणादिसाधारणेऽसत्त्वे तत्र स्वीक्रियमाणे, द्वैतमते सादृश्यज्ञानादीनां रजतमात्रप्रतीतिनिर्वाहकाणां तदभ्युपगतानां नोपपत्तिरिति वैतथ्यप्रकरणं सम्यगालोच्यमानं द्वैतानां तदनन्यत्वाधिकरणसिद्धं तद्व्यतिरेकेणाभावरूपं मिथ्यात्वं गमयति। तेन च द्वैतानां परस्परं भेदः, द्वैतेश्वरयोर्भेदः, द्वैत-जीवयोर्भेदश्च बाधित इति स्पष्टमवगम्यते; द्वैताधिष्ठानं चिन्मात्रमेव परमार्थमिति च, इति—

"मायामात्रमिदं सर्वमद्वैतं परमार्थतः"

इत्यागमप्रकरणगतश्लोको द्वैतिभिरन्यथा व्याख्यायमानो नोपपद्यते।

इदं हि—जीवानां जीवेश्वरयोश्च भेदो घटाकाशमठाकाशयोरिवौपाधिकः, स्वरूपतस्त्वभेद एवेति निरूपणार्थम्, अनेनोपाधिबाधेनौपाधिक एव बाधो जीवेश्वरयोः स्वरूपतस्त्वबाध इति च सूचनार्थम्।

"अनेनाद्वैतप्रकरणमपि व्याख्यातम्, तेन—मायामात्रमिदं सर्वमद्वैतं परमार्थतः" इति श्लोकप्रक्रान्तं परमार्थतोऽद्वैतत्वं जीवेश्वरविषयेऽपि व्यवस्थाप्यते।

### अलातशान्तिप्रकरणगतोऽद्वैतवादो न सौगतानाम्

अनेनालातशान्तिप्रकरणमपि व्याख्यातम्। इदं हि प्रकरणम्—

भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि।
अभूतस्यापरे धीराः विवदन्तः परस्परम्॥

इत्यादिना द्वैतस्य सर्वस्याजातिम्, अनाशम्, किं बहुना? अजत्वमपि स्वभावतो न भवतीति ज्ञापयति। इदञ्च सांख्यानां सत्ख्यातिवादं नैयायिकानामारम्भवादञ्च निरस्य सद्विवर्तवाद एव प्रपञ्चस्योचित इति प्रतिपादयति।

अयं चार्थ आरम्भ-परिणामवादयोः सद्विवर्तवादभूमिकात्वम्—

"आरम्भवादः परिणामवादो विवर्तवादस्य च भूमिकेयम्"

इति वार्त्तिकसिद्धान्तमूलः। स्पष्टश्चायमर्थः सदानन्दकृताद्वैतब्रह्मसिद्धौ प्रथममुद्गरे।

मित्रप्रवरश्रीविधुशेखरभट्टाचार्यस्तु स्वीयागमप्रकरणे गोडपादकारिकाया अलातशान्तिप्रकरणं सर्वं सौगतमतमेवेत्युपबृंहयति, तत्रत्यानां मङ्गलश्लोकादिपदानां दर्शनात्, विशिष्य च बौद्धाभिमताजातिवादस्य विस्तरेण समर्थनाच्च। तत्र शब्दसाम्यं न सिद्धान्तैक्यप्रयोजकम्, किन्त्वर्थसाम्यमेव। प्रकृते तु नार्थसाम्यमिति

भगवत्पादानामेतत्प्रकरणभाष्येण विशदमवगम्यते। सिद्धान्तसाम्यं त्वजातवादमवलम्ब्य भवति, न वेति सत्यं विमर्शनमर्हति। औपनिषदः सिद्धान्तो नाजातवादो न वा वैयासिकः, किं बहुना ? भगवत्पादीयोऽपि न स सिद्धान्तः।

तत्रोपनिषदः प्रतिवेदान्तं प्रायेण—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति" इत्यादिना, ब्रह्मसूत्राण्यपि—'जन्माद्यस्य यतः" इत्यादिना सांख्यमतनिरासेन ब्रह्मण एव कारणत्वमिति व्यवस्थापनपराणि बहूनि, भगवत्पादभाष्यमपि तेषां सर्वेषां जगज्जन्मपरतयैव प्रवृत्तत्वादजातवादं स्वानभिमतं मन्यन्ते। सति चैवं गौडपादकारिकाया उपनिषद्विरुद्धार्थत्ववर्णनम्, भगवत्पादानामपि स्वीयभाष्यान्तरविरुद्धार्थवर्णनं च चिन्त्यमूलमिति वक्तव्यम्। अतो गौडपादकारिकाया अजातशान्तिप्रकरणगताजातवादो बौद्धानामिति निगदव्याख्यातम्।

### अजातवादस्य वेदान्ते ब्रह्मसूत्रादिना समर्थनम्

सत्यं वेदान्तवाक्यानि, ब्रह्मसूत्राणि, तत्र भगवत्पादभाष्यं च जगतो जन्मादिवादमुपबृंहयन्ति, परन्तु तदिदं तेषामजातवादस्य न विरुद्धम्। जगतो जातादिवादः स्वभावतः स्वभावेन जगदात्मना, तदजातवादस्तु स्वभावेन सद्रूपेण। द्विरूपं हि जगत्-कार्यात्मकम्, कारणात्मकं च। तत्र कार्यात्मना जगतां ब्रह्मणश्च कारणस्य परस्परं भेदः, कारणात्मना तु सदात्मना जगतोऽजातवादः। तदुक्तं भास्करेण स्वीये ब्रह्मसूत्रभाष्ये—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना" इति। तत्र कार्यात्मना जातवादो जगतो मायापरिणामत्वमादाय, यदभिप्रेत्य सत्तात्रैविध्यवादो भगवत्पादैर्मन्यते। यत्र भोक्तृभोग्यलक्षणो व्यावहारिको विभागः—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इति सूत्रे वर्णितः। सदात्मनाऽजातवादस्तु सद्विवर्तनामा परमार्थतः सद्रूपव्यतिरेकेण कार्य-कारणविभाग विषयः, यत्र सद्व्यतिरेकेण कार्यं किमपि नास्ति। व्यक्तं चेदं "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यधिकरणभाष्ये—"अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः। न त्वयं विभागः परमार्थतोऽस्ति यस्मात्तयोः कार्य-कारणयोरनन्यत्वमवगम्यते। कार्यम्=आकाशादिकं बहुप्रपञ्चं जगत् कारणम्=परं ब्रह्म, तस्मात् कारणात् परमार्थतोऽनन्यत्वम्=व्यतिरेकेणाभावः कार्यस्यावगम्यते। कुतः ? आरम्भणशब्दादिभ्यः" इति। अत्र भामती="तदनन्यत्वमिति नाभेदं ब्रूमः, किन्तु भेदं व्यासेधामः" इति व्याचष्टे। अतो ब्रह्मसूत्राणि तद्भाष्यं वा भगवत्पादानां न कार्याणां सद्भावेनाजातवादं निरुणद्धि, किन्तु स्पष्टं तं समर्थयति। ब्रह्मसूत्राणि तु वेदान्तवाक्यमूलानि, वेदान्तवाक्यव्याख्यानत्वादिति। सद्विवर्तवादमिमं श्रुत्यर्थोपबृंहणेन समर्थयन्ति तन्मूलानि वेदान्तवाक्यानि—'वाचारम्भणं विकारो नामधेयं,

मृत्तिकेत्येव सत्यमित्याह' इत्यादीनि । अत्र मृत्तिकापदं भिक्षुपादप्रसारणन्यायेन मुख्यं कारणं "सदेव सौम्येदमग्र आसीत्" इति प्रकृतसद्रूपपरमेव इति सद्भावेन परमार्थत्वमजातवादम्, कार्यात्मना स्वरूपतोऽभावं च गोचरयति । अतः सदात्मना परमार्थत्वं तत्फलभूतोऽजातवादश्च स्पष्टमत्रावगम्यते ।

## अजातवादस्य मूलं सद्विवर्तवादः

गौडपादकारिकाऽप्यजातवादं परिणामवाददृष्ट्या, आरम्भवाददृष्ट्या चाजातवादं सांख्यानां वैशेषिकाणाञ्च परस्परविवादविषयमुपक्षिप्य तदुभयसम्मतमजातवादं सद्विवर्तवादावलम्ब नेन साधयति । बौद्धानामजातवादः प्रपञ्चस्य स्वभावेन, न तु सद्भावेन सद्विवर्तवादपर्यवसायिना । तत्र गौडपादकारिकाऽलातशान्तिप्रकरणेऽजातवादं "सद्भावेन हीदं सर्वम्" इति सद्भावेन प्रस्तौति न तु स्वभावेन । पण्डितप्रवरश्रीविधुशेखरभट्टाचार्यास्तु "सद्भावेन हीदं सर्वम्" इति कारिकायाः स्वभावेनेदं सर्वमिति परिवर्तनेन गौडपादाचार्याणामपि बौद्धानामिव स्वभाववादः सम्मत इति सद्भावेनेति पदस्य स्थाने स्वभावेनेति पाठभेदमवलम्ब्य समर्थयन्ति । अतो गौडपादकारिकाया अजातवादो नानौपनिषदः, न वाऽसौत्रः, न वा भाष्यविरुद्ध इति निगदव्याख्यातम् । सर्वथा त्वद्वैतपदार्थः "मायामात्रमिदं सर्वमद्वैतं परमार्थतः" इति श्लोके द्वैतमिथ्यात्वपरमेव, न त्वन्यथाप्रत्ययराहित्यपरं द्वैताभिमतम् । द्वैताभावश्च द्वैतस्य सत्तात्रैविध्यवादे परमार्थतो द्वैताभावमभिप्रेत्य, सद्विवर्तवादे तु सद्रूपेणाजातवादमभिप्रेत्यैव । यत्रैकसत्तावादः 'सन् घटः' इत्यादौ सत्तादात्म्यमात्रमभिप्रेत्य । इदमेवाभिप्रेत्य कृत्स्नप्रसक्त्यधिकरणे "श्रुतेश्च शब्दमूलत्वात्" इति सिद्धान्तव्याख्यानावसरे भगवत्पादानां भाष्यम्—

"नह्यविद्याकल्पितेन रूपभेदं सावयवं वस्तु सम्पद्यते । नहि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन ब्रह्म परिणामादिसर्वं व्यवहारास्पदत्वं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणाममवतिष्ठते, वाचारम्भणत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्य" इति । "अतश्च न निरवयवत्वं ब्रह्मणो दुष्यति । न चैवं परिणामश्रुतिः परिणामप्रतिपादनार्था, तत्प्रतिपत्तौ फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा; तत्प्रतिपत्तौ फलावगमात्" ( भगवत्पादभाष्यम् ) इति ।

अत्र न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्थेतिभाष्येण परिणामाख्यविकारप्रतिपादने न श्रुतिनां तात्पर्यम्, किन्तु परिणामश्रुतेरप्यपरिणामप्रतिपत्तावेव तात्पर्यावगमात् स्पष्टमजातवादं भगवत्पादाः समर्थयन्ति, किन्तु तत् सद्विवर्तवादमभिप्रेत्य, न तु व्यावहारिकभोक्तृभोग्यलक्षणविभागसहव्यवहारदशामभिप्रेत्य ।

तदयमत्र निष्कर्षः—सृष्टिश्रुतयः, जन्मादिश्रुतयः तत्पराणि ब्रह्मसूत्राणि, भगवत्पादभाष्यं च सत्तात्रैविध्यवादमभिप्रेत्य, गौडपादाभिमताजातवादस्त्वेकसत्तावादमाश्रित्येत्युभयस्य जगज्जातवादस्य च जगदजातवादस्य वेदान्तब्रह्मसूत्रतद्भाष्यादिभिर्न विरोधलेशः।

## पुराणादावद्वैतवादः

अत्राद्वैतपदं बहुषु वेदान्तवाक्येषु द्वैतमिथ्यात्वमभिप्रेत्य प्रवृत्तमिति परीक्षितम्। पुराणेषु बहुष्वद्वैतवादो द्वैतमिथ्यात्वमभिप्रेत्य, तद् द्वैताभाववद्ब्रह्मपरमिति श्रीभागवतादिपर्यालोचनेनाद्वैततत्त्वशुद्ध्यादौ विवेचितम्। विशेषतो विष्णुपुराणगतस्य—

प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥

इति वाक्यमवलम्ब्यैव।

## गीतायामद्वैतवादः

भगवद्गीताऽपि नवमेऽध्याये—

मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥

इति द्वैतवति ब्रह्मणि द्वैताभावरूपप्रपञ्चमिथ्यात्वनिरूपणमुखेन "नेह नानाऽस्ति किञ्चन" इति श्रुत्यर्थमुपबृहयति। अतः प्रपञ्चमिथ्यात्वमभिप्रेत्यैवाद्वैतपदं द्वैतोपलक्षितब्रह्मपरम्, द्वैताभावात्मकब्रह्मपरं वा। तत्राद्ये द्वैताभावमात्रमतात्त्विकम्, द्वितीये तु द्वैताभावोऽपि ब्रह्मस्वरूपत्वात् तात्त्विक इति सिद्धम्।

## द्वैतमिथ्यात्ववाद एवाद्वैतवादः, न तु द्वैताभिमतोऽन्यः

इदमेवाभिप्रेत्याद्वैतसिद्धिः—"अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वाद् द्वैतमिथ्यात्वमेव प्रथमं प्रतिपादनीयम्" इति प्रस्तौति। अत्र "द्वैतमिथ्यात्वमेवे" इत्येवकारेण द्वैतसत्यत्वं व्यावर्त्यते, यत्तु "यतो वा इमानि भूतानि जायन्ते" इत्यादिजगत्कारणब्रह्मपराणां वाक्यानां जगत्सत्यत्वं विना नोपपत्तिरिति भावेन द्वैतिनो मन्यन्ते, तत्र पूर्वोद्धृततदनन्यत्वाधिकरणकृत्स्नप्रसक्त्यधिकरणगतानां भाष्यवाक्यानां गौडपादीयप्रकरणचतुष्टयगतानां कारिकाणाञ्च पर्यालोचनेन सृष्टौ जगज्जन्मादिवाक्यानां तात्पर्याभावावगमात्तेषां मुख्यं तात्पर्यं द्वैतमिथ्यात्व एवेति भगवत्पादाशयः श्रीमधुसूदनसरस्वत्याद्वैतमिथ्यात्वमेव प्रथममुपपादनीयमिति वाक्येन सूच्यते। अनेनाभिधेयप्रधानाद्वैतसिद्धिर्भगवत्पादाभिमतं द्वैतमिथ्यात्वं प्रधानमवलम्ब्येति निरूपितम्।

## अद्वैतसिद्धेर्लक्ष्यं द्वैतमिथ्यात्वमेव

अभिधानप्रधाना त्वद्वैतसिद्धिस्तामधिकृत्य निबद्धो निबन्धविशेषो न केवलं द्वैतमिथ्यात्वमात्रम् किन्तु तदुपष्टम्भकतत्तत्प्रक्रियाभेदान्, न्यायामृतादिनिरस्यमानान् तत्तन्मतनिरसनेन यथान्यायामृतक्रमं निरस्यति। अत्रैवकारपदेन द्वैताभिमतं ब्रह्मकारणताप्रयुक्तं जगत्सत्यत्वं वार्यते। द्वैतिनो हि "जन्माद्यस्य यतः" इति जगत्कारणत्वेन ब्रह्मणो लक्षणाद् ब्रह्मकार्यं जगत् सत्यमेव, न मिथ्येति मन्यन्ते।

इदमत्रालोचनीयम्—ब्रह्मकारणत्वप्रयुक्तं जगतः कार्यत्वमिव कथं तत्सत्यत्वमपीति। नहि कार्य-कारणभावः कार्य-कारणयोः सत्त्वप्रयुक्त इति—

अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः॥

इति खण्डनखण्डखाद्यं विवेचयति।

न च जगतः सत्यत्वं प्रमाणावसेयम्। 'सन् घटः' इत्यादि प्रत्यक्षं प्रत्यक्षस्य वर्तमानशूरत्वात् तादात्विकं सत्त्वमेव गोचरयति। तत्तु सत्तात्रैविध्यवादे व्यावहारिकं यावद् घटादिकम्, न त्वखण्डाकारज्ञानानन्तरकालिकमपि तत्। घटादीनां मिथ्यात्वं ह्यखण्डाकारसाक्षात्कारप्रयुक्तं न तत्प्राक्कालिकसत्त्वेन विरुध्यते।

### प्रत्यक्षस्य द्वैतमिथ्यात्वाविरोधः

प्रत्यक्षं कालान्तरे मिथ्यात्वं न गृह्णातीत्येतावता न प्रत्यक्षबाध्यत्वं मिथ्यात्वस्य; अन्यथा "स एष यजमानोऽञ्जसा स्वर्गं लोकं याति" इति श्रुत्या मरणानन्तरलोकान्तरगमनं श्रौतं देहात्मैक्यज्ञानेन प्रत्यक्षेण विरुद्धत्वादप्रमाणमापद्येत। शबरस्वामी तु शाबरभाष्ये आत्मवादप्रकरणे प्रत्यक्षश्रौतविज्ञानयोर्भिन्नविषयकत्वात् प्रत्यक्षेण नात्रागमबाध इति भाषते। "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति वेदान्तानां कर्माङ्गकर्तृस्तावकतयाऽप्रामाण्यमाशङ्क्य "अधिकोपदेशात्तु" इति सूत्रेण वेदान्तानामसंसार्यात्मपरत्वात्, कर्माङ्गस्य च जीवस्य संसारित्वाद् भिन्नविषयत्वेन नार्थवादत्वमिति विवेचितम्।

भाष्यकारोऽपि—"यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते; तथाप्यशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदं नाधिकारेऽपेक्ष्यते" इति कर्मकाण्ड-वेदान्तयोर्विषयभेदं व्यवस्थापयति। अयमेव न्यायः प्रत्यक्षावगतसत्यत्व-मिथ्यात्वयोरपि मिथ्यात्वात् संसारित्वादेरिव भावित्वात् सत्त्वस्य चासंसारित्वादेरिवात्तत्कालिकत्वान्न बाध्य-बाधकभावः।

प्रपञ्चसत्यत्वं हि सद्विवर्तवादे सत्तादात्म्यमात्रं 'सन् घटः" इत्यादिप्रत्यक्षावसेयं न मिथ्यात्वविरोधि, किन्तु तदनुकूलमेव; अन्यथा सत्तादात्म्यमात्रेण सत्यत्वे

प्रपञ्चस्य द्वैतमतेऽसत्ख्यातिवादे शुक्तिरूप्यादीनाम्, किं बहुना ? शशशृङ्गादीनामपि सत्प्रतीतिस्वीकारात् सत्यत्वमापद्येत। अतः प्रपञ्चसत्यत्वे श्रुतिविरुद्धे न प्रत्यक्षप्रमाणेन मिथ्यात्वबाधः। श्रुतिरपि जगत्कारणत्वादिना यावत्कार्यंसत्त्वमेव तस्य सत्त्वं गमयति, न तु तद्बाधदशायामपि। अतः प्रपञ्चमिथ्यात्वे प्रत्यक्षादिबाधशङ्काया अनवसरात् प्राधान्येन प्रपञ्चमिथ्यात्वस्य वेदान्तविषयत्वे न कापि बाधा।

किञ्च, मिथ्यात्वपरस्यागमस्य प्रत्यक्षेण विरोधः कथमिति विवेचनीयम्। तत्र तयोर्विरुद्धविषयत्वं नोपपद्यते। प्रपञ्चः सत्य इति ज्ञानं 'सन् घटः' इति ज्ञानमेव यदि तर्हि तन् तेन सत्तादात्म्यस्यैवागमात् 'सदेवेदम्', 'अद्वितीयम्' इत्यध्यारोपापवादन्यायेन घटादेरध्यारोपितत्वस्य, अपवादस्य च निरूपणाद् न विरुद्धम्। ब्रह्म सप्रपञ्चमिति ज्ञानमध्यारोपसिद्धम्। तत्र प्रत्यक्षेण ब्रह्म सप्रपञ्चमिति यदि ज्ञानं स्यात्, तर्हि ब्रह्म निष्प्रपञ्चमिति ज्ञानस्य तेन विरोधः स्यात्। न च ब्रह्म सप्रपञ्चमिति कस्यापि ज्ञानं सम्भवति। तदुक्तं भाष्ये—

"ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणानर्थकतैव प्राप्ता ? न; इन्द्रियाविषयत्वेन सम्बन्धाग्रहणात्। स्वभावतो विषयविषयाणीन्द्रियाणि न ब्रह्मविषयाणि। सतीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा सम्बद्धं कार्यमिति गृह्येत। कार्यमात्रं तु गृह्यमाणं किं ब्रह्मणा सम्बद्धम्, किमन्येन केनचिद्वा सम्बद्धमिति न शक्यं निश्चेतुम्। अनेन स्पष्टमवगम्यते—ब्रह्म सप्रपञ्चमिति ज्ञानं न कस्यापीति, इति न प्रत्यक्षेण सप्रपञ्चत्वज्ञानेन ब्रह्मनिष्प्रपञ्चत्वज्ञानस्य श्रौतस्य बाधः। सन् घट इति हि ज्ञानं न ब्रह्म सप्रपञ्चत्वज्ञानम्, तत्तु बाधायां सामानाधिकरणात् प्रपञ्चमिथ्यात्वस्य साधकत्वेन, न बाधकम्।

वस्तुतस्तु आगमस्य प्रत्यक्षेणान्येन वा प्रमाणेन विरोधशङ्का, तत्परिहारश्च पूर्वमीमांसायामर्थवादाधिकरणे सूत्रकारैस्तद्भाष्यकारादिभिश्च सम्यगेव विवेचितः। तत्र प्रपञ्चमिथ्यात्वसत्यत्वविषयेऽपि तेनैव न्यायेन गतार्थत्वान्न तच्छङ्का, परिहारो वा कर्तव्यः।

### प्रत्यक्षस्य श्रुतिबाधकत्वशङ्कापरिहारयोः पूर्वमीमांसामूलकत्वम्

तत्र हि "शास्त्रदृष्टविरोधाच्च" इति सूत्रेण शास्त्रविरोधेन, दृष्टविरोधेन, शास्त्रदृष्टविरोधेन चार्थवादानाम्—"न चैतद्विद्मो ब्राह्मणा वा स्मोऽब्राह्मणा वा" इति, "को हि तद्वेद यदमुष्मिल्लोकेऽस्ति वा न वा" इत्यादावप्रामाण्यमाशङ्कितम्। अत्रापि वेदान्तानां प्रत्यक्षविरोधेनागमविरोधेनेव चाप्रामाण्यमाशङ्क्यते। तत्रार्थवादाधिकरणसिद्धान्तन्यायेनैवात्रापि परिहारः सम्भवतीति नात्र वेदान्तेषु प्रत्यक्षादिविरोधशङ्कापरिहारादिकं सप्रयोजनम्।

तदीयसिद्धान्तन्यायो हि—"अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्यात् । शब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत" इति सूत्रसिद्धः । अयमत्र सूत्रार्थः—

याऽऽत्मवपोत्खेद—मनस्तेय-वागनृतवादादिष्वनुपपत्तिरुक्ता, सा नात्र प्ररोचनार्थत्वपक्षे । तत्र स्तेयादेः प्रयोगेऽनुष्ठाने ह्यर्थवादानां विवक्षिते प्रत्यक्षतया तन्निरोधश्रुत्या विरोधः स्यात् । न चार्थवादरूपस्य शब्दस्यार्थस्त्वनुष्ठानरूपो दृश्यत इति । अनेनेदमवगम्यते—अनुष्ठापकयोर्निराकाङ्क्षवाक्यार्थयोर्विरोधेऽप्रामाण्यशङ्काऽवसरः, न तु निराकाङ्क्षवाक्यार्थनिष्पत्तेः पूर्वं पदार्थान्वयदशायां विरोधः किञ्चित्करः । तत्रार्थवादो विधिना पदैकवाक्यत्वेन प्रामाण्यात् पदस्थानीयः । अतः पदार्थान्वयदशायां तत्र विरोधो न किञ्चित्कारः । सावकाश निरवकाशादिन्याया हि निराकाङ्क्षयोरेव प्रमाणयोर्विरोधशङ्कापरिहारार्थाः । न च प्रपञ्चमिथ्यात्वपरस्यागमस्यप्रपञ्चसत्यत्वपरस्य प्रत्यक्षादेरागमस्य च विरोधो वाक्यार्थयोः । प्रपञ्चसत्यत्वपराणि हि 'सदेवेदम्' इत्यादि वाक्यानि सर्वाणि 'नेह नानाऽस्ति किञ्चन' इत्यादिनिषेधा पेक्षितप्रतियोगिसमर्पकत्वान्निषेधवाक्यपदस्थानानि न स्वयं निराकाङ्क्षवाक्यार्थपराणि । अतः पदस्थानीयेन सप्रपञ्चत्वपरेण वाक्येन तदप्रपञ्चत्वपरवाक्यार्थस्य न विरोधः । अतः प्रत्यक्षागमादिविरुद्धत्वात् प्रपञ्चमिथ्यात्वश्रुतिर्नान्यथानयनमर्हति । अतोऽद्वैतपदार्थो बहुतरश्रुतिसिद्धः । माण्डूक्योपनिषत्सजातीयं तत्समानविषयं च "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमव्यवहार्यग्राह्यालक्षणाचिन्त्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवं चतुर्थं मन्यन्ते" इति रामतापनीयोपनिषद्याम्नायते । तत्र ह्येतद्वाक्यानन्तरमेव—"स आत्मा स विज्ञेयः सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धुरो द्वैतरहित आनन्दरूपः" इति स्पष्टं द्वैताभावपरतयैवाद्वैतपदं श्रुत्यैव व्याख्यायते । अतो भगवत्पादाभिमतमद्वैतमुक्तश्रुतिसिद्धं द्वैताभाववद्ब्रह्मपरम्, यदेवाधिकृत्य "अथातो ब्रह्मजिज्ञासेति' शारीरिकमीमांसायां बादरायणाचार्येण सूत्रितम् ।

## ब्रह्मपदार्थो जिज्ञासासूत्रे मण्डनाभिमतो जीवात्मतत्त्वम्

अत्र ब्रह्मपदार्थो मण्डनाभिमतजीवाश्रयाज्ञानवादमनुसृत्य जीवात्मतत्वमेवेति भामती । तन्मते हि विशिष्टो जीवोऽहंपदार्थो बद्धः, अज्ञानोपहितं जीवात्मस्वरूपं कारणं तदनुपहितमात्मस्वरूपं शुद्धिमिति सिद्धान्तबिन्द्वादौ निष्कृष्टम् । विवरणमते तु यत्र मायाविशिष्टं ब्रह्मकारणम्, तत्प्रतिबिम्बो जीव इत्यादि मन्यते. तत्र 'जन्माद्यस्येति' सूत्रसिद्धं जिज्ञास्यं ब्रह्म जीवात्मतत्त्वातिरिक्तमेव ।

## जीवात्मतत्त्वब्रह्मपदार्थतायास्तैत्तिरीयोपनिषद्भाष्यमूलत्वम्

तत्र प्रथममतेऽज्ञानं जीवाश्रितं तदुपाधिर्वा, निमित्तकारणमात्रमज्ञानावरणेन प्रपञ्चात्मना ब्रह्मविवर्तमात्रतयोपयुज्यते । द्वितीये तु यत्र मायायाः, ब्रह्मणः, उभयस्य

चोपादानत्वम् ? तत्र मायापरिणाम्युपादानम्, तदाश्रितं तद्विषयो वा ब्रह्म विवर्तोपादानम् ।

अयमपरो विशेषः—यत्प्रथममतेऽन्तःकरणादिबाह्यप्रपञ्चान्तस्य सर्वस्याधिष्ठानमज्ञानोपहितं जीवात्मतत्त्वम् । द्वितीयमते तु मायाविशिष्टं जीवात्मतत्त्वतोऽतिरिक्तं ब्रह्मतत्त्वं सर्वप्रपञ्चाधिष्ठानं ततो विलक्षणम् । अस्य प्रस्थानद्वयस्य मूलं "तदधीनत्वात्" इति सूत्रगतम्—"अविद्यात्मिका हि बीजशक्तिः परमेश्वराश्रिता मायामयी महासुषुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः" इति भाष्यम् । तत्र "यदा तु जीवो महान्, तदाप्यव्यक्तत्वाज्जीवमात्रस्य "महतः परममव्यक्तम्" इत्युक्तम् । 'अविद्या ह्यव्यक्तम्" इति भाष्यम् । आद्यं भाष्यं द्वितीयस्य प्रस्थानस्य, प्रथमं तु मूलं द्वितीयस्येति विवेकः ।

अत्रेदं मीमांस्यम्—ब्रह्ममीमांसायां जिज्ञास्यतया प्रथमसूत्रे विवक्षितं ब्रह्मस्वरूपं किं मण्डनाभिमतजीवात्मतत्त्वम् , उत पञ्चपादिकाभिमतब्रह्मतत्त्वमिति ।

(i) अपरमत्र जिज्ञास्यम्—कं वाऽभिधेयं शारीरकपदस्याभिप्रेत्य ब्रह्ममीमांसाया अस्याः शारीरकमीमांसेति समाख्या ।

(ii) अपरो विचारस्तु यद्यात्मतत्त्वातिरिक्तं ब्रह्मतत्त्वमभिप्रेत्य ब्रह्मजिज्ञासा, तर्हि कथमध्यासभाष्यस्य केवलमहमध्यासमात्रनिरूपणपरस्य ब्रह्ममीमांसया संगतिः ? तथात्मतत्त्वमात्रजिज्ञासायां प्रस्तुतायामध्यासभाष्येणाहमध्यासमात्रं साधयित्वा "जन्माद्यस्य यतः" इति कथं जगत्कारणत्वेन ब्रह्मलक्षणम् ? उभयत्रोपनिषदां ब्रह्मसूत्राणाञ्च कथमेकवाक्यता ?

(iii) अद्वैतसिद्धेः स्वारस्यं किमात्मतत्त्वमात्रतात्मजिज्ञासायामुताम्यत्र, आहो उभयत्र ।

ब्रह्मजिज्ञासायां प्रस्तुतं ब्रह्मतत्त्वं जीवात्मतत्त्वमात्रमपि, तदतिरिक्तं ब्रह्मतत्त्वमपि. परन्तु प्रस्थानभेदेन, अतः सर्वा शारीरिकमीमांसा, उपनिषदश्च केवलजीवात्मतत्त्ववाक्यपरतयाऽपि प्रस्थानभेदेन योजनमर्हन्ति ।

### शारीरकपदार्थः, शारीरकमीमांसापदस्वारस्यं च मण्डनमते

तत्र प्रथमे मते शारीरकपदार्थः शरीरे भवः शारीरः जीवात्मा, ततोऽज्ञातार्थे कन् प्रत्ययात् शारीरकपदं सन्दिग्धात्मतत्त्वपरमिति केवलजीवात्मतत्त्वसन्देहनिरासार्थं ब्रह्मजिज्ञासा । ब्रह्मपदेनापि जीवात्मतत्त्वमेव विवक्ष्यते । एतदेवात्र भामत्यपि—'अथ यदसंदिग्धमप्रयोजनञ्च न तत्प्रेक्षावत्प्रतिपित्सागोचरः । यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ता वा । तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । तथाहि—बृहत्त्वाद् बृंहणत्वाद्वाऽऽत्मैव ब्रह्मेति गीयते । स चायं आकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदंकारास्पदेभ्यो

देहेन्द्रिय-मनो-बुद्धि-विषयेभ्यो विवेकेनाहमित्यसंदिग्धाविपर्यस्तापरोक्षानुभवसिद्धः, इति न जिज्ञासास्पदम् । न हि जातु कश्चिदत्र सन्दिग्धे—'अहं वा, नाहं वेति' इति । न च विपर्यस्यति—नाहमेवेति । न चाहं 'कृशः', 'स्थूलः', गच्छामि' इत्यादिदेह-धर्मसामानाधिकरण्यदर्शनाद्देहालम्बनोऽयमहङ्कार इति साम्प्रतमित्या" दिना "न 'चाहम्' इति सर्वजनीनस्फुटान्तरानुभवसमर्थितात्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम्, अनुभवविरोधात् । न ह्यागमाः सहस्रमपि घटं पटयितुमीशते । तस्मादनुभवविरोधादुपचरितार्था एवोपनिषदः" इत्यन्तेन 'अहं'-मध्यासमाक्षिप्य "इदमत्राकूतमित्या"दिना "भवेदेतदेवं यदि 'अहम्' इत्यनुभव आत्मतत्त्वं प्रकाशेत । न त्वेतदस्ति । यथा हि समस्तोपाध्यनवच्छिन्नानन्तानन्द-चैतन्यैकरसमुदासीनमेकमद्वितीयात्मतत्त्वं श्रुति-स्मृतीतिहास-पुराणेषु गीयते । न चैतान्युपक्रम-परामर्शोपसंहारैः क्रियासमभिहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति । शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम्" इत्यादिना 'स्थूलोऽहम्', 'अन्धोऽहम्' 'गच्छामि' इत्यादयोऽप्यध्यासतया व्याख्याताः । तदेवमुक्तेन क्रमेणाहंप्रत्यये पूतिकूष्माण्डीकृते, भगवती श्रुतिरप्रत्यूहाकर्तृत्व-भोक्तृत्व-सुख-दुख-शोकाद्यात्मत्व-महमनुभवप्रसज्जितमात्मनो निषेधमर्हतीति सिद्धान्तयन्ती जीवात्मतत्त्वमेव ब्रह्म-पदार्थ इति विवेचयति ।

इदं हि जीवाश्रयोऽज्ञानमिति मण्डनसिद्धान्तम्, तदभिमतं विशिष्टोपहिता-नुपहितभेदभिन्नमात्मतत्त्वं मण्डनाभिमतं मूलीकृत्येति मण्डनपृष्टसेवी वाचस्पतिः । अत्र विशिष्टं जीवमादाय पूर्वपक्षः, अनुपहितं संविन्मात्रमादाय सिद्धान्तः । "जन्माद्यस्य यतः" इति सूत्रम्, "यतो वा इमानि भूतानि जायन्ते" इत्याद्युपनिषदश्चोपहितं जीवात्मतत्त्वं कारणमभिप्रेत्य ।

## जीवात्मतत्त्वब्रह्मतायां तैत्तिरीयोपनिषत्स्वारस्यम्

एतन्मते हि "ब्रह्मविदाप्नोति परम्" इति ब्रह्मवल्लयामनुपहितं ब्रह्म प्रस्तुत्य, "तदेषाऽभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन्" इति सत्य-ज्ञानानन्तरूपेणानाद्यविद्याकल्पितभेदभिन्नेन जीवात्मतत्त्वमज्ञानोपहितं कारण-त्वेन प्रस्तुत्य, तस्यैव "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिना सर्व-जगत्कारणत्वमुपक्षिप्य, तदेवाऽन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयात्मना जाग्रत्स्वप्नविशिष्टाहमर्थंजीवात्मनोपसंहृत्य, तदधिष्ठानतयाऽनुपहितं जीवात्मतत्त्वं 'ब्रह्मपुच्छं प्रतिष्ठेति" विविच्य, तदेव विपरीतक्रमेणानन्दवल्ल्यां "यतो वा इमानि भूतानि" इत्यनुकृष्यान्नमयादीनां तत्तत्कारणान्नादिरूपमज्ञानोपहितकारणस्वरूपान्तं निष्कृष्य, तस्यापि "ब्रह्म पुच्छं प्रतिष्टेति" सर्वाधिष्ठानतया प्रस्तुतेऽनुपहिते "ब्रह्म-विदाप्नोति परम्" इति परमप्रकृते शुद्धे ब्रह्मणि पर्यवसानम्—"सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता" इत्युपसंह्रियते ।

इदं च पुच्छं ब्रह्म जीवात्मतत्त्वमेवेत्यानन्दमयप्रकरणान्ते "ब्रह्म पुच्छं प्रतिष्ठे"त्युपसंहारानन्तरं 'तस्यैष एव शारीर आत्मा यः पूर्वस्य" इति वाक्येन जीवात्मतत्त्वमेवेति निर्णीयते। तदनन्तरं "सोऽकामयत बहु स्यां प्रजायेय" इति, "ब्रह्म पुच्छं प्रतिष्ठा "इति नपुंसकब्रह्मशब्देन" प्रस्तुतस्यापि ब्रह्मणः 'सः' इति पुलिङ्गेन तच्छब्देनानुकर्षणान्न जीवात्मतत्त्वातिरिक्तं ब्रह्मात्र मुख्यार्थं इति गम्यते। अतो "जन्माद्यस्य यतः" इति सूत्रस्य ब्रह्मलक्षणार्थं प्रवृत्तस्याप्यज्ञानोपहितजीव-तत्त्वविषयकत्वमेवेति प्रतीयते।

अत्र "सोऽकामयत" इत्यात्मतत्त्वं प्रकृत्य "इदं सर्वमसृजत यदिदं किञ्च" इति सर्वजगत्कारणत्वं यद्वर्णितम्, तदेव "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। "स वा एव पुरुषोऽन्नरसमयः" इत्युपक्रमेऽपि ब्रह्मवल्ल्यामाम्नातम्। एवं चात्मतत्त्वस्यैव ब्रह्मपदार्थत्वमादाय तैत्तरीयोपनिषद् प्रवृत्ता, अध्यासभाष्यमपि। अयं चार्थो भगवत्पादानां दशश्लोक्यापि व्यक्तीक्रियते। इयमत्र दशश्लोकी—

### दशश्लोक्या जीवात्मतत्त्वब्रह्मतायां मूलता

न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः।
अनैकान्तिकत्वात् सुषुप्त्यैकसिद्धस्तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणा-ध्यानयोगादयोऽपि।
अनात्माश्रयोऽहं ममाध्यासहानात् तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात् तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा।
विशिष्टानुभूत्या विशुद्धात्मकत्वात् तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वाऽपरा दिक्।
वियद्व्यापकत्वादखण्डैकरूपस्तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न शुक्लं न कृष्णं न रक्तं न पीतं न कुब्जं न पीनं न ह्रस्वं न दीर्घम्।
अरूपं तथा ज्योतिराकारकत्वात् तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपञ्चः।
स्वरूपावबोधो विकल्पासहिष्णुस्तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

न जाग्रन्न मे स्वप्नको वा सुषुप्तिः न विश्वो न वा तैजसः प्राज्ञको वा।
अविद्यात्मकत्वात् त्रयाणां तुरीयस्तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥

अपि व्यापकत्वाद्धि तत्त्वप्रयोगात् स्वतस्सिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्यत तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥
न चैकं तदन्यद् द्वितीयं कुतः स्यात् न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात् कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ इति ।

अत्र हि "न भूमिर्न तोयमि"त्यादिना "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशद्वायुः" इत्यादिना पञ्चभूततादात्म्यं जाग्रदवस्थान्नमयस्वप्नावस्थ-प्राणमय-मनोमय-विज्ञानमयसुषुप्त्यवस्थानन्दमयातिरिक्तं सर्वाधिष्ठानमनुपहित-मात्मचैतन्यं तत्तदुपाधिविविक्तसंविन्मात्रस्वरूपेणानुसन्धीयते । तत्र "तदेकोऽव-शिवः केवलोऽहम्" इति, "तुरीयं शिवमद्वैतं चतुर्थं मन्यन्ते" इति माण्डूक्योपनिष-दर्थस्तत्तदुपाधिव्यतिरिक्तात्मस्वरूपनिरूपणपरेण. अपरेण भागेन चानुसन्धीयते । तथा चात्मतत्त्वमनुपहितमेव सर्ववेदान्तसिद्धमिति भगवत्पादैः प्रतिपाद्यते । तद-त्रान्तिमे श्लोके 'न चैकम्" इति, "सर्ववेदान्तसिद्धं ब्रवीमि" इत्यवाङमनसगोचर-त्वं प्रतिपाद्यते ।

अध्यासभाष्यमप्यहमध्यासनिरूपणमात्रेण तदतिरिक्तजगत्कारणत्वाध्यासा-निरूपणेऽप्यात्मानं कृतकृत्यं मन्यते । तदतिरिक्तात्मतत्त्वमेव ब्रह्मतत्त्वमिति पक्षे तु जन्मादिसूत्रेणाध्यासभाष्यविषयस्य ब्रह्मणो लक्षणम्. अहमध्यासभाष्येण त्वहम-ध्यासमात्रनिरूपणमिति भिन्नवाक्यताऽध्यासभाष्यलक्षणसूत्रयोरापद्येत । एवमध्यास-भाष्येण सर्वजगदध्यासानिरूपणाज्जन्मादिसूत्रतद्विषयाः कारणवाक्यानि च न निर्वि-शेषपरतया व्याख्यानमर्हेयुः, इति जीव-ब्रह्मैक्यमेव शाङ्करमतेऽपि वेदान्तार्थः स्यादित्यद्वैतसिद्धान्तस्यौपनिषदत्त्वं मण्डनसिद्धान्ते भाष्याभिमत एव विश्वस्यते । इदमेव तत्त्वं मनसि निधायाद्वैतसिद्धिरपि निबन्धः—

"मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्य-ज्ञान-सुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः ।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥"

इति मङ्गलश्लोकेनोपक्रमते ।

**अद्वैतसिद्धिमङ्गलश्लोकस्य लघुचन्द्रिकादेश्च जीवात्मतत्त्वतायां मूलता**

अयं हि श्लोको ब्रह्मानन्देन लघुचन्द्रिकायामेवं व्याख्यायते, विट्ठलेशेन च । तत्र ब्रह्मानन्दीयं व्याख्यानम्—

"विष्णुः व्यापकं जीवस्वरूपम् । मोक्षं प्राप्त इव स्वयं विजयते । कीदृशो विष्णुर्मोक्षं प्राप्त इव ? अखण्डधीगोचर इति । संसर्गाविषयकमनोवृत्तिविशेषणयी-भूत इत्यर्थः । ननु तादृशधीविषयत्वे मोक्षप्राप्तिं प्रति नोद्देश्यतावच्छेदकत्वसंभवः;

उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेयगतत्वेन व्युत्पत्तिसिद्धस्य प्रकृते बाधात्। यदा हि तादृशधीविषयीभूत आत्मा, तदा तस्य न मोक्षः; तस्याविद्यारूपबन्ध-शून्यात्मरूपत्वाभावात्।

अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥

इति च। अविद्याया अस्तमयः संस्कारादिकार्यरूपेणाप्यनवस्थानात्। सा स्थूलरूपा संस्कारादिरूपा च। तथा च विदेहताकालीनोऽस्तमय एव मुख्यो मोक्षः। ज्ञातत्वोपलक्षित आत्मापि विदेहताकालीन एव। जीवन्मुक्तिकालीनस्य ज्ञातत्वोपहितत्वस्यापि कदाचित् संभवेन ज्ञातत्वेनोपलक्षितत्वस्य सर्वदाऽसंभवात्त-दुपलक्षितस्यैव मोहनिवृत्तित्वम्, जीवन्मुक्तौ संस्कारादिरूपेण मोहसत्त्वात्, स्थूला-ज्ञाननिवृतेस्तत्त्व ज्ञानविशेषादिमनःपरिणामरूपतासंभवेन ज्ञातात्मरूपत्वासं-भवाच्च। न चोक्तविशयत्वक्षण एव तादृशाविद्यास्तमयः सम्भवति; चरमधीरूपवि-द्यावतः क्षणस्याविद्या-तत्प्रयुक्तदृश्यविशिष्टकालपूर्वत्वाभावनियमेन सिद्धस्यावि-द्यास्तमयस्य विदेहताकालीनस्य विद्यावति क्षणे संभवाभावात्, अत आह— "मिथ्याबन्धविधूननेन विकल्पोज्झितः" इति। ब्रह्मात्मैक्याज्ञानरूपबन्धस्य तादृशा-स्तमयेन दृश्यशून्य इत्यर्थः। अत्र बन्धस्य मिथ्यात्वोक्त्वा तदुत्छेदस्य ज्ञानाधी-नत्वज्ञापनेन न ज्ञानोत्पत्तिकालीनत्वमिति ज्ञापितम्। तथा च उद्देश्यतावच्छेद-ककालावच्छिन्नत्वबोधस्यौत्सर्गिकत्वात् सर्गाद्यकालीनद्वयणुकपक्षकजन्यतासम्बधेन कर्तृसाध्यकानुमितौ निरवच्छिन्ने कर्तरि विधेये तादृशकालावच्छिन्नत्वबोधवत् प्रकृते-ऽपि तस्य बाधितत्वान्न तत्र तद्बोधः। अत बन्धविधूननमविद्यातत्कार्यशून्यत्वम्, दृश्यशून्यत्वमनादिसाधारणदृश्यशून्यत्वमिति तयोर्भेदः। विधूननेनेति तृतीया ज्ञापक-हेतौ, न तु कारकहेतौ। नह्यविद्याया अस्तमयो नाम व्यावहारिकध्वंसरूपो विद्या-जन्योऽस्मत्सिद्धान्ते स्वीक्रियते, दृश्यान्तरध्वंसो वा तज्जन्यः! तथा सति तस्य निवर्तकाभावेन "विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतिबोधितस्य विदुषि सर्वदृश्योच्छे-दस्य बाधापत्तेः। तत्त्वज्ञानोत्पत्तिद्वितीयक्षणे हि तत्त्वज्ञानादिसर्वदृश्यनाशोत्पादादुक्त-क्षणद्वितीयक्षण उक्तनाशस्य नाशोत्पत्त्यसंभवः, तत्त्वज्ञानजन्यस्य नाशस्यैव तत्त्वज्ञान-नाशहेतुत्वे स्वीकृतेऽप्युक्तबाधापत्तेस्तादवस्थ्यात्। तत्त्वज्ञानजन्यस्य दृश्यान्तरनाशस्य तत्त्वज्ञानस्य च यौ नाशौ तयोर्नाशकाभावात्तयोः स्वनाशकत्वस्वीकारेऽप्युक्तापत्ति-तादवस्थ्यात्, अप्रामाणिकानन्तनाशकल्पने गौरवाच्च। तस्माच्चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावनियम एव स्वीक्रियते, न तु नाशहेतुत्वम्।

यत्तु बद्धपुरुषैः प्रातीतिकमस्तमयादिकं कल्प्यते न तस्य नाशहेतुत्वम्। यद्यपि ज्ञापकहेतुत्वमपि दृश्यास्तमयं प्रत्यविद्यास्तमयत्वेन नास्ति; जीवन्मुक्ते

प्रातीतिकाविद्यास्तमये तद्व्यभिचारित्वात्, जीवन्मुक्ते प्रातीतिकस्य दृश्यास्तमयस्य कल्पने नियमाभावात्; तथापि दृश्यास्तमयकालीनत्वरूपेणाविद्यास्तमयस्य दृश्यास्तमयं प्रत्यस्त्स्त्येवेति ध्येयम्।

अथवा मास्तु प्रातीतिकं तादृशाविद्यास्तमयादिकम्. अविद्योच्छेदोपलक्षितः पूर्णानन्दरूप आत्मा मोक्षः। अविद्योच्छेदश्च तदीयस्थूलसूक्ष्मरूपाश्रयकालपूर्वत्वाभावः सर्वदृश्याश्रयकालपूर्वत्वाभावरूपेण दृश्योच्छेदेन व्याप्यः; मोक्षस्य दृश्योच्छेदोपलक्षितात्मरूपकैवल्यरूपत्वात्।

यद्वा—ननु दृयोच्छेदस्तत्त्वज्ञानोत्पत्तिक्षणे न संभवति; अनादिदृश्यानां ज्ञानानुच्छेद्यत्वात्, अविद्या-तत्कार्ययोरेव तदुच्छेद्यत्वात्। तत्राह—मिथ्याबन्धेति। मिथ्याबन्धविधूननेन विकल्पोज्झित इति योजना। तथा च अविद्योच्छेदेन दृश्योच्छेदवानित्यर्थलाभात् —अविद्योच्छेदस्य दृश्योच्छेदव्याप्यतालाभेनाविद्यारूबन्धस्य मिथ्यात्वोक्त्याऽविद्याप्रयुक्तदृश्यमात्रस्य मिथ्यात्वलाभेनानादिदृश्यानामपि ज्ञानोच्छेदलाभादुक्तव्याप्यतायाः सम्भवः। तथा च सर्वदृश्योच्छेदोपलक्षितपरमानन्दरूपात्मरूपकैवल्यप्राप्तिस्तत्त्वज्ञानोत्तरमेव, न तत्क्षणे, इति नोद्देश्यतावच्छेदकधीविषयत्वकालीनत्वं विधेये मोक्षलाभे विवक्षितम्। उज्झित इति निष्ठप्रत्ययेनोच्छेदस्यातीतकाले मोक्षप्राप्तेर्लाभादत्यन्ताभावत्वविशिष्टरूपस्योच्छेदस्यापि दृश्यत्वात्तादृशे मोक्षकाले तस्यातीतत्वादिति भावः।

मोक्षं कीदृशम्? तत्राह-परमेत्यादि। निरतिशयापरिच्छिन्नसुखमात्रस्वरूपमित्यर्थः। ननुमुक्तस्य प्रकाशकाभावेन प्रकाशत इत्यर्थकं विजयत इत्ययुक्तम् तत्राह—स्वयमिति। प्रकाशसम्बन्धकं विनैवेत्यर्थः। नन्वेवं विजयत इत्यनुपपन्नम्; तस्यापि प्रकाशसम्बन्धार्थकत्वात्। स्वयमित्यस्य प्रकाशान्तरं विनेत्यर्थकत्वेन विजयत इत्यस्य स्वात्मप्रकाशसम्बन्धार्थकत्वेऽपि विष्णोर्दृश्यत्वेन मिथ्यात्वापत्तिः। अथ विजयत इत्यस्योत्कर्षान्तिरमेवार्थः, न तु प्रकाशसम्बन्धः। तदा प्रकाशमानन्दरूपत्वालाभेन मोक्षस्य प्रयोजनत्वालाभः। तत्राह—सत्यज्ञानसुखात्मक इति।

यथात्मन आनन्दत्वेनानन्दरूपं मोक्षं प्राप्त इवेत्युक्तम्, अत एवानन्दावाप्तिबोधकश्रुतेरनावृतानन्दैक्यमर्थः, न त्वानन्दसम्बन्धः, तथा प्रकाशरूपत्वेन विष्णोः प्रकाशत इत्यस्यानावृतचिदभेदबोधकत्वम्, न तु प्रकाशसम्बन्धार्थकत्वम्। तथा च दृश्यत्वाभावान्न मिथ्यात्वापत्तिः। न च प्रकाशरूपतोक्तिर्व्यर्थेति वाच्यम्; अपरोक्षव्यवहारयोग्यसुखस्यैव पुरुषार्थत्वम्। उक्तयोग्यत्वं चानावृतचिद्रूपत्वेन तादृशचित्तादात्म्येन वा। तत्रोक्तरूपानन्दस्यान्यथाभावेऽप्याद्यमस्तीति ज्ञापनार्थत्वेन तस्याः सार्थक्यात्। ननु ज्ञानस्याज्ञानतत्कार्यविरोधितायाः शुक्त्यादिज्ञानस्थले दृष्टतया युक्तत्वेऽप्यनादिसाधारणदृश्यमात्रविरोधित्वमदृष्टत्वान्न युक्तम्, तत्राह—मायेत्यादि। मायया कल्पितं प्रयुक्तम्। अत एव मृषाभूतं यन्मातृतामुख प्रमातृत्वादिरूप द्वैत-

मात्मभिन्नं तदभिन्नप्रपञ्चाश्रय इत्यर्थः तथा च शुक्त्याद्यज्ञानस्येव चिन्निष्ठतत्सम्बन्धादेरपि तत्प्रयुक्तत्वेन शुक्त्यादिज्ञानस्य तद्विरोधिताया दृष्टतया ब्रह्मज्ञानस्यापि ब्रह्माज्ञानप्रयुक्तदृश्यमात्रविरोधित्वं युक्तमिति भावः मृषाद्वैतादिज्ञानस्य तद्विरोधिताया दृष्टतया ब्रह्मज्ञानस्यापि ब्रह्माज्ञानप्रयुक्तदृश्यमात्रविरोधित्वं युक्तमिति भावः। मृषाद्वैताश्रयत्वोक्त्या मुमुक्षावानधिकारीं सूचितः। नन्वखण्डब्रह्माकारज्ञानस्य दृश्योच्छेदकत्वे आपातज्ञानरूपस्यापि तस्य तत्स्यात्, तत्राह--श्रुतिशिखोत्थेति। श्रुतीनां कर्मोपासनाकाण्डरूपाणामुपकार्यत्वेन शिखेवमुख्यम् यन्महावाक्यं तज्जनितेत्यर्थः। तथा च निष्कामकर्मोपासनानुष्ठापनद्वारकचित्तशुद्धिचित्तैकाग्रताद्वारोक्तश्रुत्युपक्रतवाक्यजन्यज्ञानस्यैव तदिति भावः।

अत्र विट्ठलेशीयं विवरणं यथा--वयं तु विष्णुः जीवः वस्तुतः सत्यज्ञानसुखात्मकोऽपि सन् (अज्ञाते कन्) मायकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयो जातः, मुक्तोऽपि सन् अज्ञानेन बद्धत्वेन भ्रान्त इत्यर्थः। ततश्च वस्तुतो बद्धस्य तत्त्वेन भ्रान्तस्य मुमुक्षासंभवात् सः मुमुक्षुः सन् गुरुमनुसृतः, ततस्तदुपदिष्टश्रुतिशिखोत्थाखण्डधीगोचरोऽभूत्। निष्कामकर्मोपासनानुष्ठानेन शुद्धैकाग्रचित्तः सन् आत्मानं सत्यज्ञानसुखरूपब्रह्मत्वेन साक्षात्कृतवान्। ततश्च मिथ्याबन्धविधूननेन विकल्पोज्झितो मिथ्याबन्धापगमात् तत्प्रयुक्तविकल्पेन दुःखेन रहितः सन् परमानन्दैकतानात्मकं मोक्षं प्राप्त इव। अवास्तवसम्बन्धभ्रमस्यैव सत्त्वात्, मोक्षरूपस्य तत्सम्बन्धाभावोच्चवेत्युक्तम्। ईदृशः सन् विजयते स्वप्रकाशरूपोत्कर्षवानित्यर्थः।

### लघुचन्द्रिकादितात्पर्यनिष्कर्षो जीवात्मतत्त्वब्रह्मतायाम्

अयं हि श्लोकः—विष्णुः "ब्रह्मविदाप्नोति परम्" इति प्रस्तुतमनुपहितं शुद्धमात्मतत्त्वम्, अनाद्यविद्याप्रयुक्तज्ञाताज्ञातविभागवत्सत्यज्ञानानन्तरूपमज्ञानोपहितं कारणस्वरूपतामापन्नम्, मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः, आकाशाद्यानन्दमयान्ततादात्म्यापन्नं जाग्रत्स्वप्नसुषुप्त्यवस्थाविशिष्टजीवात्मस्वरूपम्, अखण्डधीगोचरः, तदुपाध्याद्यविद्यास्थाने प्रमाणजन्यवृत्त्युपधानेनानाद्यविद्यानिवृत्त्या तत्प्रयुक्तज्ञाताज्ञातविभागशून्यम्, मिथ्याबन्धविधूननेन विकल्पोज्झितः अखण्डाकारवृत्त्याऽनाद्यज्ञाननिवृत्त्या विगलितत्प्रयुक्तसर्वविकल्पहीनम्, तत एव मोक्षं प्राप्त इव मुक्तात्मस्वरूपं स्वयं विजयते। अनिर्वचनीयस्याज्ञानस्य तत्प्रयुक्तस्य चाभावेन ज्ञाताज्ञातविभागशून्यत्वेन प्रमाणव्यापारं विनैव स्वप्रकाशं भवतीति पूर्वोक्तं तैत्तरीयमर्थमेव--संगृह्णाति। विष्णुपदेनात्मतत्त्वव्यतिरिक्तब्रह्मतत्त्वविवक्षायां मोक्षं प्राप्त इवेति नान्वितं स्यात्; बन्धस्य तत्राप्रसक्तत्वात्, इति पूर्वोक्तरीत्या माण्डूक्योपनिषदर्थस्यागमवैतथ्याद्वैतालातशान्तिप्रकरणचतुष्टयात्मकगौडपादकारिकोपबृंहितस्य जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयातीतात्मतत्त्वस्यैव तैत्तरीयोपनिषद्यपि प्रतिपादनान्माण्डूक्योपनिषदेकवाक्यताऽप्युक्तमङ्गलश्लोकस्य तैत्तरीयोपनिषदश्च सिद्ध्यति।

श्रुतिशिखोत्थाखण्डधीगोचर इति पदेनाखण्डार्थज्ञानस्य वेदान्तोत्थत्ववर्णनाच्छाब्दापरोक्षत्वं सूच्यत इव, परन्तु भामत्यभिमते शाब्दपरोक्षतावादेऽप्यभिहितान्वयेऽर्थजन्यत्वेऽपि शाब्दबोधस्य शब्दप्रयोज्यत्वमात्रेण शाब्दबोधव्यवहारवद् भामत्यभिमते शाब्दपरोक्षवादेऽपि ध्यानसहकृतमनोजन्यत्वेऽप्यखण्डाकारज्ञानस्य ध्यानस्य शब्दमूलकत्वाच्छाब्दिकत्वव्यवहार उपपद्यते। तत्रायं निष्कर्षः—भामतीमते निदिध्यासनमङ्गि, श्रवणमनने अङ्गे; प्रस्थानान्तरे श्रवणमङ्गि, मनननिदिध्यासने अङ्गे। मतद्वयेऽपि ब्रह्मणोऽखण्डाकारसाक्षात्कारो मोक्षसाधनमिति समानम्। अधिकं तृतीयपरिच्छेदसमालोचनावसरे व्यक्तीभविष्यति।

### प्रश्नोपनिषदो जीवात्मतत्त्वब्रह्मतायां मूलता

तत्रालातशान्तिप्रकरणान्ते "नैतद् बुद्धेन भाषितम्" इति वर्णनात्तस्य सौगतसिद्धान्तपरत्वं भवतीति पण्डितप्रवरश्रीविधुशेखरशास्त्रिणां मतमिति केचनाक्षिपन्ति, परन्तु नात्र बुद्धपदं सौगतपरम्, किन्तु तत्त्वज्ञानिपरम्। तेनानुपहितमात्मतत्त्वमिदं सन्मात्रं वाङ्मनसागोचरं संविन्मात्ररूपमवाच्यम्, लक्ष्यं वेत्येव बोध्यते, यदेव प्रश्नोपनिषदि षष्ठप्रश्नोपसंहारे "अवचनेन प्रोवाच" इति वक्तुमशक्यमित्येव विवक्ष्यते। अज्ञानादिसर्वंबन्धनिवृत्तौ केवलचिन्मात्रे ज्ञाताज्ञातविभागशून्ये यत्र—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वा मुक्तिरित्येषा परमार्थता॥

इति परमार्थतः सर्वाभावः प्रतिपाद्यते। इदमेव मूलीकृत्य—

चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः॥

इति। न चात्र शशविषाणादिवदसत्त्वं द्वैतप्रपञ्चस्य मन्यते, किन्त्वविद्यानिवृत्त्या सर्वाभाव एव, शशविषाणादितुल्यत्वाभावात्। अतो "नैतद् बुद्धेन भाषितम्" इति वचनस्य प्रश्नोपनिषदः षष्ठप्रश्नेनैकवाक्यतया प्रश्नोपनिषदेकवाक्यताप्यनुपहितात्मपरमात्मतायामुपपद्यते।

### कठवल्ल्या जीवात्मतत्त्वब्रह्मतायां मूलता

कठवल्ली तु—

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः॥

इति प्रश्नोत्तरं प्रक्रम्य विशिष्टं जीवस्वरूपं शरीरातिरिक्तमसंसार्यनुपहितमात्मतत्त्वञ्च -

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥

इत्याम्नाति । न चात्रासंसार्यात्मतत्त्वातिरिक्तं ब्रह्मतत्त्वम् । 'येयं प्रेते विचिकित्से'ति प्रश्नो हि जीवात्ममात्रविषयः; न तु तदतिरिक्तब्रह्मविषयः; "अन्यत्र धर्मादन्यत्राधर्माद्" इत्यस्यापि प्रकृतसंसार्यात्मतत्त्वस्यासंसारिस्वरूपत्वविवक्षायामेव तात्पर्यात्, अन्यथा "अन्यत्र धर्मादन्यत्राधर्मात्" इत्यस्य जीवात्मतत्त्वातिरिक्तब्रह्मपरतायामयं प्रश्नस्तुरीयः स्यात् । न च तुरीयः प्रश्नः कोऽपि स्वतन्त्रो नचिकेतोऽभिमतः । नचिकेता हि—

देवैरत्रापि विचिकित्सितं पुरा
न हि सुविज्ञेयमणुरेष धर्मः ।
अन्यं वरं नचिकेतो वृणीष्व
मा मोपरोधीरति मा सृजैनम् ॥

इति वरान्तराय बहुधा प्रलोभितोऽपि—

देवैरत्रापि विचिकित्सितं किल
त्वञ्च मृत्यो यन्न विज्ञेयमात्थ ।
वक्ता चास्य त्वादृशोऽन्यो न लभ्यः
नान्यो वर एतस्य तुल्यः कश्चित् ॥

न वित्तेन तर्पणीयो मनुष्यो
लप्स्यामहे वित्तमद्राक्ष्म चेत्वा ॥

जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव ॥

इति वरान्तरं प्रत्याचष्टे । सति चैवम्—"अन्यत्र धर्मादन्यत्राधर्मात्" इत्यत्र चतुर्थप्रश्नकल्पनायां प्रकरणविरोधोऽपि ।

"आनुमानिकमप्येकेषाम्" इत्यधिकरणे भगवत्पादा अपि कठोपनिषदं सांख्यपरमाशङ्क्य "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इति सूत्रेण प्रश्नत्रयोपपत्तिं तत्रोपपादयति । इदञ्च तत्रत्यं भाष्यम्—"इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वम्, ज्ञेयत्वं वा, यस्मात्त्रयाणामेव पदार्थानामग्निजीव-परमात्मनामस्मिन् ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते" इति ।

"तत्राग्निविषयक एकः प्रश्नः, द्वितीयस्तु जीवविषयकः, तृतीयस्तु परमात्मविषयः । प्रतिबचनमपि—

लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्वा यथा वा ॥

इत्यादिनाऽग्निविषयम्,

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।
यथा च मरणं प्राप्य आत्मा भवति गौतम॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथाश्रुतम्॥

इति व्यवहितं जीवविषयम् —

"न जायते म्रियते वा विपश्चित्" इत्यादि बहुप्रपञ्चं परमात्मविषयं निर्दिश्यते। नैवं प्रधान विषयः प्रश्नोऽस्ति, अतोऽपृष्टत्वादनुपन्यसनीयत्वं तस्येति।

अत्राह—योऽयमात्मविषयः प्रश्नः 'येयं प्रेते विचिकित्सा मनुष्येऽस्ति" इति, किं स एवायम्—'अन्यत्र धर्मादन्यत्राधर्मात्" इति पुनरनुकृष्यते किं वा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यत इति। किञ्चातः? स एवायं प्रश्नः पुनरनुकृष्यत इति यद्युच्येत, द्वयोरात्मविषययोः प्रश्नयोरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्रश्नौ, इत्यतो न वक्तव्यं त्रयाणां प्रश्नोपन्यासाविति। अथान्योऽयमपूर्वः प्रश्न उत्थाप्यत इत्युच्यते, ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोषः, एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति।

अत्रोच्यते—नैवं वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कञ्चित् कल्पयामः वाक्योपक्रमसामर्थ्यात्। वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिरासमाप्तेः कठवल्लीनां लक्ष्यते। मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन् वरान् प्रददौ। नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्याम्, तृतीयेनात्मविद्याम्। तत्र यदि 'अन्यत्र धर्मात्" इत्यन्योऽयमपूर्वः प्रश्न उत्थाप्येत ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पना स्यात्।

ननु प्रष्टव्यमेतत्—अपूर्वोऽयं प्रश्नो भवितुमर्हति। पूर्वो हि प्रश्नो जीवविषयः 'येयं प्रेते विचिकित्सा मनुष्येऽस्ति नास्ति" इति विचिकित्साभिधानात्। जीवस्य धर्मादिगोचरत्वाद् न—'अन्यत्र धर्मात्' इति प्रश्नमर्हति। प्राज्ञस्तु धर्माद्यतीतत्वात् 'अन्यत्र धर्मात्' इति प्रश्नमर्हति। प्रश्नच्छाया च न समाना लक्ष्यते; पूर्वस्यास्तित्व-नास्तित्वविषयत्वाद् उत्तरस्य धर्माद्यतीतवस्तुविषयत्वात्। तस्मात् प्रत्यभिज्ञानाभावात् प्रश्नभेदः, न पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेत्, न; जीव-प्राज्ञयोरेकत्वाभ्युपगमात्। भवेत् प्रष्टव्यभेदात् प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात् स्यात्, न त्वन्यत्वमस्ति 'तत्त्वमसि' इत्यादिश्रुत्यन्तरेभ्यः। इह च 'अन्यत्र धर्मात्' इत्यस्य प्रश्नस्य प्रतिवचनं 'न जायते म्रियते वा विपश्चित्' इति जन्म-मरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति। सति हि प्रसङ्गे प्रतिषेधो भागी भवति। प्रसङ्गश्च जन्म-मरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति, न परमेश्वरस्य।

यत्तु प्रश्नच्छायावैलक्षण्यमुक्तम्, तददूषणम्; तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात् पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनोऽस्तित्वं पृष्टम्, उत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति। अनेन चेदमवगम्यते—जीवस्यैवोपहितानुपहित-भेदेन भेदं गृहीत्वाऽनुपहितमात्मतत्त्वमेव कठवल्लीप्रतिपाद्यमिति।

### अत्राधिकरणभाष्यं जीवात्मतत्त्वब्रह्मतायां मूलम्

'अत्ता चराचरग्रहणात्' इत्यत्र—

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥

इत्यत्र कठवल्यां प्रतिपाद्यमानोऽत्ता संहर्ता, न तु भोक्ता जीवोऽन्यो वेति सिद्धान्तितम्। तत्र हि वाक्ये सः अत्ता यत्र तन्न सुविज्ञेयमिति प्रतिपादनात् सृष्टि-स्थिति-संहारकर्तृज्ञानोपहितं कारणमात्मतत्त्वमपि विशिष्टो जीव इवानुपहित आत्मतात्त्वे पर्यवस्यतीति ज्ञाप्यते तच्चानुपहितमसंसार्यात्मतत्त्वमेवेति तत्रापि व्यक्तम्।

### गुहां प्रविष्टावित्यधिकरणभाष्यं जीवात्मतत्त्वब्रह्मतायां मूलम्

'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इतिसूत्रव्याख्यानावसरेऽपि विज्ञानात्म-परमात्मानाविहोच्येयातामिति सिद्धान्तं प्रस्तुत्य, तयोः परस्परविलक्षणत्वात् संसा-रित्वासंसारित्वयोर्जीवपरमात्मनोश्छायातपवद् वैलक्षण्यमुक्तम्। अधिकमन्यत्र। सर्वथा कठवल्ल्या अप्यनुपहितजीवात्मतत्त्वपरमात्मतायामेव तात्पर्यम्।

एतन्मते हि जीवेश्वरपरमात्मनां पक्षान्तरे जीवात्मेश्वरशुद्धब्रह्मस्वरूपा-णामिव भेदाभेदव्यवस्था त्वियम्। तत्र प्रथममते जीवेश्वरयोर्भेदो घटाकाश-मठा-काशयोरिव। अभेदस्तु तयोरेव विगलितोपाध्योरिव। विशिष्टानुपहितात्मनोरुपहि-तानुपहितात्मनश्चोपाधितदभावाभ्यां भेदाभेदौ; यथा घटाकाश-महाकाशयोर्महा-मण्डपाकाश-महाकाशयोः। उपाधिसम्बन्धेन तयोर्भेदः, तदभावे त्वभेदः।

### गौडपादकारिका-माण्डूक्य-बृहदारण्यकादीनां जीवात्मतत्त्वब्रह्मतायां मूलता

गौडपादकारिकाया अद्वैतप्रकरणममुमर्थमुपबृंहयति। अत्र 'तत्त्वमसि" इति वाक्यार्थोऽपि विशिष्टं जीवमुद्दिश्य अनुपहिताभेदवर्णनं प्रथमे विशेषणत्यागमात्रेण, अन्यत्र तूभयत्राऽपि विशेषणत्यागेनेति त्वन्यदेतत्। माण्डूक्य-कठवल्ली-तैत्तिरीयो-पनिषच्छान्दोग्योपनिषदामप्यत्रैव तात्पर्यमुपगम्यते।

तत्रापि 'सदेव सौम्येदमग्र आसीत्' इति सद्रूपं कारणं प्रस्तुत्य, 'अनेन जीवे-नात्मनानुप्रविश्य' इति तस्य विशिष्टजीवात्मनाऽभेदं परामृश्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति सत्पदार्थमात्मस्वरूपतया निष्कृष्य 'तत्त्वमसि' इति नव-कृत्वोऽभ्यस्यते।

बृहदारण्यकोपनिषत्तु — "तदेतत्प्रेयः पुत्रात्प्रेयो मित्रात्प्रेयः" इति पुत्रादिभ्यः प्रेमास्पदत्वमहमर्थस्यात्मनः प्रस्तुत्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्युपक्रम्य—"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि अरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति ।" इत्यनुपहितमात्मतत्त्वमेव प्रतिपादयतीति वाक्यान्वयाधिकरणे शारीरिकमीमांसायां व्यवस्थापितम् । तत्र हि पुत्र-वित्तादिकं भोग्यजातं सर्वं वित्तमात्मार्थतया भवतीति वर्णनाद्भोक्तैवात्माऽहमर्थः प्रतीयत इति पूर्वपक्षयित्वा परमात्मोपदेश एवायमिति परमात्मैवात्रात्मेति सिद्धान्त्यते । तत्र जीवात्मविषयतया पूर्वपक्षः, परमात्मविषयतया च सिद्धान्त इति स्वीकारे प्रश्नोत्तरयोर्वैयधिकरण्यमापद्येत । अतो जीवस्यैव संसारित्वासंसारित्वविशेषकृतं भेदमादाय पूर्वोत्तरपक्षाविति वक्तव्यम् । अतो वाक्यान्वयाधिकरणं तदुपपादयति बृहदारण्यकोपनिषच्च न जीवात्मतत्त्वातिरिक्तं किमपि सूचयति । किं बहुना ? "अथातो ब्रह्मजिज्ञासा" इति प्रस्तुतं ब्रह्म पूर्वोक्तैः कारणैरज्ञानोपधानेन कारणात्मतया प्रस्तुत्य "आनन्दमयोऽभ्यासात्" इत्यानन्दमयाधिकरणेनानुपहितासंसार्यात्मतत्त्वमेव तद् ब्रह्मेति परामृश्य प्रथमाध्याये प्रथमपाद इन्द्रप्रतर्दनाधिकरणे "मामेवानुविजानीहि" इत्यादौ मांपदार्थतया विज्ञेयमात्मतत्त्वं "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति शास्त्रजन्याखण्डाकारप्रत्ययवेद्यमनुपहितमात्मतत्त्वमेवेत्युपसंहरति ।

### ब्रह्मसूत्रभाष्यभागान्तरमपि जीवात्मतत्त्वब्रह्मतायां मूलम्

"शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः' इति सूत्रोपक्षिप्तं वेदान्तानां कर्माङ्गकर्तृस्तावकतयाऽर्थवादत्वम्, "अधिकोपदेशात्तु" इति सूत्रेणासंसार्यात्मतत्त्वस्यैव वेदान्तप्रतिपाद्यत्वादनवसरं सूचयन् सूत्रकारो जीवात्मतत्त्वमेवानुपहितं सर्ववेदान्ततात्पर्यविषयं सूचयतीति प्रागुक्तम् ।

### मुक्तात्मस्वरूपप्रकरणं जीवात्मतत्त्वब्रह्मतायां मूलम्

"सम्पद्याविर्भावः स्वेन शब्दात्" इति स्वेन रूपेणाभिनिष्पत्तिं मुक्तस्य प्रतिज्ञाय, कथं पुनर्मुक्त इत्युच्यते ? इत्याशङ्क्य, नैष दोषः; यत आत्मैवात्र ज्योतिश्शब्दात् प्रकरणे ग्रहीतुं शक्य इति प्रतिपादितम् । अन्यान्यपि सूत्राणि तद्भाष्याणि, तत्तदुपनिषद्वाक्यानि चानुपहितस्य जीवात्मतत्त्वस्यैव परब्रह्मरूपत्वमवगमयन्तीति स्पष्टं तत्र तत्रोल्लिखितम् ।

"अथातो ब्रह्मजिज्ञासा" इति ज्ञेयं ब्रह्म प्रस्तुत्य तस्य जगत्कारणत्वं लक्षणसूत्रेण "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च" इति भोगमात्रसाम्यलिङ्गेन मुक्तामुक्तस्वरूपोपसंहारेण च ब्रह्मसूत्राणां सविशेषब्रह्मवाद एव तात्पर्यमिति शङ्का

तु जगत्कारणत्वस्याज्ञेयत्वात्कारणवाक्यानां सर्वेषामध्यारोपापवादन्यायेन निर्विशेष-ब्रह्मतत्त्वबोध एव तात्पत्पर्यमिति, जगद्व्यापारवर्जमिति सगुणोपासनफलेनैवोपसंहारात्, ब्रह्मज्ञानफलस्य सम्पाद्याविभाव इत्यादिनाऽनुपहितात्मस्वरूपमात्रताया निर्देशेनोपसंहाराच्च न सूत्राणामुपक्रमोपसंहारादिभिः सविशेषे पर्यवसाने तात्पर्यमुन्नेतुं शक्यम् ।

## लघुचन्द्रिकातात्पर्यनिष्कर्षः

लघुचन्द्रिका हि "अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात्" इत्येतद्व्याख्यानावसरे सर्वकार्योपादानत्वबोधकश्रुतेरपि लक्षणवाक्यविधया निःश्रेयससाधननिर्विकल्पज्ञानजनकत्वेऽपि तत्र तादृशनिश्चयस्य सर्वद्वैततादात्म्यविशिष्टधीपूर्वकत्वात्, सर्वतादात्म्यस्यैव ब्रह्मणि सर्वविषयकत्वरूपत्वात् सर्वोपादानत्वस्य ब्रह्मणि स्वात्मकसर्वजनकरूपत्वात्, "एकमेवाद्वितीयम्" इति, 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपम्" इति श्रुतिद्वये लक्षणादिवृत्त्या द्वैतवत्परब्रह्मनिष्ठस्यावच्छिन्नवृत्तिकान्यत्वरूपत्रैकालिकत्वविशिष्टात्यन्ताभावस्य प्रतियोगि द्वैतमिति धीरूपो मिथ्यात्वनिश्चय इत्युपपादनेन जगत्कारणत्वं ज्ञेयस्योपास्यस्य वा ब्रह्मणो न स्वरूपमिति ज्ञाप्यते; अन्यथा जगत्कारणत्वस्यापि स्वरूपलक्षणत्वे "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" इति मुक्तस्यात्मनस्तत्क्रतुन्यायेन जगद्व्यापारोऽपि स्यात्, इति तन्निषेधो नोपपद्यते । अत एव "विकारावर्त्ति च तथा हि स्थितिमाह" इत्यनेन यथा न निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्ति, यथा परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते, एवं सगुणेऽपि निरवग्रहैश्वरमनवाप्य सावग्रह एवावतिष्ठन्त इति सावग्रहैश्वर्यप्रतिपादनं मुक्तस्येति प्रतिपादनमुपपद्यते । ज्ञेयस्वरूपान्तर्गतत्वे तु जगद्व्यापारस्य सगुणोपासकस्यापि तद्भावापत्तौ जगद्व्यापाराद्यापद्येत । अतः सृष्टिवाक्यानां सृष्टौ न तात्पर्यम्, किन्तु निर्विशेषवाक्यशेषतया तटस्थलक्षणविधया, अध्यारोपापवादविधया च निर्विशेष एव पर्यवसानम् ।

## आनन्दमयाधिकरणादिकमपि जीवात्मतत्त्वब्रह्मतायां मूलम्

आनन्दमयाधिकरणोपक्रमे हि भगवत्पादानामिदं भाष्यम्—"द्विरूपं हि ब्रह्मावगम्यते–नामरूपविकारभेदोपाधिविशिष्टम्, तद्विपरीतं च सर्वोपाधिविवर्जितम्" इति द्विरूपं ब्रह्म प्रस्तुत्य "तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकभावलक्षणः सर्वो व्यवहारः । तत्र कानिचिद् ब्रह्मण उपासनान्यभ्युदयार्थानि कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्मसमृद्ध्यर्थानि । तेषां गुणविशेषोपाधिभेदेन भेदः । एक एव तु परमात्मेश्वरस्तैस्तैर्विशेषैर्विशिष्ट उपास्यो यद्यपि भवति; तथापि यथागुणोपासनमेव फलानि भिद्यन्ते" इत्युपासनाप्रकरण एव गुणानां विवक्षा, ज्ञानप्रकरणे तु सद्योमुक्तिकारणमात्मज्ञानमुपाधिविशेषेणोपदिश्यमानमप्यविवक्षितोपाधिसम्बन्धम्,

ज्ञानप्रकरण उपाधिविशेषाणां गुणविशेषाणां वाऽध्यारोपापवादन्यायेनैवाविवक्षेत्युपसंहरति। अतः कारणवाक्यानां पर्यालोचनया ब्रह्मणः सप्रपञ्चत्वं न सत्यमिति वक्तुं शक्यते, प्रत्युत तन्मिथ्यैव। अतोऽद्वैतसिद्धेर्द्वैतमिथ्यात्वसिधिपूर्वकत्वाद् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयमित्युक्तम्। उपासनापरेषु वाक्येषूपासनोपयोगितया फलविशेषसाधकतया निर्दिष्टा गुणा आहार्यारोपविषयत्वाद् वाग्धेनुत्वादिवत् सत्या न भवितुमर्हन्ति। वेदान्तानामर्थवादत्वमिति वदन्तोऽपि मीमांसकाः सगुणस्य, निर्विशेषस्य वा ब्रह्मणोऽसतोऽप्युपासनपरत्वं स्वीकुर्वन्ति। श्रीभाष्यकारादयो भगवत्पादाश्च समन्वयाधिकरणे तदसहत्वमसहमानास्तन्मतं निरस्यन्ति।

पदार्थतत्त्वनिर्णयकारा द्वितीयपरिच्छेदोपक्रमे मीमांसकानां निर्गुणोपासनमपि सम्मतम्, परन्तु तदसत्यत्वमात्रं तत्र विशेष इति वदन्तो भगवत्पादानां श्रीभाष्यस्य वा पूर्वपक्षमनुमन्यन्ते। अतो जगत्स त्यत्वे जगत उपास्यकोटौ प्रवेशेऽध्यारोपापवादन्यायेन ज्ञेयकोटौ प्रवेशने न सत्यत्वमवसातुं शक्यते। तदेवं जीवात्मतत्त्वमेव ब्रह्ममीमांसायां ज्ञेयतया प्रतिज्ञातमिति मण्डनसिद्धान्तं वाचस्पतिसिद्धान्तं वाऽवलम्ब्याद्वैतसिद्धिः प्रवर्तते मङ्गलश्लोकपर्यालोचनयेति। न चैतावता प्रस्थानान्तरे तेषामनादरः। तदपि हि शाब्दापरोक्षवादादिप्रसङ्गेन ब्रह्माज्ञानाश्रयत्ववादादिसमर्थनेन च तत्र तत्रोपपाद्यते। तथाप्यादरातिशयः मण्डनसिद्धान्त इति प्रतिभाति

### शारीरकमीमांसापदस्य मण्डन-विवरणमतद्वयाविरोधः

शारीरकमीमांसेति ब्रह्ममीमांसानामापि जीवात्मतत्त्वपरमात्मतायामेव स्वरसम्, अज्ञातार्थे कन्प्रत्ययेन शारीरस्यैव सन्दिग्धस्यात्र जिज्ञासनात्। प्रस्थानान्तरेऽपि शारीरकपदं शरीरपदस्योपाधिपरत्वान्मायोपहितब्रह्मपरतया योजयितुं शक्यम्, न चात्र श्रीभाष्याद्यभिमतशरीरशरीरिभावेन शारीरपदव्युत्पत्तिः सम्भवति; तदभिमतस्य शरीरलक्षणस्य दुर्निरूपत्वात्, तस्यान्तर्यामिब्राह्मणादावुपाधिपरतया युक्तत्वसमर्थनाच्चेत्यद्वैततत्त्वशुद्धौ रामानुजश्रृङ्गभङ्गादि समालोचनेन विवेचितम्। सोपाधिकब्रह्मपरत्वेऽपि शारीरकपदस्य कन्प्रत्ययस्तु वेदान्तानां सविशेषपरत्वं वा निर्विशेषपरत्वं वेति सन्देहनिवारणार्थतयोपपद्यते। अतः शारीरकमीमांसेति समाख्या प्रस्थानद्वयस्याप्यनुगुणा।

### अध्यासभाष्यस्य मण्डनमते स्वारस्यम्

अत्राध्यासभाष्यं साक्षाद्यद्यप्यात्मतत्त्वपरमात्मताप्रस्थान एवानुगुणम्; तथापि तदुपलक्षणं सर्वप्रपञ्चाध्यासस्यापीति शारीरकमीमांसाभाष्यवार्त्तिके विवेचितम्। अतः प्रस्थानान्तरेऽपि "जन्माद्यस्य यतः" इति जगत्कारणत्वद्वारा निर्विशेषब्रह्मलक्षणं पूर्वोक्तरीत्या न दुष्यति।

तत्र प्रस्थानद्वयेऽपि ब्रह्मजिज्ञासापरत्वाद् गुणविशेषाणां तत्र तत्र तद्द्वारतया विवक्षितानामध्यारोपं विना नोपपत्तिः। अतः पक्षद्वयेऽप्युपोद्घाततयाऽध्यासभाष्यं प्रवृत्तम्। 'सूचनात् सूत्रमुच्यते" इति वचनाद् ब्रह्मशब्देन निर्विशेषपरेण सूचितोऽध्यासोऽपीत्यध्यासभाष्यस्यापि सूत्रारूढत्वम्। तत्राप्यध्यासभाष्यस्य पूर्वपक्षेणोपक्रमस्तु—"आक्षिप्य भाषणाद्भाष्यम्" इति काव्यमीमांसागतं भाष्यलक्षणं मूलीकृत्य. अथवाऽध्यासभाष्यस्यापि जिज्ञासाधिकरणवर्णकविशेषपरत्वात् वर्णकस्याप्यधिकरणवत् पञ्चावयवकत्वात् पूर्वपक्षभाष्यमत्र संगतम्।

इदमत्राध्यासभाष्यम्—"युष्मदस्मत्प्रत्यगोचरयोर्विषय-विषयिणोस्तमः प्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषियणस्तद्धर्माणां चाध्यासो मिथ्येति भवितुं युक्तम्; तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्माश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्म-धर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदं' 'ममेदमि'ति नैसर्गिकोऽयं लोकव्यवहारः' इति।

अत्राहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति पूर्वपक्ष-सिद्धान्तयोः समानम्। तत्र पूर्वपक्षेऽहमर्थोऽखण्डो मुख्यात्मा, सिद्धान्ते संविन्मात्रं मुख्यात्मा, आत्मानात्मसंवलितोऽहमर्थोऽध्यस्तो मिथ्यात्मेति विवेकः। अध्यासाक्षेपः—सिद्धान्तसिद्धमात्मानात्मसंवलितं रूपमादाय तदसम्भवपरम्। अस्मत्प्रत्ययविषयः संविन्मात्रम्, युष्मत्प्रत्ययविषयोऽनात्मान्तःकरणादिकञ्चाहमर्थान्तर्गतरूपद्वयम्।

अत्राध्यासभाष्ये पूर्वपक्षे "युष्मदस्मत्प्रत्ययगोचरयोर्विषय-विषयिणोरित्यत्र गोचरयोर्विषयविषयिणोरिति गोचरत्वं विषयित्वञ्च संविन्मात्रस्य स्वप्रकाशत्वेन विषयवत्फलव्याप्यत्वाभावेन च, इदमेवाभिप्रेत्य तत्त्वप्रदीपिकादौ स्वप्रकाशत्वलक्षणविचारः सावसरः। इदन्तु अद्वैतसिद्धावपि जडत्वनिरुक्तिप्रकरणे व्यतिरेकविधया, द्वितीयपरिच्छेदे साक्षाच्च समालोचितम्।

**अध्यासभाष्यार्थनिष्कर्षः**

अत्र विषयिपदेन संवित्स्वप्रकाशत्वबोधनात्तस्याज्ञातत्त्वाभावात्किञ्चिद्रूपेण ज्ञातत्वम्, किञ्चिद्रूपेणाज्ञातत्वमित्यधिष्ठानलक्षणाभावादधिष्ठानज्ञानरूपकारणाभावः सूच्यते।

अत्राध्यासे कारणानि चत्वारि—(१) विवेकाग्रहः (२) सादृश्यज्ञानम्, (३) पूर्वपूर्वप्रमाहितसंस्कारः, (४) अधिष्ठानज्ञानञ्च। तत्र 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यनेन विवेकग्रहाद् विवेकाग्रहरूपकारणाभावः सूच्यते, "तमःप्रकाशवद्विरुद्धस्वभावयोः" इत्यनेन सादृश्यज्ञानाभावः सूच्यते। पूर्वपूर्वप्रमाहित संस्कारः कारणमिति

वा तदसम्भवो वा नात्र स्पष्टं प्रतीयते; तथापि सिद्धान्तेऽध्यस्याध्यास इत्यध्यासनिबन्धनोऽध्यास इति सूचनात्पूर्वपूर्वभ्रमाहितसंस्कारोऽपि कारणम्, परं त्वत्र तदभावादध्यासासंभव इति पूर्वपक्षिणा मन्यत इति ज्ञाप्यते।

अत्र सिद्धान्ते यद्यप्यत्यन्तविविक्तयोर्धर्म-धर्मिणोरविवेकेनेति विवेकाग्रहरूपकारणमस्तीति ज्ञाप्यते, अध्यस्याध्यास इति तु प्रागुक्तरीत्या पूर्वपूर्वभ्रमाहितसंस्कारो न कारणमिति सूच्यते। "मिथ्याज्ञाननिमित्तः" इत्यनेन स्वप्रकाशस्याप्यज्ञानविषयत्वादधिष्ठानज्ञानमत्र सूच्यते। सादृश्यज्ञानं कारणमत्र सिद्धान्ते न समर्थ्यते; तत्कारणं तु तन्न नियतं कारणम्। कारणत्वेऽपि कथञ्चन सादृश्यं सुसम्पादमिति 'नविलक्षणत्वा'धिकरणसिद्धान्ते वर्ण्यत इति न दोष इत्यभिप्रेत्य, अथवाऽध्यासभाष्येऽपि "अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति" इत्यत्र रत्नप्रभोक्तरीत्या सादृश्यज्ञानकारणतानियमाभावः सूच्यते।

## भामतीमतेऽपि मूलाविद्यासमर्थनम्

अत्र भामतीमते मूलाविद्या नास्ति। "मिथ्याज्ञाननिमित्तः" इत्यत्र तया मिथ्याज्ञानमध्यास इति व्याख्यानादिति प्रतीयते, परन्तु कल्पतरुः—"अध्यस्य व्यवहारः" इत्यनेन अध्यासस्य व्यवहारहेतुतोक्तौ मिथ्याज्ञाननिमित्त इत्यनेन पौनरुक्त्यमिति केचित्, तन्न; पूर्वपूर्वभ्रमसंस्कृताविद्यया चितः सम्प्रतितनाध्यासक्रियावक्त्वात् इति भ्रमस्यैव मिथ्याज्ञानस्येवाविद्याया अपि कारणत्वव्यवस्थापनान्मूलाविद्यापि भामत्या मण्डनपृष्ठसेविन्या स्वीक्रियते। अत एव ब्रह्मसिद्धौ "अनादिरप्रयोजना चाविद्या" इति मिथ्याज्ञानाद्यतिरिक्ता मूलाविद्यापि साध्यत इति तदीयटीकादौ व्यक्तम्।

## परस्पराध्यासेऽपि ब्रह्ममात्रस्य संसर्गाध्यास एव न स्वरूपाध्यासः, तत्र द्वैतमतनिरासः

प्रायेणात्राद्वैतसिद्धान्तस्य मूलं तत्त्वं ब्रह्मनिष्प्रपञ्चत्वमध्यासभाष्यमवलम्ब्यैव। न्यायसुधया युष्मदस्मत्प्रत्ययगोचरयोरिति भाष्यं यथावदनूद्य तत्र विषयविषयिणोः परस्पराध्यासो यः साधितः स न संगतः। यदि परस्पराध्यासस्तदुक्तरीत्या, तर्हि ब्रह्मणोऽपि मिथ्यात्वमापद्येत। अनात्मनि ब्रह्मसंसर्गमात्राध्यासे तु तेन न्यायेन प्रपञ्चस्यापि संसर्गमात्राध्यासेन निर्वाहान्मिथ्यात्वसिद्धिर्नेत्याक्षिप्यते। ब्रह्मणोऽनात्मनि संसर्गाध्यासमात्रमिति ब्रह्मसिद्धौ विवेचितम्। तस्यैवाक्षेपो न्यायसुधयाऽत्र क्रियते। अनात्मन्यात्मनः संसर्गाध्यासमात्रे मूलं भगवद्गीतायाम्—

मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥

इति श्लोके "न चाहं तेष्ववस्थितः", "मयि भूतानि" इति भगवता स्वयं वर्णनाद् भगवत्येव प्रपञ्चानामध्यासः, सोऽप्यध्यास एव, न तु परमार्थतः सत्त्वेन, इति "न च मत्स्थानि भूतानि इत्युक्तम्। अत आत्मनोऽनात्मनि संसर्गाध्यासमात्रमिति ब्रह्मसिद्धयाशयः। एतदाशयस्तु—संसर्गाध्यासमात्रं संनिकृष्टस्थले, यथा लोहितः स्फटिक इत्यत्र लौहित्यस्य स्फटिके संसर्गाध्यासमात्रम्; पुष्पस्य तत्र सन्निहितत्वात्। यथा प्रपञ्चस्यासन्निकृष्टस्य ब्रह्मणि स्वरूपतोऽध्यासस्तथा संसर्गतोऽपि तथा ब्रह्मणः सन्निकृष्टस्य न स्वरूपतोऽध्यासः, किन्तु संसर्गमात्रस्येत्यद्वैतिनां प्रक्रिया।

अत्र न्यायसुधाया आक्षेपो भाष्याशयविरुद्ध इति स्पष्टमवगमान्न्यायसुधाया नायमाक्षेपो युक्त इति न्यायामृतकारादिभिर्नूनं त्यक्तप्रायः, अतो न्यायामृतकारैरस्याक्षेपस्यात्र नोपक्षेपः, न वा तन्निरासार्थमद्वैतसिद्धेः प्रयत्नः।

न्यायामृतकारा हि सति सम्भवेऽद्वैतसिद्धान्तमद्वैताक्षेपप्रकारं च संगृह्णन्ति मधुसूदनसरस्वत्योऽपि यथावदेव सर्वमाक्षेपं निरस्यन्ति, स्वसिद्धान्यञ्च स्थापयन्ति। तत्र न्यायामृतस्याद्वैतसिद्धेश्च प्रथमपरिच्छेदोऽध्यासभाष्यविमर्शनार्थः, येन सर्वोऽध्यासभाष्यसिद्धान्तः सम्यगालोडितः।

## अद्वैतसिद्धेः प्रथमपरिच्छेदार्थसंग्रहः

तत्राध्यासभाष्यम्—"अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इत्यध्यासमुपसंहरति। अद्वैतसिद्धिरपि प्रथमपरिच्छेदेन पष्टिप्रकरणानि संगृह्णानाऽध्यासभाष्यस्याहमध्यासस्योपसंहारमेवाहमर्थानात्मत्वनिरूपणेन, कर्तृत्वाध्यासोपपादनेन, देहात्मैक्याध्याससमर्थनेन चोपसंहरति। अध्यासस्तत्र—'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः" इत्युपसंहारात्। तत्र मिथ्याप्रत्ययशब्दस्य चानिर्वाच्यपरतया विवरणाद् भामत्यादिष्विवाद्वैतसिद्धौ प्रथमपरिच्छेदे देहात्मैक्याध्यासनिरूपणानन्तरमनिर्वाच्यत्वव्यवस्था संगृह्यते। अध्यासभाष्यसिद्धार्थाः पदार्था अद्वैतसिद्धेः प्रथमपरिच्छेदे संगृहीताः षष्टिसंख्याकाः। त इमे—

१ विप्रतिपत्तिवाक्यस्य विचाराङ्गत्वनिरूपणम्
२ पक्षतावच्छेदकविचारः
३ प्रथममिथ्यात्वनिरूपणम्
४ द्वितीयमिथ्यात्वनिरूपणम्
५ तृतीयमिथ्यात्वनिरूपणम्
६ चतुर्थमिथ्यात्वनिरूपणम्
७ पञ्चममिथ्यात्वनिरूपणम्
८ मिथ्यात्वमिथ्यात्वनिरूपणम्

९ दृश्यत्वनिरुक्तिः
१० जडत्वनिरुक्तिः
११ परिच्छिन्नत्वनिरुक्तिः
१२ चित्सुखीयमिथ्यात्वनिरुक्तिः
१३ सोपाधिकत्वभङ्गः
१४ आभाससाम्यभङ्गः
१५ प्रत्यक्षबाधोद्धारः
१६ प्रत्यक्षप्राबल्यभङ्गः
१७ प्रत्यक्षस्यानुमानबाध्यत्वम्
१८ प्रत्यक्षस्यागमबाध्यत्वम्
१९ अपच्छेदन्यायवैषम्यभङ्गः
२० बह्निशैत्यानुमितिसाम्यभङ्गः
२१ प्रत्यक्षस्याबाध्यत्वे बाधकम्
२२ भाविबाधोपपत्तिः
२३ सत्यत्वानुमानभङ्गः
२४ मिथ्यात्वे विशेषतोऽनुमानानि
२५ आगमबाधोद्धारः
२६ असतः साधकत्वम्
२७ असतः साधकत्वाभावे बाधकम्
२८ दृग्दृश्यसम्बन्धभङ्गः
२९ अनुकूलतर्कनिरूपणम्
३० प्रतिकर्मव्यवस्था
३१ प्रतिकूलतर्कनिराकरणम्
३२ मिथ्यात्वश्रुत्युपपत्तिः
३३ अद्वैतश्रुतेर्बाधोद्धारः
३४ एकमेवेत्यादिश्रुत्यर्थविचारः
३५ ज्ञाननिवर्त्यत्वस्यानुपपत्तिः
३६ दृष्टिसृष्ट्युपपत्तिः
३७ एकजीवाज्ञानकल्पकत्वोपपत्तिः
३८ अविद्यालक्षणम्
३९ अज्ञानप्रत्यक्षोपपत्तिः
४० अविद्यानुमानोपपत्तिः
४१ अविद्यायामर्थापत्तिः
४२ अविद्याप्रतिपादक श्रुत्युपपत्तिः
४३ अविद्याप्रतीत्युपपत्तिः
४४ अज्ञानस्य शुद्धचिन्निष्ठत्वोपपत्तिः
४५ अज्ञानस्य सर्वज्ञाश्रयत्वोपपत्तिः
४६ अज्ञानस्य जीवाश्रयत्वोपपत्तिः
४७ अविद्याया विषयोपपत्तिः
४८ अहमर्थस्यानात्मत्वनिरूपणम्
४९ कर्तृत्वाध्यासोपपत्तिः
५० देहात्मैक्याध्यासनिरूपणम्
५१ अनिर्वाच्यत्वलक्षणम्
५२ अनिर्वाच्यत्वानुमानम्
५३ ख्यातिबाधान्यथानुपपत्तिः
५४ निषेधप्रतिप्रयोगित्वानुपपत्त्याऽनिर्वचनीयत्वसमर्थनम् ।
५५ नासदासीदित्यादिश्रुत्यर्थापत्तिः
५६ असत्ख्यातिभङ्गः
५७ अन्यथाख्यातिभङ्गः
५८ आविद्यकरजतोत्पत्त्युपपत्तिः
५९ भ्रमस्य वृत्तिद्वयत्वोपपत्तिः
६० सत्तात्रैविध्योपपत्तिः

इति प्रथमं प्रवचनम्

## अथ द्वितीयं प्रवचनम्

### वादजल्पादिकथास्वरूपम्

तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम्; तस्यैव मुख्यतात्पर्यविषयत्वात्। द्वैतसत्यत्वं तु व्यावहारिकम्। अध्यारोपापवादविधयाऽध्यारोपितमेव जगत्कारणादिवाक्यैर्विवक्षितमवान्तरतात्पर्यविषयत्वान्न मुख्यं प्रतिपादनमर्हति। व्यावहारिकत्वेऽपि जगत्कारणत्वादीनां सदसद्विलक्षणत्वेऽपि व्यवहारनिर्वाहकत्वमसतोऽपि साधकत्वान्न विरुध्यते।

तत्र प्रतिपादनं गुरु-शिष्ययोर्वादकथया। वादि-प्रतिवादिनोर्भिन्नभिन्नसिद्धान्ताग्रहिणोः परस्परं जयफला जल्पकथा। वितण्डाकथा तु परपक्षनिग्रहमात्रार्था। तत्र गुरु-शिष्ययोर्वादकथायां साधारणधर्मासाधारणधर्माभ्यां विप्रतिपत्तेश्च शिष्यस्य संशयः प्रयोजकः। सा च तत्तद्दर्शनानां प्रकरणप्रस्थानानि, भाष्यप्रस्थानानि च श्रवणविधिमूलानि। जल्पकथायां तु वादिनोरन्येषां वा सभ्यानां निश्चये वादिभ्यां निश्चिते न संशयाभावमुद्दिश्य विचारे प्रवृत्तिः, किन्तु विजयादिकमेवोद्दिश्य; तथापि तत्रापि तात्कालिकसंशयाभावेऽपि सार्वदिकसंशयाभावप्रयोजकसंस्कारदाढर्चाय-आहार्यसंशयः विप्रतिपत्तिवाक्यप्रयुक्तोऽपेक्ष्यते, इति विप्रतिपत्त्यावश्यकता। संशयाभावमुद्दिश्य विचारः सर्वत्र समानः।

### विप्रतिपत्तिवाक्योपयोगः

स च संशय आहार्योऽनाहार्यो वेति त्वन्यदेतत्। आहार्यानाहार्यसाधारणसंशयमात्रं विचारप्रयोजकम्। यद्यपि विचारे विप्रतिजन्यसंशयस्योपकारकत्वम्, अनुमितौ तु न तस्याङ्गत्वम्; तथापि यत्र विमतमिति पक्षनिर्देशः, तत्र पक्षतावच्छेदकसमर्पकतया विप्रतिपत्तेरप्युपयोगः। वर्णात्मकः शब्दो नित्यः, अन्धकारत्वं भाववृत्तिरित्यादिरूपेण विशिष्य तत्तत्पक्षनिर्देशे तु नानुमाने विप्रतिपत्तेरावश्यकता। न्यायामृते इदञ्च विप्रतिपत्तिदर्शनं वस्तुत इत्युक्त्वा विमतमित्येव प्रायेण पक्षनिर्देशाद् विप्रतिपत्तेरावश्यकता सूचिता। न चाद्वैतसिद्धेरपि विप्रतिपत्तेरावश्यकताया-मेवाग्रहः, न वा विमतमित्येव पक्षनिर्देशे। ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हंचिद्भिन्नं मिथ्येत्यनुमानप्रयोगे विवक्षिते तु न विप्रतिपत्तेरावश्यकता।

अत्र न्यायामृतमपि विप्रतिपत्तिमुखेन ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नमित्येव पक्षमुपक्षिपति। एवं पक्षनिर्देशस्तु नाद्वैतनिबन्धे कुत्रापि दृश्यते; तथापि कृत्वाचिन्तया तत्र पक्षतावच्छेदकानां तत्तद्विशेषणानां प्रयोजनं न्यायामृतकारैरिव ब्रह्मानन्दादिभिरपि निष्कृष्यते।

## पक्षतावच्छेदकदलप्रयोजनानि

अत्रानुमा शुक्तिरूप्यं दृष्टान्त इति द्वैत-केवलाद्वैतोभयसम्मतम्। तत्र द्वैत-मतेऽसत्ख्यातिस्वीकारेऽपि शुक्तिरूप्यादेरसतोऽपि शुक्तिज्ञानबाध्यत्वस्य स्वीकाराद् वस्तुतस्तन्मते नामान्तरेण विपरीतख्यातेरेव स्वीकाराच्च शुक्तिरूपदृष्टान्तता, एवमद्वैतमते शुक्तिरूप्यादिस्थलेऽनिर्वचनीयख्यातिः। द्वैतमते त्वसत्ख्यातिर्विपरीत-ख्यातिर्वा। अतः शुक्तिरूप्यादौ सिद्धिसाधनतावारणार्थं 'ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति' इति प्रथमं विशेषणम्।

सत्त्वेन प्रतीत्यर्हत्व मिति विशेषणं तु 'सन् घटः', 'सन् पटः', 'सच्छुक्ति-रूप्यम्' इत्यादाविव सद्विशेष्यकप्रतीतिविषयकत्वं सत्तादात्म्यवत्त्वं वा बोधयति। इदं तु प्रथमविशेषणे दत्तेऽप्यसति बाधावारणार्थम्। यसत्तु शशश्रृङ्गादिकं न सद्विशेष्यकप्रतीतिविषयः, सत्तादात्म्यवद्वा। यद्यपि द्वैतमते शशश्रृङ्गादिकमपि सदिति प्रतीयत इति स्वीक्रियते; तथापि तत्र सत्त्वं शशश्रृङ्गादीनां नाधिष्ठाना-नुवेधेन, किन्त्वाविद्यकवृत्तिविशेषेण। शुक्तिरूप्यादीनां तु तन्मतेऽपि सदिति प्रतीय-मानत्वं न क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावेन, किन्तु शशश्रृङ्गादिसाधारणा-सत्त्वाभावेन। शशश्रृङ्गादीनां त्वसत्त्वमन्यताभावप्रतियोगित्वमात्रेण, न तु क्वचि-दुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावेन; शशश्रृङ्गादीनां कुत्राप्युपाधौ सत्त्वेन प्रतीत्यर्ह-त्वाभावात्। अतः सत्त्वेन प्रतीत्यनर्हत्वाभावरूपं सत्येन प्रतीत्यर्हत्वं शशश्रृङ्गादौ नास्ति, शुक्तिरूप्यादौ तु वर्तते।

इदञ्च सत्त्वेन प्रतीत्यर्हत्वं ब्रह्मसाधारणम्। यद्यपि ब्रह्माखण्डं न सदिति प्रतीयते; तत्राखण्डे सदादिभेदस्य बाधितत्वात्। सदादिभेदेन ज्ञानं ह्यनाद्यविद्या-प्रयुक्तं तद्भेदमादायावृतानावृतभागकल्पनया ब्रह्माधिष्ठानतावस्थायामेव भवति। तदानीं तु सद् ज्ञानं सन् आनन्द इत्येव सत्तादात्म्यज्ञानं चिद्रूपादावपि संभवति। तदयं निष्कर्षः-- सन् घटः' इत्यादौ सति घटादिकम्, सद्भेदोऽप्युभयं कल्पितम्, सद् ज्ञानमित्यादौ तु भेदमात्रमनाद्यविद्यया कल्पितम्।

न च चिद्रूपे ब्रह्मणि सदिति प्रतीयमानेऽपि तस्य स्वरूपतोऽनध्यासान्मि थ्यात्वम्। अतश्चिति बाधः स्यान्मिथ्यात्वानुमानस्येति तद्वारणार्थं चिद्भिन्नत्वं विशेषणम्। चिद्भेदस्तु स्वरूपसम्बन्धमात्रेण शुक्तिरूप्यादावन्यत्र चासति वर्तते, इति न तावन्मात्रेणासत्यपि बाधवारणं सम्भवति। अतो नात्र किमपि विशेषणव्यर्थ-मिति पक्षतावच्छेदकनिष्कर्षः। तदेवं विप्रतिपत्त्यावश्यकतां मिथ्यात्वानुमानपक्ष-तावच्छेदकप्रयोजनानि चाधिकृत्य किञ्चिन्निवेदितम्। अतः परं मिथ्यात्वप्रकार-विशेषाः, अन्ये च तदनुबन्धिनो विषया विमृश्यन्ते।

तत्राद्वैतसिद्धिप्रथमपरिच्छेदे पञ्चमिथ्यात्वनिरूपणम्, मिथ्यात्वमिथ्यात्वनिरूपणम्, दृश्यत्व-जडत्व-परिच्छिन्नत्वादिहेतुनिरुक्तिः, मिथ्यात्वानुमानस्य सोपाधिकत्वभङ्ग इति प्रथमं द्वादशप्रकरणान्यालोचितानि ।

### मिथ्यात्वलक्षणमूलभाष्यादि

तत्र भाष्याभिमतं मिथ्यात्वमध्यासभाष्ये 'अध्यासो नामातस्मिन् तद्बुद्धिरित्यवोचाम' इति भाषणात्, समन्वयसूत्रे 'अविद्यानिवृत्तिपरत्वाच्छास्त्रस्य' इति भाषणाच्च साक्षात् स्वात्यन्ताभाववति प्रतीयमानत्वमिति चतुर्थमिथ्यात्वं चित्सुखाभिमतम्, तस्यैव तुल्यवित्तिवेद्यतया 'प्रतिपन्नोपाधौ त्रैकालिकप्रतिषेधप्रतियोगित्वम्' इति द्वितीयमिथ्यात्वलक्षणेऽपि तात्पर्याल्लघुचन्द्रिकायामुभयत्रापि 'नेह नानास्ति किञ्चन' इति श्रुतेरेव मूलत्वव्यवस्थापनाद् भाष्यारूढे द्वितीयचतुर्थमिथ्यात्वे, ज्ञाननिवर्त्यत्वं तृतीयमिथ्यात्वञ्च ।

तत्र चतुर्थमिथ्यात्वं साक्षात् 'यत्तदद्रेश्यमग्राह्यम्' इत्यारभ्य—'तद्भूतयोनिं परिपश्यन्ति धीराः' इत्याम्नातपरविद्यामूलमिति तु परे। प्रथममिथ्यात्वं तु 'नासदासीन्नो सदासीत्' इत्युपनिषद्भाष्यावगतमिति मन्तव्यम् ।

### सदसद्विलक्षणत्वमिथ्यात्वनिष्कर्षः, तत्र मतान्तरशङ्कानिरासश्च

तत्र प्रथमं मिथ्यात्वं सदसद्विलक्षणत्वम् । यत्तु 'नासदासीन्नो सदासीत्' इति श्रुत्यर्थापत्तिगम्यम् । अत्र हि श्रुतौ सदसच्छब्दौ—'यदन्यद्वायोरन्तरिक्षाच्च तत् सत् । वायुरन्तरिक्षश्चासत्' इति श्रुत्यनुसारेण भूतपरौ; प्रसिद्धपरत्वेऽप्रसक्तप्रतिषेधात् । तदानीमित्यस्य 'नासदासीत्' इत्यनेनैव सिद्धत्वेन 'आसीद् रजः' इत्यस्य वैयर्थ्यात्, अन्यथा 'आनीदवातम्' इति वाक्यशेषाद् ब्रह्मानिर्वचनीय स्यादिति न्यायामृताशयः । अद्वैतसिद्धिकारास्तु—

'नासदासीन्नो सदासीत् तदानीं तम आसीत् तमसा गूढमग्रे प्रकेतम्'

इति श्रुतौ सदसच्छब्दौ प्रसिद्धसदसत्परौ । 'नो सदासीत्' इत्यनेन प्रपञ्चस्य सद्भिन्नत्व उक्ते प्रसक्तस्यासत्त्वस्य निषेधार्थमावश्यकम् । 'आसीन्नजो नो व्योम', इति रजःप्रभृतिनिषेध एवान्वयान्न कस्यापि वैयर्थ्यम्; 'आनीदवातम्' इति वाक्यशेषात् । ब्रह्मणस्तु नानिर्वाच्यत्वम्; श्रुत्यन्तरविरोधादिति प्रतिपादयन्ति ।

अत्र लघुचन्द्रिका—'अननुष्ठेये विकल्पासंभवादसत्त्वस्य सद्भिन्नत्वनिषेधप्रसञ्जितत्वेऽप्यदोषेण 'नासदासीत्'' इति नाप्रसक्तप्रतिषेधः, नापि तदानीम्पदवैयर्थ्यम्; तस्य रजआदिनिषेध एवान्वयात् । रजआदिनिषेधस्तु व्यावहारिक-प्रातिभासिकसाधारणसर्वलोकनिराकरणार्थमिति नाप्रसक्तनिषेधत्वापत्तिः । तथा च "नासदासीदि" त्यप्रसक्तप्रतिषेधासम्भवात् सदसद्भिन्नत्वमासीदित्यर्थ एव तात्पर्यम्; ब्रह्मानिर्वाच्यत्वं तु न सम्भवति" इति विवेचयति। अत्र सदसद्भिन्नत्वं

सत्त्वासत्त्वोभयाभाव इति विवक्षितम्। तत्र सत्त्वं प्रसिद्धमबाध्यत्वम्, असत्त्वं तु क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्। तत्र क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपास त्त्वाभावो ब्रह्मणोऽपि, शुक्तिरूप्यादेरपि। अबाध्यत्वरूपसत्त्वाभावस्तु शशशृङ्गा-देरपि, शुक्तिरूप्योदरपि। अतः शुक्तिरूप्यादेरिव सत्त्वाभावासत्त्वाभावोभयवत्त्वं प्रपञ्चस्य साध्यते। अत्र सदसद्विलक्षणस्यापि प्रपञ्चस्य सत्त्वेन प्रतीत्यर्हत्वं शुक्ति-रूप्यादेरिव नावाधात्वे प्रमाणम्। अतः 'सन् घटः' इत्यादिप्रत्यक्षं न प्रपञ्चमिथ्यात्व-धोविरोधि। 'सन् घटः' इत्यत्र प्रतीयमानः सन् पदार्थोऽधिष्ठानरूपं ब्रह्मैव, यत्तादात्म्यं प्रपञ्चस्य, न तु तत्र सत्त्वमबाध्यत्वम्; विरोधात्। अधिष्ठानानुवेधो हिं 'सन्घटः'इत्यत्र तादात्म्येन प्रतीयते;तत्र सत्तादात्म्यमात्रस्याध्यासात्। एकसत्तावादेन 'सन् घटः' इति प्रतीतेर्व्यवस्था। सत्तात्रैविध्यवादे तु प्रपञ्चगतमेव सत्त्वं 'सन् घटः' इत्येव सदिति प्रतीयते, तदपि सत्त्वं न सदसद्विलक्षणत्वविरोधि, यतो नात्राबाध्यत्व-रूपं सत्त्वं तत्र विवक्ष्यते। बाध्यत्वं तु घटादेः पारमार्थिकत्वेनाभावादुपपद्यते; तथा-प्यर्थक्रियाकारित्वं सत्ताजातिमत्त्वं वा घटादेर्न विरुद्धं सदसद्विलक्षणत्वेऽपि, इति प्रत्य-क्षाद्यवगतं सत्त्वं मिथ्यात्वाविरोधि किञ्चिद् वक्तव्यम्। अतः सदसद्विलक्षणत्वेऽपि घटादेः शुक्तिरूप्यादेरिव न सत्त्वेन प्रतीतिविरोधः, न वा बाध्यत्वविरोधः।

### सत्त्वासत्त्वयोः परस्परविरहरूपत्वनिरासः

अत्र न्यायामृतकाराः—सदसद्विलक्षणत्वं मिथ्यात्वं प्रपञ्चस्यानुचितमिति—वर्णयन्ति। कारणं तु तत्र यदि सत्त्वाभावासत्त्वाभावयोः परस्परविरहरूपत्वादेका-भावेऽपरसत्त्वमादाय, तर्हि तु तत् स्यादपि परन्तु नात्रासत्त्वं प्रसिद्धं गृह्यते सत्त्व-मिव, किन्तु क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ब्रह्मसाधारणं किञ्चिद्विवक्ष्यते। तद्विवक्षायां तु पूर्वोक्तरीत्या न विरोधलेशोऽपि। सत्यमिदमसत्त्वं पारिभाषिकमिव, परन्तु द्वैतमतेऽपि न प्रसिद्धमसत्त्वं गृहीत्वा सत्त्वाभावो वर्णयितुं शक्यते, तन्म-तेऽप्यसत्ख्यातिस्वीकारादसतः शुक्तिरूप्यादेः सत्त्वेन प्रतीत्यर्हत्वस्यापि प्रतीतिः सन् इति स्वीकारात्। तत्र सत्त्वेन प्रतीत्यर्हत्वनिर्वाह उक्तरूपमसत्त्वमादायैवेति वक्तव्यम्। अत्यन्ताभावप्रतियोगित्वमसत्त्वमिति तन्मते स्वीकारान्न केवलं शुक्ति-रूप्यादौ, किन्तु घटादावपि सत्त्वेन प्रतीत्यर्हत्वं न सत्त्वस्य मुख्यस्य विवक्षायां निर्वोढुं पार्यते। अतः क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपमसत्त्वमादायैव सत्त्वेन प्रतीत्यर्हत्वं द्वैतमतेऽपि निर्वहणीयम्।

न्यायचन्द्रिका तु प्रसिद्धसदसत्त्वे गृहीत्वाऽपि सत्त्वासत्त्वयोः परस्परविरह-रूपत्वं पर्णयितुं न शक्यत इत्युक्तरूपमेवासत्त्वमादायासतोऽपि सत्त्वेन प्रतीत्यर्हत्वं निर्वहणीयं शुक्तिरूप्यादेरिवेति मन्यते। तत्र तयोः परस्परविरहरूपत्वं व्यभिचारान्न युक्तम्। यत्र सत्त्वे सत्त्वाभावः, न तत्रासत्त्वम्, तथा यत्रासत्त्वे सत्त्वाभावः, न तत्र सत्त्वमिति सत्त्वासत्त्वयोः परस्परविरोधः।

प्रमेयत्वे प्रमेयत्ववद् दृश्यत्व-मिथ्यात्वयोर्दृश्यत्व-मिथ्यात्ववत् सत्त्वासत्त्वयोः सत्त्वासत्त्वस्वीकारे त्वात्माश्रयो दोषः। दृश्यत्व-मिथ्यात्वयोर्दृश्यत्वं घटादिवद् दृश्यत्वातिरिक्तं न मन्यते। एवं मिथ्यात्वेऽपि मिथ्यात्वं दृश्यत्वेन प्रतियोगि-तद्भाव-साधारणेन, न तु मिथ्यात्वेनेति नात्माश्रयः। न चाप्ययं न्यायोऽत्र संभवति। अतो न्यायचन्द्रिकोक्तं दूषणं दुर्निवारम्। अतः परस्परविरहरूपत्वसम्भवः।

अत्र सत्त्वासत्त्वयोः प्रसिद्धं रूपं गृहीत्वैव परस्परविरहरूपत्वं न सम्भवतीति न्यायचन्द्रिकायामुक्तम्। क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वघटितं सदसद्विलक्षणत्वम्। तदाशयस्तु मिथ्यात्वलक्षणे सत्त्वासत्त्वे उभे न प्रसिद्धे ग्रहीतव्ये; तयोः परस्पर-विरहरूपत्वस्य बाधात्, किन्तु क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपमेवासत्त्वं तत्र विवक्षणीयमिति। न चैतावता सत्त्वासत्त्वयोः सर्वत्रैवंरूपतायामेव तात्पर्यमुन्नेयम्; परस्परविरहरूपत्वं प्रसिद्धयोः सत्त्वासत्त्वयोर्न संभवतीत्यत्रैव तात्पर्यात्। अतः प्रकृतमिथ्यात्वलक्षणे सत्त्वासत्त्वयोरसत्त्वं प्रसिद्धं न ग्रहीतव्यम्, किन्तूक्तरूपमेवेति मिथ्यात्वलक्षणमेवमद्वैताभिमतमद्वैतसम्मतासत्त्वाभावविवक्षायां न कथमपि दुष्टम्।

तत्र प्रपञ्चस्य सत्त्वासत्त्वाभावोभयवत्त्वेऽपि ब्रह्मवत् सत्स्वरूपतामङ्गीकृत्य सन्निति प्रतीतिविषयत्वं वक्तुं न शक्यते। तत्र ब्रह्मण एकस्य सत्स्वभाववत् सर्वस्य प्रपञ्चस्यापि प्रत्येकं तत्स्वभावकल्पने हि सर्वत्र सन्नित्येकाकारप्रतीत्यनुपपत्तिः; इदं रजतमित्यादौ रजतं विनापि रजतादिव्यवहारवत् 'सन् घटः' इत्यादौ सद्रूपं घटादि विनापि प्रतीत्युपपत्तेः। ब्रह्मणः सद्रूपत्वं तु तस्य प्रमितत्वादुपपद्यते। शुक्तिरूप्यादेर्जगतश्च न तथा प्रमितत्वम्; जगतः सद्रूपे ब्रह्मणि कल्पितत्वेन घटादि-ज्ञानस्य सर्वस्य विकल्पांशेऽप्रामाण्यस्यैव ब्रह्मसिद्धि-तत्त्वशुद्ध्यादावुक्तरीत्यौचि-त्यात्। तदेवं सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावात् सदसद्विलक्षणत्वरूपं मिथ्यात्वमव्याहतम्। सत्त्वासत्त्वयोः परस्परविरहरूपत्वं हि सत्त्वे सत्त्वभावासत्त्वा-भावोभयवत्त्वात्। तत्र यदि सत्त्वे सत्त्वम्, तर्ह्यात्माश्रयः। यदि तत्रासत्त्वम्, तर्हि सत्त्वस्याप्यसत्त्वापत्तिः। अतः सदसद्विलक्षणत्वस्य मिथ्यात्वे न व्याघातलेशोऽपि, न वा तत्र सत्त्वेन प्रतीत्यर्हत्वविरोधः। तत्र द्वैतमते सद्विलक्षणस्यासतः सत्त्वेन प्रतीत्यर्हत्वेऽविरुद्धे क्वैव कथाद्वैतसिद्धान्ते तत्र सत्त्वेन प्रतीत्यर्हत्वे। घटः सन्' इति प्रत्यक्षं हि घटादेरधिष्ठानानुवेधेन सत्तादात्म्यमेव गोचरयति, न त्वबाध्यत्वरूपं तस्य सत्त्वम्; तस्य स्वरूपतो बाध्यत्वात्। न च सत्त्वं सर्वत्र सत्प्रतीतावबाध्यत्वम्, द्वैतमते शुक्तिरूप्यादावसति तस्य बाधात्।

एतेन सत्स्वभावतोऽपि ब्रह्मण इव सत्स्वभावता परास्ता। नहि घटादीनां सत्स्वभावता प्रत्येकं भिन्ना; अन्यथा सत्ताजात्यादेरनुगतव्यवहारप्रयोजकत्वायोगात्।

परमते जातिकल्पनाऽपि नोपपद्येत, सत्ताजात्यादेरेवात्र सत्यतायां तु तस्य सदसद्विलक्षणत्वेनाविरोधान्न सदसद्विलक्षणत्वे मिथ्यात्वे प्रत्यक्षादिविरोधशङ्कापि।

न चाधिष्ठानानुवेधे सन्निति चाक्षुषप्रत्यक्षायोगः। 'सन् घटः' इत्यादिप्रत्यक्षे घटाद्यंश एव चाक्षुषत्वम्, न सदंशे, तस्य स्वप्रकाशत्वेन तद्भानार्थमिन्द्रियसन्निकर्षानपेक्षणात्। अत एव भाष्यम्—"न च पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति नियमः; अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यस्यन्ति" इति। न चायमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्। प्रातिभासिकाध्यास एव पुरोऽवस्थितत्वमधिष्ठानस्यापेक्षितम्, न तु घटाद्यध्यासे; अन्यथाऽतीन्द्रियाध्यासेऽपि सतश्चाक्षुषत्वापत्तिः। अत. सतश्चाक्षुषत्वव्यपदेशस्तत्र घटादेश्चाक्षुषस्य तादात्म्याध्यासमात्रेण, तदाकारवृत्तेश्च चाक्षुष्यास्तत्राध्यासेन। सति चैवं सन् घटः' इत्यत्रापिनीरूपस्यापि चाक्षुषत्वसमर्थनमद्वैतसिद्धिकाराणां कृत्वाचिन्तया न्यायामृतनिरासार्थमेव, न तु वस्तुस्थिति मनुसृत्य।

वस्तुतस्तु 'सन् घटः' इत्यादि प्रत्यक्षं 'सदेव सौम्य' इति श्रुतिरिवाध्यारोपसिद्धं सत्तादात्म्यमेवानुवदति न तु सत्त्वम्। अत एव तत्र—'एकमेवाद्वितीयम्' इति सदतिरिक्तस्य तत्रापवाद उपपद्यते, इति तेन न्यायेन 'सन् घटः' इत्यादावबाध्यत्वं सदंश एव, न तु घटादिप्रकारांशे। अत एव ब्रह्मसिद्धिस्तत्त्वशुद्धिश्च—"सदंश एव ज्ञानानां प्रामाण्यम्, न विकल्पांशेऽपि" इति। अतः 'इदं रजतम्' इति ज्ञानस्य 'नेदं रजतम्' इति ज्ञानाबाधकत्ववत् 'सन् घटः' इति ज्ञानस्य 'नेह नानास्ति किञ्चन' इति श्रुतिसिद्धघटादिमिथ्यात्वबाधकत्व न युक्तम्, इति घटादिमिथ्यात्वे प्रत्यक्षादिविरोधशङ्का द्वैतिनां निरालम्बा। निधर्मकत्वेऽपि ब्रह्मणः सत्त्वमिव सत्याभावोऽपि नास्तीति न ब्रह्मणोऽपि मिथ्यात्वापत्तिः।

### प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगिमिथ्यात्वविचारः

एतेन—"नेह नानास्ति किञ्चन" इति श्रुतिसिद्धं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमपि व्याख्यातम्।

एतच्छुत्यर्थस्तु—"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति वाक्ये पञ्चजनशब्दनिर्दिष्टाकाशशब्दिताव्याकृतप्राणादिसम्बन्धितया तस्य "यस्य ब्रह्म च क्षत्रं च" इत्यादाविव सर्वद्वितीयोपलक्षणतया सर्वद्वितीयवद्ब्रह्मपरत्वाद् द्वैतवति ब्रह्मणि द्वितीयाभावः।

सति चैवम्—'सदेव सौम्येदमग्र आसीत्", "एकमेवाद्वितीयम्" इति वाक्यार्थं एवात्र भङ्ग्यन्तरेणाम्नायते। तत्र–यथा 'इदं रजतम्' इत्यस्य बाधज्ञानं 'नात्र रजतम्' इति लक्ष्यते, 'नेदं रजतम्' इतिवत्। उभयोरप्येकार्थपर्यवसानात्। एवमत्रापि 'इह ब्रह्मणि न नाना' इत्यनेनापि ब्रह्माद्वितीयमित्येव विवक्ष्यते। तथा च द्वैतवति ब्रह्मणि द्वैतनिषेधाद् द्वैतोपलक्षितब्रह्मबोधन एवोक्तवाक्यतात्पर्याद्

२५

द्वैतमिथ्यात्वमर्थसिद्धमित्यभिप्रेत्याद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वाद् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयमिति प्रस्तुतद्वैतसिद्धचादौ।

सति चैवं प्रतिपन्नोपाधावित्यनेन स्वप्रकारकप्रतीतिविशेष्ये ब्रह्मणीत्येव विवक्षणीयम्। अत एव—नन्वेवमत्यन्तासत्त्वापातः। प्रतिपन्नोपाधौ त्रैकालिक निषेधप्रतियोगित्वं ह्यन्यत्रासत्त्वेन संप्रतिपन्नस्य घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यवसितम्; अन्यथा तेषामन्यत्र सत्त्वापातात्। तथा च कथमसद्वैलक्षण्यम्। नहि शशविषाणादेरितोऽन्यदसत्त्वमित्याशङ्कच क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वमसत्त्वम्, नान्यत्। इदञ्चोपाधिपदेन सदर्थकेन सूचितमित्यद्वैतसिद्धौ व्यक्तम्।

सति चैवं विप्रतिपत्तिवाक्येऽधिकरणसामान्यमुपाधिपदार्थं मत्वा सर्वत्रपदप्रयोगादिकं सम्बन्धविशेषविवक्षया शङ्का-समाधानादिकं च सर्वमप्राप्तावसरम्; ब्रह्मण्येव तादात्म्यसम्बन्धेनैव प्रपञ्चस्याध्यारोपणात् तत्रैव तदभावय बोधनात्, इति सत्तादात्म्येन प्रसक्तस्य तेनैव निषेधात्, असतश्च ब्रह्मणि तादात्म्याभावान्नासत्त्वाविशेष इति गम्यते। इदमेव गृहीत्वा सदसद्विलक्षणेऽसत्त्वं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वमिति विवेचितम्। अतो न परिभाषामात्रमेतदसत्त्वम्; श्रुत्यनुगृहीतत्वात्।

अत्र निषेधातात्त्विकत्वपक्षे प्रतियोगिसत्यत्वापत्तिशङ्का प्रपञ्चमिथ्यात्वतदभावयोरेकप्रतियोगितावच्छेदकत्वे न प्रसरतीति मिथ्यात्वमिथ्यात्वे न प्रपञ्चसत्यत्वापत्तिरिति प्रकरणान्तरे निष्कर्षार्थमात्रमत्रानुसन्धीयते। अत्र भावाद्वैतमेव मण्डनस्येत्यनुवादो न्यायामृतानुवादभ्रान्तिसिद्धं कृत्वाचिन्तया, वस्तुतः स वादो ब्रह्मदत्तस्यैवेति ब्रह्मसिद्धिव्याख्यायां भावशुद्धौ व्यक्तम्।

### ज्ञाननिवर्त्यत्वमिथ्यात्वविचारः

अयमत्र निष्कर्षः—प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वेऽपि तृतीयमिथ्यात्वं ज्ञाननिवर्त्यत्वम्। तत्र प्रमाणम्—"तरति शोकमात्मवित्", "विद्वान्नामरूपाद्विमुक्तः" इत्यादि श्रुतिः। अत्रात्मज्ञानपदेनाधिष्ठानसाक्षात्कारः प्रमाणतन्त्रो वस्तुतन्त्रो वा विवक्ष्यते न तु स्वरूपज्ञानं स्वप्रकाशम्। तदप्युपहितान्याविषयकत्वे सत्युपहितविषयमेव। तेन 'सन् घटः' इत्यादावप्यधिष्ठानप्रकाशसत्त्वेऽपि सदंशे तस्य प्रमाणजन्यत्वाभावाद् व्यावहारिकप्रमाणस्यापि तस्य घटादिप्रकाशांश एव प्रमाणजन्यत्वान्न तेनाज्ञाननिवृत्त्या सर्वनिवृत्त्यापत्तिः। अज्ञानोपहितं ब्रह्माधिष्ठानम्, भ्रमोपादानं वा प्रमाणजन्यवृत्त्युपहितमखण्डचैतन्यमज्ञाननिवृत्त्युपलक्षितमिति विवेकः। व्यक्तीकरिष्यते चेदं ज्ञाननिवर्त्यत्वानुपपत्तिप्रकरणे। अत्रापि ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वमिति सिद्धान्तोपक्रमे व्यक्तम्।

## ज्ञाननिवर्त्यत्वस्याधिष्ठानसाक्षात्कारनिवर्त्यत्वरूपत्वात् पूर्वज्ञानादावतिव्याप्त्यादेरनुक्तोपालम्भनता

सति चैवम्—"ननूत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तिः, मुद्गरपातनिवर्त्ये घटादावव्याप्तिः, ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्ययमेव दोषः, अधिष्ठानसाक्षात्कारत्वेन निवर्त्ये शुक्तिरूप्यादौ ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् साध्यविकलता, ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां स्मृतित्वेन ज्ञाननिवर्त्ये संस्कारेऽतिव्याप्तिः, उत्तरत्र ज्ञाननिवर्त्यत्वानुपपत्तिप्रकरणे सेतुदर्शननिवर्त्ये ब्रह्महत्यापापेऽप्यतिव्याप्तिरित्यादिकमनुक्तोपालम्भनम्, तेषां सर्वेषामधिष्ठानसाक्षात्कारत्वाभावात्, सेतुदर्शनस्य चोदनातन्त्रस्यैव पापनिवर्तकत्वेन प्रमाणजन्याधिष्ठानसाक्षात्कारत्वाभावाच्च। सत्यप्येवमद्वैतसिद्धिः कृत्वचिन्तयाऽपि न्यायामृतनिरसनं स्वीकर्तव्यं मत्वा सर्वं निरस्यति।

वस्तुतस्तु ज्ञाननिवर्त्यत्वमधिष्ठानसाक्षात्कारनिवर्त्याज्ञान तत्प्रयुक्तान्यतरत्वमेव, इति मुद्गरपातादिनिवर्त्यघटादीनामिव पूर्वज्ञानादीनामप्यधिष्ठानसाक्षात्कारनाश्यत्वान्नातिव्याप्तिः, अव्याप्तिर्वा।

## ज्ञानत्वेन ज्ञाननिवर्त्यत्वपक्षोऽप्यदुष्टः

निष्कर्षस्तु—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं ज्ञाननिवर्त्यत्वम्। एवञ्च कार्यात्मना, कारणात्मना च द्विविधावस्थितित्वावच्छिन्नविरहस्य ज्ञानप्रयुक्तस्यैवात्र विवक्षणाद् "अविद्या सह कार्येण नास्ति नासीद्भविष्यति" इति बाधस्याविद्यायामपि सत्त्वेन तत्परिणामभूतभ्रमस्यापि तथात्वेन शुक्त्यज्ञान-रूप्यविभ्रमयोरपि मिथ्यात्वस्येष्टत्वेनालक्ष्यत्वाभावेनातिव्याप्त्यनवसरात् शुक्तिज्ञाने 'रूप्यं नास्ति नासीन्न भविष्यति', इति प्रतीतेरानुमानिकत्वेन रूप्यस्यापि मिथ्यात्वात् साध्यवैकल्याभावाद्, उत्तरज्ञानेन पूर्वज्ञानस्य स्वात्मनावस्थितिविरहस्योत्तरज्ञानप्रयुक्तत्वे कारणात्मनावस्थितिविरहस्य तत्त्वाभावादर्थान्तरस्यापि नावकाशात् परोक्षापरोक्षसाधारणस्यापि ज्ञानत्वस्य स्वरूपसम्बन्धरूपनिवर्तकतावच्छेदककत्वाङ्गीकारेणोपपत्तिसम्भवाच्च ज्ञानत्वेन ज्ञाननिवर्त्यत्वपक्षे न दोषः।

## ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वादिपक्षोऽप्यदुष्टः

एवं ज्ञानत्वव्याप्यधर्मेण निवर्तकतापक्षोऽप्यदुष्ट एव; स्मृतित्वेन स्मृतेः संस्कारनिवर्तकताया अनङ्गीकारात्, स्मृतौ सत्यां संस्कारो दृढो भवतीत्येवानुभवात्। स्मृतिसामान्यस्यायथार्थत्वमेव न यथार्था स्मृतिरपि समस्तीति बिन्दुटीकोदाहृतपक्षानुसारेणानुभवत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वपक्षोऽपि न दोषाय। एवं भ्रमोत्तरसाक्षात्कारत्वेन तन्निवर्त्यत्वमिथ्यात्वपक्षोऽपि समीचीन एव; जीवन्मुक्तीयाज्ञानसंस्कारस्य चरमसाक्षात्कारेणैव निवृत्तिः; न तु ज्ञानसंस्कारेणेत्यङ्गीकारेण

तत्रापि दोषाभावाद् अनाद्यध्यासानामप्यविद्योपादानकत्वस्य तत्समकालिकत्वेन न्यायरत्नावल्यामुपपादितत्वेन स्वोपादाननिवर्तकज्ञाननिवर्त्यत्वपक्षस्याप्यदुष्टत्वात्, इति तृतीयमपि मिथ्यात्वं सूपपादमेव ।

### तुरीयमिथ्यात्वस्य चित्सुखीयत्वा-योगशङ्का-तत्परिहारौ

चतुर्थमिथ्यात्वं तु स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं चित्सुखाचार्याणामिति चन्द्रिकायाम्—

आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते ।
चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम् ॥

इति वचनात् । तत्र यद्यपि तत्त्वप्रदीपिकायां मिथ्यात्वलक्षणं दशधा—(१) प्रमाणागम्यत्वम्, (२) अप्रमाणज्ञानगम्यत्वम्, (३) अयथार्थज्ञानगम्यत्वम्, (४) सद्विलक्षणत्वम्, (५) सदसद्विलक्षणत्वम्, (६) अविद्या तत्कार्यान्यतरत्वम्, (७) ज्ञाननिवर्त्यत्वम्, (८) प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्, (९) बाध्यत्वम्, (१०) स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमिति विकल्प्य सर्वमपि पूर्वपक्षिमुखेन निरस्य—

"सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥"

इति,

"अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेवैषा गुणादिषु ॥"

इति च 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमिति' विवरणोदितं द्वितीयमिथ्यात्वमेव सिद्धान्तितम्; तथापि न तत्तदीयं मिथ्यात्वम्, किन्तु दशमं मिथ्यात्वमेव तन्मनोगतमिति विज्ञायते ।

तत्र पूर्वपक्षोपन्यासावसरे न दशमः; संयोग विभाग-शब्दात्मविशेषगुणानामेकप्रदेशगतानां स्वात्यन्ताभावाधिकरणगततया प्रतीयमानानां परैः सत्त्वाद्यङ्गीकारादर्थान्तरताया दुरतिक्रमत्वादिति तत्पक्षो दूष्यते । तत्र यद्यपि सिद्धान्तोपन्यासावसरे तत्पक्षो दूषणोद्धारेण न समर्थ्यते; तथापि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्व'पक्षसमर्थनावसरे पूर्वपक्षोपक्षेपावसरेऽनुपन्यस्तसंयोग-विभागादिष्वव्याप्यवृत्तित्वादर्थान्तरं स्वतन्त्रमाशङ्क्य तदव्याप्यवृत्तिताया अनङ्गीकारेण तदाशङ्का निःसारिता । तत्र संयोगादीनामव्याप्यवृत्तिताऽनङ्गीकारपक्षो हि चित्सुखाचार्यैरेवोट्टङ्कितः, इति तेनैवात्यन्ताभावाधिकरणे प्रतीयमानत्वपक्षोऽपि समर्थितप्राय इति कृत्वैव चित्सुखीयं चतुर्थं स्यादित्युक्तम् ।

### तुरीयमिथ्यात्वमूलं परविद्या, न तु "नेह नानास्तीति श्रुतिः"

इदमपि मिथ्यात्वं द्वितीयं मिथ्यात्वमिव 'नेह नानास्ति' इति श्रुतिमूलमिति लघुचन्द्रिकातुल्यवित्तिवेद्यतया तस्यैवैवंरूपत्वमित्यभिप्रेत्य वदति। इदं तु प्रतिभाति--"यत्तदद्रेश्यमग्राह्यम्" इत्यादि "तद्भूतयोनिं परिपश्यन्ति धीराः' इत्यन्तपरविद्यामूलमिदं मिथ्यात्वमिति ।

### द्वितीय-तुरीयमिथ्यात्वयोर्विषयविवेकः

अत्र सर्वत्र मिथ्यात्वप्रकरणेऽधिकरणपदमधिष्ठानपरमेवाद्वैतमते साम्प्रतम्, इति स्वात्यन्ताभावाधिकरणे–प्रतीयमानत्वपदाभ्यां स्वस्वभावोभयाधिष्ठानकत्वमेव तत्र प्रतीयते, तेन मिथ्यात्वस्यातात्त्विकत्वपक्ष एव विवक्ष्यत इति प्रतीयते। अथवा भावाद्वैतमतमेवात्र विवक्ष्यत इति विषयविवेकोऽपि द्वितीय-चतुर्थमिथ्यात्वयोः। अन्यत् सर्वं द्वितीयमिथ्यात्वप्रकरणवदेयानुसन्धेयम् ।

### "अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम" इति भाष्यं तुरीयमिथ्यात्वे मूलम्

अत्र—"अध्यासो नामाऽतस्मिन् तद्बुद्धिरित्यवोचाम" इति भगवत्पादभाष्यं साक्षान्मूलम् । अनिवर्चनीयख्यातौ—"तद्वति तत्प्रकारकं ज्ञानं प्रमा" इति प्रमालक्षणं यद्यपि न युक्तम्; भ्रमस्यापि तद्वति तत्प्रकारकत्वात्; तथापि तदभाववति तत्प्रकारकत्वं भ्रम इति न विरुद्धमिति भाष्याशयः। एतदेव स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं मिथ्यात्वमित्यनेन सूच्यत इति ।

### भ्रमस्यापि यावद्बाधं प्रामाण्यम्

तद्वति तत्प्रकारकत्वमध्यारोपेणैवेति यावद्बाधं प्रामाण्याविरोधः, किन्तु तद्वत्वं तदभावबाधकं न भवति । एतदेवाभिप्रेत्य मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वलक्षणं प्रामाण्यं भ्रमस्यापीति सिद्धान्तः ।

### 'सदेवेदम्' इत्यादौ बाधायां सामानाधिकरण्यसूचनं तुरीयमिथ्यात्वस्य लक्ष्यम्

तत्र तद्वति तत्प्रकारकत्वं तदभावतस्तद्वत्त्वेन, वस्तुतस्तद्वत एव तद्वत्वेन वेति संशये जगत्कारणत्वादिकं वस्तुतस्तद्वत्त्वेनेति शङ्कावारणं हि 'सदेवेदम्'इत्यादिवाक्येन यदि तद्वत्येव कारणत्वं विवक्ष्यते, तर्हि जगत्सत्यत्वमेव शास्त्रार्थः स्यात्। तदा चाद्वितीयादिपदानां तदनुसारेणानयनं कर्तव्यम्। सामानाधिकरण्यं हि विशेष्यविशेषणभाव एव मुख्यम्; अबाधात् कस्याप्यर्थस्य । यदि तु तदभाववति तद्वत्त्वमेव, तर्हि जगत्कारणत्वादीनां बाधेन बाधायां सामानाधिकरण्येन 'सदेवम्'इति वाक्यार्थः स्यात् । तत्र च तदभाववति तद्वत्त्वेन बाधायां सामानाधिकरण्यमेव तत्र युक्तमिति

सूचनेनैव भवतीति तत्सूचनार्थं परविद्यादिवाक्यगम्यं स्वात्यन्ताभावाधिकरणे प्रतीयमानस्वरूपतुरीयमिथ्यात्वम् "अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम" इति भाष्योपबृंहितमत्र स्वीक्रियते। अधिकमन्यत्र।

### पञ्चममिथ्यात्वं तन्मूलं च। तस्य तृतीयमिथ्यात्वाद्विवेकादिश्च सद्विविक्तत्वस्यातिव्याप्त्यव्याप्ति-निरासेन लक्ष्ये समन्वयश्च

पञ्चमं मिथ्यात्वं सद्विविक्तत्वम्। अत्र च मूलम्—"अतोऽन्यदार्तम्" इति श्रुतिः। ब्रह्मभिन्नं मिथ्येति तु श्रुत्यर्थः। तत्र सद्विविक्तत्वं प्रमाणसिद्धभिन्नत्वम्, न तु सद्विलक्षणत्वमात्रं बाध्यरूपम्; ज्ञाननिवर्त्यत्वरूपमिथ्यात्वेन पौनरुक्त्यात्। तत्र प्रमासिद्धत्वं दोषनिष्ठकारणतानिरूपकज्ञानान्यधीविषयान्यत्वम्। तत्र दोषविधयाऽधिष्ठानावरणद्वारा निमित्तकारणाविद्याप्रयुक्तविवर्तविषयकत्वाद् घटादिज्ञानं दोषकारणतानिरूपकं ज्ञानम्, तदन्यच्च ज्ञानं ब्रह्मज्ञानम्, ब्रह्मणः सत इव ब्रह्मविवर्तत्वाभावात् तदन्यत्वं घटादिज्ञानस्येति तद्विषयत्वाद् घटादेः सद्विविक्तत्वम्। शुक्तिरूप्यादौ त्वविद्यातिरिक्तकाचादिदोषकारणकत्वात् समन्वयः। अलीकेऽपि दोषविधयाऽविद्यायास्तदतिरिक्तस्य वा विकल्पाख्यज्ञाने कारणत्वाभावाद् दोषनिष्ठकारणतानिरूपकज्ञानान्यदेव ब्रह्मज्ञानमिवालीकज्ञानमपि, इति न तत्साधारणं सद्विक्तित्वम्। अतो ब्रह्मणीव तत्रापि न व्यभिचारः; दृक्तादात्म्यरूपस्य दृश्यत्वस्य तत्राभावात्।

### असतः साधकत्वसमन्वयः, वेदान्तानां स्वरूपतो मिथ्याभूतानामपि ब्रह्मणि प्रामाण्यं च

तत्र चाऽऽविद्यकत्वेऽपि चक्षुरादीनां चक्षुरादिकरणकत्वमात्रेणाविद्याकारणत्वं विना घटादिज्ञानस्य न भ्रमत्वनिर्वाहः; स्वरूपतोऽप्रमाणत्वेऽपि विषयतः प्रमाया अविरोधात्।

> "उपायाः शिक्ष्यमाणानां बालानामुपलालनाः।
> असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥"

इति न्यायात्, सत्त्वस्य कारणतानवच्छेदकत्वाच्च। अतो वेदान्तानां यदि स्वत आविद्यकत्वेऽप्यविद्या स्वमं दोषविधया न निमित्तकारणम्, तदा वेदान्तस्याविद्यकत्वमात्रेण तत्त्वमस्यादिवाक्यजन्यज्ञानस्य न भ्रमत्वम्, येन ब्रह्मण्यतिव्याप्तिः स्यात्।

अत्र वेदान्तानामाविद्यकत्वाद्वेदान्तजन्यज्ञानं मिथ्येति वादस्तु न द्वैतिनामन्येषाञ्चाव सरति; ब्रह्मणो विषयस्यानाविद्यकत्वात्, अबाधाच्च।

## मिथ्यात्वस्य प्रत्यक्षानुमानादिबाधोद्धारादिः

अत्राद्वैतसिद्धेः षष्टिप्रकरणेष्वाद्यानि सप्त प्रकरणान्यालोचितानि। तत्र पञ्चदशमारभ्य प्रत्यक्षबाधोद्धारः, प्रत्यक्षप्राबल्यभङ्गः, प्रत्यक्षानुमानबाध्यत्वम् प्रत्यक्षस्यागमबाध्यत्वम्, अपच्छेदन्यायवैषम्यभङ्गः, प्रत्यक्षस्याबाध्यत्वे बाधकम्, भाविबाधोपपत्तिः सत्यत्वानुमानभङ्गः, मिथ्यात्वे विशेषतोऽनुमानानीति दशप्रकरणानि मिथ्यात्वस्य तत्तच्छ्रुतिसिद्धस्य प्रत्यक्षादिना बाधशङ्कां वारयितुं प्रवृत्तानि।

### प्रत्यक्षेण वर्तमानमात्रग्राहिणामपि मिथ्यात्व-परश्रुतिबाधायोगः, परिणामेनैव पूर्वस्य प्रत्यक्षस्य बाधयोगश्च

तत्र प्रत्यक्षादीनां पौरुषेयत्वाच्छ्रौतस्य मिथ्यात्वस्य बाधशङ्का नावसरति। तत्र प्रत्यक्षविरोधे श्रुतीनामन्यथा नयनं श्रुतेरर्थान्तरतात्पर्ये तदविरोधायान्यथानयनेन भवति। अत्र तु प्रत्यक्षेण वर्तमानमात्रशूरेण भाविविषयाग्रहणाद् भाविबाधबाधकत्वं बाधकज्ञानेन बाध्यत्वान्न संभवति। तत्र यथा 'इदं रजतम्' इति ज्ञानस्य नेदं रजतम्' इति ज्ञानेन परेण बाधः, एवमत्रापि बाधकज्ञानेन परेण पूर्वस्य 'सन् घटः' इत्यादिप्रत्यक्षस्य बाध एव युक्त इति 'सत् घटः' इत्यादौ सामानाधिकरण्यं बाधायां पर्यवस्यति।

### अपच्छेदन्यायेन प्रत्यक्षपारमार्थिकप्रामाण्यस्य बाधेऽपि व्यावहारिकं प्रामाण्यमबाधम्

यद्यप्युपक्रमाधिकरणन्यायेन प्रथमस्य प्रत्यक्षस्य प्राबल्यं शङ्कितुं शक्यते; तथापि तस्यापच्छेदन्यायेन बाधान्न पौर्वापर्यनियमे पूर्वेण परस्य बाधः, किन्तु परेणैव पूर्वस्य। अत्रापच्छेदन्यायेन यदि— 'यदि प्रतिहर्ताऽपच्छिन्द्यात् सर्ववेदसं दद्याद् यद्युद्गाताऽपच्छिद्याददक्षिणं यज्ञं संस्थाप्य पुनस्तेन यजेत" इति वचनसिद्धेऽपच्छदद्वये प्रथमं प्रतिहुर्त्रपच्छेदेऽनन्तरमुद्गात्रपच्छेदे च क्रमिके परेणोद्गात्रपच्छेदनिमित्तप्रायश्चित्तेन पूर्वस्य प्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तस्य बाधेऽपि तद् दद्यात् "यत्पूर्वस्मिन् दास्यन् स्यात्" इति वचनात् प्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तस्यापि सावकाशत्वं मन्यते, प्रकृते त्वागमेन प्रत्यक्षबाधे न तस्य सावकाशत्वमित्यपच्छेदन्यायवैषम्यम्, तर्हि प्रकृतेऽप्यागमेन प्रत्यक्षस्य बाधेऽपि व्यावहारिकं प्रामाण्यं तस्य स्वीक्रियत इति तद्वैषम्यभङ्गः।

### प्रतिहर्त्रपच्छेदपूर्वत्वे "तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्" इति वचनबलेन तस्य प्रामाण्यम्, अत्र तु न वचनसिद्धं प्रत्यक्षप्रामाण्यम्,

### अतः प्रत्यक्षाप्रामाण्यम्, अतः प्रत्यक्ष-स्यागमेनात्यन्तबाध एव

वस्तुतस्तु प्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तस्योद्गात्रपच्छेदनिमित्तप्रायश्चित्तेन बाध आत्यन्तिक एव युक्तः, न तु बाधितस्यापि सावकाशत्वं विना वचनं कल्पयितुं शक्यते। प्रकृते तु प्रतिहर्त्रपच्छेदनिमित्तप्रायश्चिते बाधिते। पुनरनुष्ठानं "तद् दद्याद् यत्पूर्वस्मिन् दास्यन् स्यात्" इति वचनेन प्रतिप्रसूयते, इति 'किमिव वचनं न कुर्यात्, नास्ति वचनस्यातिभारः' इति न्यायसिद्धं तस्य सावकाशत्वम्। न चात्रागमबाधिते प्रपञ्चसत्यत्वे पुनस्तत्सत्यत्वप्रतिप्रसवपरं किमपि वचनं श्रूयते, येन नात्यन्तिकबाधः प्रत्यक्षस्य स्यादित्यपच्छेदन्यायेन सर्वथा बाध एव प्रत्यक्षस्य स्वीकर्तव्यः। तेन च तदनन्यत्वाधित्वाधिकरणसिद्धो ब्रह्मव्यतिरेकेण प्रपञ्चाभाव एव प्रामाणिकः सिद्ध्यति।

### प्रतिहर्त्रपच्छेदपरत्वे पूर्वस्य बाध एव, इति प्रत्यक्षबाधायोगेनापच्छेदन्यायवैषम्यकल्पना युक्ता

न ह्यपच्छेदन्याये सर्वत्र बाधितस्यापि पूर्वस्य सावकाशत्वं विनापि वचनं कल्पयितुं शक्यम्; अन्यथा यदि प्रथममुद्गात्रपच्छेदः, अनन्तरं च प्रतिहर्त्रपच्छेदः, तत्र प्रतिहर्त्रपच्छेदेनोद्गात्रपच्छेदनिमित्तेऽदक्षिणयज्ञसंस्थापनपूर्वकपुनर्यज्ञानुष्ठाने बाधिते प्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तानन्तरं पुनरप्युद्गात्रपच्छेदनिमित्तप्रायश्चित्तस्यानुष्ठानमापद्येत, इति तत्रात्यन्तिक एव बाधः परेण पूर्वस्य। अतो बाधितस्यापि कुत्रचन सावकाशत्वं वर्णनीयमिति कृत्वा नापच्छेदन्याय वैषम्यं शङ्कितुं शक्यम्।

### न्यायचन्द्रिकामतेन दृश्यत्वहेतुसमन्वयः, दृश्यत्वस्य दृग्भिन्नत्वस्य विवक्षणेन फलव्याप्यत्व-वृत्तिव्याप्यत्व-साधारण-पक्षत्रयस्यापि निरासेन

अत्र मिथ्यात्वानुमाने दृश्यत्व-जडत्व-परिच्छिन्नत्वांशित्वरूपाश्चत्वारो हेतवः। तत्र न्यायचन्द्रिका—"दृश्यत्वं नाम फलव्याप्यत्वं वृत्तिव्याप्यत्वं साधारणं वेति त्रीनेव कल्पान् पूर्वपक्षमुखेनोपक्षिप्य ताद्यः, अतीन्द्रियेऽभावेन भागासिद्धत्वात्, न द्वितीयः; ब्रह्मणोऽपि वेदान्तिभिर्वृत्तिव्याप्यात्वाभ्युपगमादनैकान्तिकत्वात्, न तृतीयः; ब्रह्मण्यनैकान्तिकत्वादेवेत्ति निरस्य कमपि पक्षं नात्र समर्थयति; परन्तु नात्रौदासीन्यं मन्यते।

तदीयमत्र समाधानं तु—अयुक्तमेतत्; वृत्तिज्ञानमनभ्युपगच्छतामित्थं विकल्पानुत्थानात्, तदभ्युपगमे तेषामपसिद्धान्तनिग्रहात्। शिष्यश्चोदयतीति चेत्,

स इत्थं शिक्षणीयः—दृश्यपदार्थ एव त्वया नावगतः। दृश्यत्वं हि दृगवच्छिन्नत्वम्। दृग् आत्मा। सर्वं ज्ञाततया, अज्ञाततया वा साक्षिवेद्यम्। अतो न दृश्यत्वस्यानात्मनि क्वचिदप्यसिद्धिरिति। आत्मनश्च स्वसंवेदनात्मतायाः प्रतिपादनीयत्वात्" इति।

**न्यायामृतकारस्य दृश्यत्वस्य कल्पान्तरमादाय निरासः अद्वैतसिद्धेः फलव्याप्यत्वातिरिक्तसर्वपक्षसमर्थनं च**

तत्र दृश्यत्वं फलव्याप्यत्वं वृत्तिव्याप्यत्वं साधारणं वेति विकल्पत्रयमाशङ्क्य त्रितयमपि न हेतुरित्यत्र चित्सुख्याः पूर्वपक्षः। सिद्धान्ते तु न कस्यापि पक्षस्य समर्थनं कृतम्, किन्त्वंशित्वरूपहेत्वन्तरेण कार्यसामान्यमिथ्यात्वं साधितम्। इदं छिद्रं दृष्ट्वा न्यायामृतकार उक्तवान्—त्रीन् विकल्पानतिरिच्य कदाचित् कथञ्चिद्विषयत्वं वा स्वव्यवहारे स्वातिरिक्ते संविदपेक्षानियतिर्वा, अस्वप्रकाशत्वं वा इत्यपरानपि कल्पान् संकलयति, अद्वैतसिद्धिस्तु फलव्याप्यत्वातिरिक्तस्य सर्वस्य पक्षस्य क्षोदक्षमत्वादिति दृश्यत्वहेतुं समर्थयति।

**तत्त्वप्रदीपिकाया दृश्यत्वहेतुस्थानेऽंशित्वहेतुसमादरः, दृग्भिन्नत्वरूपदृश्यत्वहेतुसमादरसूचना च**

तत्त्वप्रदीपिका तु न्यायचन्द्रिकागतान् त्रीनेव प्रकारान् दृश्यत्वस्य पूर्वपक्षस्यावसरे संगृह्य तेषामसंभवं च पूर्वपक्षयित्वा तत्र किमपि समाधानं न्यायचन्द्रिकोक्तप्रकारेणाप्यसकलय्यांशित्वहेतुत्वमेव तत्र मन्यते, परन्तूत्तरत्र दृग्दृश्यसम्बन्धानुपपत्तिमुपपादयन्ती सा दृक्तादात्म्यरूपं न्यायचन्द्रिकोक्तं हेतुं समाद्रियत इवेति प्रतिभाति।

**वृत्त्यभ्युपगमेन वृत्तिविषयत्वरूपदृश्यत्वस्य ब्रह्मणि व्यभिचारपरिहारेण समर्थनमद्वैतसिद्धेः, न्यायामृतोल्लिखितसर्वदृश्यत्वप्रकारसमर्थनं च।**

इदं छिद्रमवलोक्य न्यायामृतमुक्तांस्त्रीन् प्रकारानिवापरानपि त्रीन् प्रकारान् हेतोः संगृह्य दृश्यत्वानुमाने हेतुं निरस्यति। परन्तु दृक्तादात्म्यं न्यायचन्द्रिकाविवक्षितंतत्त्वप्रदीपिकयाऽर्थापत्तिविधया निरूपितं च प्रकारं दृश्यत्वस्य न मात्रामात्रेणापि स्पृशति। एवं संकलयन्न्यायामृतं वेदान्तिभिर्वृत्तिस्वीकारात् तन्मतरीत्यैव दूषणं पररीत्या परस्य निरसनं कर्तव्यं मत्वा वदति। तेन च न्यायचन्द्रिकायाः

२६

परिहारः सूच्यत इव। सिद्धिकारास्तु यद्यद्वैतदृष्टया वृत्तिमभ्युपगम्य दृश्यत्वहेतु-निरसनं क्रियते,, तर्ह्यद्वैतसिद्धान्ता वृत्तिविषये सर्वेऽपि प्रकाराः शिक्ष्यन्ताम्, येन ब्रह्मण्यनेकान्तिकतादिदूषणानामतीन्द्रिये भागासिद्ध्यादिपरिहाराणाञ्च प्रकारा अवगन्तुं शक्यन्त इति मन्यन्ते। तत्राद्वैतमतरीत्या फलव्याप्यत्वमात्रं न दृश्यत्वमत्र हेतूक्रियते, किन्त्वपरे न्यायामृतोल्लिखिताः पञ्चापि प्रकाराः समर्थ्यन्ते।

**मिथ्यात्वानुमानस्य मिथ्यात्वविषयकत्वम-**
**ध्यापनविधिप्रयुक्तत्वम्, स्वविधप्रयुक्तत्वं वाऽध्ययनस्येति**
**तत्त्वप्रदीपिकोक्तविधया, तेन**
**मिथ्यात्वस्य मिथ्यात्वेऽपि न प्रपञ्चसत्यत्वम्**

अत्र मिथ्यात्वमिथ्यात्वेऽपि प्रतियोगिनो न सत्यत्वमिति द्वितीयमिथ्यात्वा-वसरे तदतात्त्विकत्वपक्षोपपादनावसरे सिद्ध्यादौ सम्यग् विवेचितम्। अत्र तत्त्व-प्रदीपिकोक्तं मिथ्यात्वानुमानस्य स्वविषयविषयकत्वमप्यध्यापनविधिप्रयुक्तस्याध्य-यनस्यापि स्वविधिप्रयुक्तत्ववदेकावच्छेदकावच्छेदेन समर्थितमित्यनुसन्धेयम्।

**परस्पराध्यासोऽधिष्ठानस्य संसर्गमात्राध्यासेन,**
**न स्वरूपाध्यासेनारोप्याणामिवेति**
**ब्रह्मसिद्धिव्यवस्थाया न्यायामृतेनापि स्वीकारः**

तत आभाससाम्यभङ्गावसरे ब्रह्मणोऽपि मिथ्यापत्तिर्या शङ्किता, तत्रापि दृश्यत्वादिकमेव हेतूक्रियते, न तु परस्पराध्यासः तेन च परस्पराध्यासो ब्रह्मण्या-नारोपिते संसर्गाध्यासमात्रेणेति ब्रह्मसिद्धिव्यवस्था न्यायसुधादिभिराक्षिप्ता निरव-सरेति न्यायामृतमपि स्वीकरोति। तत्रानारोपितेऽधिष्ठाने संसर्गाध्यासेऽप्यधिष्ठान-विषयमेवाज्ञानं कारणम्, न त्वारोपितविषयमिति गुरुचन्द्रिकाद्युक्तमनुसन्धेयम्। तेन ह्यारोपितस्य परस्पराध्यासेऽधिष्ठानत्वं नापद्यते। तदेवं प्रत्यक्षादिना संभाव्य-मानदोषेण श्रौतस्य मिथ्यात्वस्याबाध उपपादितः।

**जगत्कारणत्वादिपराणामागमानाम-**
**ध्यारोपापवादन्यायेन प्रवृत्तत्वात्, तेषामा-**
**गमत्वेऽपि बाध्यतैव न तु बाधकता**

असंभाव्यदोषागमेन तादृशस्यागमस्याबाधशङ्का तु जगत्कारणत्वाद्यागमस्या-ध्यारोपेणैवापवादार्थं प्रवृत्ततया 'इदं रजतम्', 'नेदं रजतम्' इत्यनयोरिवोभयोरपि प्रत्यक्षत्वाविशेषेऽप्यपवादेनारोपबाधस्यैव युक्तत्वादध्यारोपापवादस्थल उभयोरपि वाक्यैकवाक्यतयाऽन्वयानुभावकत्वात्, अध्यारोपस्य शब्दार्थत्वमात्रत्वात्, "अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्यात् शब्दार्थस्त्वप्रयोगभूतः" इति न्यायेनाध्यारोपेण विरोधस्याकिञ्चित्करत्वात्, प्रत्युतापच्छेदन्यायेन परेणापवादेन पूर्वस्यैव बाधस्य युक्तत्वाच्च नावसरति।

**सावकाशनिरवकाशन्यायो निराकाङ्क्षवाक्यार्थस्यास्ति, कारणवाक्यादिषु त्वप्राप्तानुपपत्तिन्यायः, अतः कारण-वाक्यानामध्यारोपापवादन्यायेन प्रवृत्तानां न तन्न्यायेन व्यवस्था**

तत्र सावकाशनिरवकाशादिन्यायेनागमस्य बाधाशङ्का तु—तत्र सर्वत्रोभयो-रपि निराकाङ्क्षवाक्यार्थत्वेनाप्राप्तानुपपत्तिन्यायस्यानवताराद् नावसरति। एतदु-दाहरणेषु "आदित्यो यूपः" इत्यादावर्थवादस्य पदस्थानीयत्वात्, विध्येकवाक्यतयैव तस्या प्रामाण्यात्, तस्याप्रयोगभूतत्वाच्च न विध्येकवाक्यतार्थं तात्पर्यान्यथानुप-पत्त्याऽर्थान्तरपरता दोषाय। "सोमेन यजेत" इत्यत्रापि पदार्थमात्रत्वात् सोम-यागयोरन्वयो विरुद्ध इति कृत्वैव विशिष्टलक्षणा स्वीक्रियते। प्राचीनर्मीमांसकास्तु शास्त्रदीपिकाकारादयः 'दध्ना जुहोति' इत्यादिगुणमात्रविधानस्थलेऽपि—

"विधाने वाऽनुवादे वा यागः करणमिष्यते।
तत्समीपे तृतीयान्तं तद्वाचित्वं न मुञ्चति॥"

इति वचनमुपष्टभ्य तात्पर्योपपत्त्यर्थमेव मत्वर्थलक्षणां स्वीकुर्वन्ति। खण्ड-देवस्तु सोमेन इति तृतीयाया इत्थम्भूतलक्षणार्थत्वमूरीकृत्य विशिष्टविधिपक्ष इव। पार्ष्टिकबोधेन यागकरणत्वं सोमस्य सूपपादमिति लक्षणापक्षं परिजहातीति त्वन्य-देतत्। इदमेवाभिप्रेत्याद्वैतसिद्धिः -- तदुक्तमानन्दबोधाचार्यैः =

"तत्परत्वात्परत्वाच्च निर्दोषत्वाच्च वैदिकम्।
पूर्वस्य बाधकं नायं सर्प इत्यादिवाक्यजात्॥"

इति। मानान्तराबाधितं हि परशास्त्रं स्वविरुद्धस्य पूर्वस्य बाधकम्, तात्पर्य-विषय एव वार्थे प्रामाण्यात् प्रमाणस्य सतः परस्यैव प्रामाण्यं स्वीकर्तव्यम्। सर्वथा-ऽऽगमेनापि परेणापवादविधया प्रवृत्तस्य बाध एवागमस्यापि। अत्रोत्सर्गापवाद-सावकाश-निरवकाशादिबहुतरतत्तन्न्यायावालम्बनागमस्याप्यागमान्तरविरुद्धस्य वि-रोधपरिहारार्थं प्रमाणविशेषस्य प्रमाणविशेषबाधे प्रसक्ते तद्वारणम्, तत्तद्विषयसंको-चाद्युदाहरणं तु तेषामध्यारोपापवादविधयाऽप्रवृत्तत्वात्, पौर्वापर्यनियमाभावात्, विध्यर्थवादयोरिव पदैकवाक्यतया, वाक्यैकवाक्यतया वान्वयाभावाद् विषयभेदा-च्चात्राकिञ्चित्करम्, इति नागमस्य प्रपञ्चमिथ्यात्वपरस्यापाततस्तस्य तत्सत्यत्वपर-मूलस्यागमस्य च न बाधशङ्काऽप्यत्र।

**मिथ्याभूतस्याप्यर्थक्रियाकारित्वस्याऽऽक्षेप-समाधानाभ्यां सत्त्वस्य कारणता-नवच्छेदकत्वादिनोपपादनम्**

तत्रेयं शङ्का समुदेति—मिथ्यात्वे प्रपञ्चस्य कथमर्थक्रियाकारित्वमिति, इत्युक्तशङ्कानिरासार्थमुपरितनं प्रकरणम्—असतः साधकोपपत्तिप्रकरणं नाम। तत्रेदं प्रष्टव्यम्—सत एवार्थक्रियाकारित्वमित्यत्रोभयसम्मतं निदर्शनं किं नामेति ? किमिदं सत्त्वस्यापि कारणतावच्छेदकत्वमभिप्रेत्य, उत तत्तत्पदार्थस्वरूपमात्रमर्थक्रियाकारीति मत्वा। आद्ये किं नाम सत्त्वमर्थक्रियाकारितावच्छेदकम्, किं त्रिकालाबाध्यत्वरूपं सत्त्वम्, उत तत्तद्व्यवहारमात्रनिर्वाहकं यावद्बाधं व्यावहारिकसत्वम्, उत सत्ताजात्यादिमत्त्वम्, उत कालसम्बन्धमात्रम्। तत्र न कारणतावच्छेदकत्वं सत्वस्य कस्यापि—

"अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः॥"

इति खण्डनखण्डितम्।

तत्तत्पदार्थस्वरूपमात्रस्य तत्तदर्थक्रियाकारित्वं तु प्रातिभासिकस्य, व्यावहारिकस्य वाऽनिवर्वनीयस्यापि सदसद्विलक्षणस्वरूपत्वान्न विरुद्धम्। अर्थक्रियाकारितावच्छेदकं सत्त्वं त्रिकालाबाध्यस्य कस्याप्यर्थक्रियाकारिणो नाद्वैनमतरीत्या संभवति; ब्रह्मणोऽखण्डस्यार्थक्रियाकारित्वाभावात्, उपहितस्यौपाधिकबाधाभ्युपगमात्, अन्येषामनिर्वचनीयानां त्रिकालबाध्यत्वात्, परमतेऽपि घटादीनां त्रिकालाबाध्यत्वरहितानामप्यर्थक्रियाकारित्वाच्च। तत्तद्व्यवहारनिर्वाहकं तु सत्त्वं सत्ताजात्यादिरूपं सत्तादिजातिशून्यानामभावादीनामप्यर्थक्रियाकारित्वात्, अर्थक्रियाकारित्वयोग्यस्य धर्मस्यानिर्वचनीयसाधारण्यान्नासतोऽप्यर्थक्रियाकारित्वविरोधि।

### असतोऽर्थक्रियाकारित्वेऽसत्पदेन सद्विविक्तत्वमात्रं विवक्ष्यते, तत्तु सदसद्विलक्षणसाधारणमित्यादिव्यवस्थायाः सोदाहरणनिर्देशम्

असत्पदेन चात्र सद्विविक्तत्वं विवक्ष्यते न शशशृङ्गादेस्तत्। न चानिर्वचनीयस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपमसत्वम्, येन शशविषाणादिवदर्थक्रियाकारित्वाभावेऽनिर्वचनीयत्वं न स्यात्। न च सद्वैलक्षण्यमसत इवार्थक्रियाविरोधि; सिद्धान्तेऽसद्वैलक्षण्यस्यैवार्थक्रियाकारित्वप्रयोजकत्वात् षद्वसद्विलक्षणेऽनिर्वचनीयेऽसद्वैलक्षण्यमात्रेण सद्विलक्षणेऽप्यर्थक्रियाकारित्वोपपत्तेः, स्वाप्निकानामिवानिर्वचनीयानां रेखागत्रयादीनामप्यर्थक्रियाकारित्वदर्शनाच्च। न च तत्र तत्तज्ज्ञानमेवार्थक्रियाकारि; विषयाविशेषितस्य ज्ञानस्य स्वरूपसाम्यात् सर्वस्य ज्ञानस्य सर्वार्थक्रियाकारित्वापत्तेः, अर्थोपलक्षणमात्रेण ज्ञानस्य विशेषे तु सर्वत्रैवार्थक्रियाकारित्वापत्त्यार्थस्यासतोऽर्थक्रियाकारितायामर्थक्रियाकारिताकथाया भङ्गापत्तेः, ज्ञानस्यापि शुक्तिरूप्याद्याकारस्याविद्यावृत्तित्वेन प्रातिभासिकत्वेनाबाध्यत्वरूपसत्त्वाभावाच्च।

## ज्ञानमात्रस्य स्वाप्नादौ नार्थक्रियाकारित्वम् किन्त्वर्थविशेषितस्यैवेति बहुतरोदाहरणेन निष्कर्षः

अयमत्र निष्कर्षः—

असतः साधकत्वाभावे बिम्बरूपेण सतोऽपि प्रतिबिम्बाकारेणासतः प्रतिबिम्बस्य, स्वाप्नार्थस्य स्फटिकारोपितलौहित्यस्य च शुभाशुभसूचनोपाधिसन्निधाधसाधकत्वमनुभूयमानं बाधितं स्यात्। एतेन रेखारोपितवर्णप्रत्यायकत्वं वर्णारोपितदैर्घ्यस्यार्थभेदप्रत्यायकत्वं च व्याख्यातम्; ककारं लिखति गकारं पठतीत्यादिसार्वलौकिकव्यवहारेण रेखाणामेव वर्णात्मत्वारोपेणार्थप्रत्यायकत्वम्, न तु तत्स्मारितवर्णानामित्यङ्गीकरणीयत्वात्। ध्वनीनामस्फुरणेऽपि दीर्घो वर्ण इति प्रत्ययेन-दैर्घ्यादीनां वर्णे समारोपस्यैवाङ्गीकरणीयत्वाच्च। अत एव हि सवितृसुषिरादेः, तज्ज्ञानस्य वाऽरिष्टसाधकत्वमुपपद्यते; अवच्छिन्नस्य जनकत्वेऽवच्छेदकस्यापि तत्त्वावश्यकत्वात्। घटदेशकालौ गृहीत्वा ग्राह्यस्य तद्भिन्नदेशकालत्वस्य घटाभावादिसंबन्धस्य घटेनापि संबन्धे तद्देशकालभिन्नदेशकालत्वस्यैव व्याहत्यापत्त्या-घटस्याभावे, वेदान्तसाध्यत्वे नित्यत्वविरोधापत्त्या ब्रह्मणो ज्ञाने, स्वस्य स्वजनकत्वे प्रतियोगि-प्रागभावयोः समकालिकत्वापत्त्या घटस्य प्रागभावे, प्रतियोगितदभावयोः सदावृत्त्या भ्रम-प्रत्यवाययोरनुपपत्तिप्रसङ्गेन विशेषदर्शनविहितकरणयोस्तदभावे च सिद्धे इच्छानुपपत्त्या कामनाया एव व्याहत्यापत्त्या स्वर्गस्य कामनायाः, कार्याव्यवहितपूर्वकाले स्व-स्वव्याप्यान्यतरसत्त्वापत्याऽतीतस्य स्मृतौ, निःस्वरूपत्वव्याघातापत्याऽसतः परोक्षज्ञाने, घटस्यापि स्वजनकत्वे चिकीर्षाया एव व्याहत्या चिकीर्षाया घटस्य ज्ञाने, शुद्धब्रह्मणो वृत्त्यविषयत्वेन निवर्तकत्वायोगेन ब्रह्मणो ज्ञाने च विशेषणत्वस्य बाधादुपलक्षणत्वाङ्गीकारेऽपि सूर्यसुषिरादिज्ञाने सूर्यसुषिरादेर्विशेषणत्वे बाधकाभावान्नोपलक्षणत्वमित्यसतो विषयस्यापि साधकत्वस्यानुभवात्। अत एव ह्युत्कृष्टसर्पविज्ञानेनोत्कृष्टभयाद्यनुविधानोपपत्तिः।

एतेन ज्ञानत्वेनैव जनकत्वम्, न तु विषयावच्छिन्नत्वादिनेति वस्तुतस्त्वित्यादिना प्रतिपादितं निरस्तम्; स्वरूपस्य सर्वज्ञानसाधारण्याभावेऽनुगतस्य कस्यचन धर्मस्यैवासर्पज्ञानादिव्या वृत्तिप्रयोजकत्वस्य वर्णनीयतया, तस्य च चाक्षुषत्वादिना सांकर्येण ज्ञानत्वजातिरुपत्वासंभवात् स्वरूपसंबन्धेन वाऽध्यासिकसंबन्धेन वा ज्ञानसंबन्धिविषयरूपत्व एव पर्यवसानाद्विषस्यापि साधकत्वस्यैव युक्तत्वात्।

एतेन—तज्जनकविलक्षणजन्यत्वेन तज्जन्यविलक्षणजनकत्वेन च हेतुना धर्म्यन्तरसंबन्धानपेक्षवैलक्षण्यानुमानमपि—पराहतम्; उक्तप्रकारेण विषयसंबन्धमपेक्ष्यैव वैलक्षण्यस्य वर्णनीयतया बाधात्, घटरुपोपाधिसंबन्धेनैव विलक्षणे

घटसंयोगे व्यभिचारात्, अप्रयोजकत्वाच्च। अतीतादेरपि व्यावृत्तिजनकधीविषयत्वं व्यावर्तकत्वं विद्यत एवेति नानुपपत्तिः। एतेन —विषयस्येव विषयावच्छिन्नज्ञानस्यापि मिथ्यात्वमिति—सूचितम्। तुच्छत्वादर्शनमप्यबाधकम्। वस्तुतस्तु सत्त्वं न तावत् कारणतावच्छेदकम्, न वा तुच्छविलक्षणत्वम्, किन्तु दण्डत्वादिक, मेव तद्भेदाच्च कारणमपि भिन्नभिन्नम्। तथा च जनकत्वाद्यनुसारेण न सत्त्वासत्त्वसिद्धिः। तदुक्तं खण्डनकृद्भिः—

"पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥
अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् करणं तदसत्ततः॥ इति।

एतेन—

अन्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः।
नान्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः" ॥

इति साम्यापादनम्—पराहतम्; अधिष्ठाने मया स्वरुपेण सत्ताङ्गीकारवत् त्वया तदनङ्गीकारेण वैषम्यात्। "कथमसतः" इति श्रुत्यादिकं तु तुच्छे जनकत्वनिषेधपरं नास्माकं प्रतिकूलम्; अस्मन्मतेऽपि तुच्छस्य जनकत्वानङ्गीकारादिति सर्वमनवद्यम्।

**दृश्यत्वस्य ज्ञानजन्यफलाधारत्वादिरूपस्य मिथ्यात्वाप्रयोजकत्वे सत्यत्वापत्तिः, अन्यथा दृक्तादात्म्यानुपपत्तिः, वृत्तिव्याप्यत्वं विषयत्वं तूपहितस्यैव, इति न ब्रह्मणः शुद्धस्य तेन मिथ्यात्वम्**

तदेवं मिथ्याभूतस्यार्थक्रियाकारित्वात् तस्यासाधकत्वेऽनुपपत्तेर्दृश्यत्वेन मिथ्यात्वानुमाने न कोऽपि बाधः। तत्र दृश्यत्वस्य मिथ्यात्वाप्रयोजकत्वशङ्का तु सत्यत्वानुपपत्तिरेव बाधिकेति निरूपणार्थमनन्तरं प्रकरणम्।

तत्र (१) ज्ञानजन्यफलाधारत्वम्, (२) ज्ञानजन्यहानादिबुद्धिगोचरत्वम्, (३) ज्ञानकर्मत्वम्, (४) ज्ञानाकारसमर्पकत्वम्, (५) दृश्यमानत्वविशिष्टत्वम्, (६) ज्ञानजन्यव्यवहारयोग्यत्वम्, (७) तत्संनिकृष्टकारणजन्यज्ञानसम्बन्धित्वम्, (८) यस्यां संविद्यर्थोऽवभासते, स तस्या विषयः, तथा च संविदि भासमानत्वम्, (९) सम्बन्धान्तराद् ज्ञानावच्छेदकत्वं दृश्यत्वं यद्यपि जन्यज्ञानविषयत्वमादाय वक्तुं शक्यम्; तथापि तदिदं दृश्यत्वं प्रातिभासिकसाधारणम्, सविन्मात्रसम्बन्ध्यविद्यादावनादावव्याप्तम्, तस्या विना जन्यज्ञानं साक्षिमात्रभास्यस्यानादेर्दृगध्यस्तत्वमात्रस्यैव दृक्तादात्म्याभिधानस्य संभवात्; अन्यथा तन्मिथ्यात्वानुपपत्तेः।

अत एव न्यायचन्द्रिकायां दृक्तादात्म्यरूपमेव दृश्यत्वमत्र हेतूक्रियते। अद्वैतसिद्धौ तु वृत्तिव्याप्यत्वं ब्रह्मसाधारण्याभावेऽपि यद्धेतुत्वेन विवक्षितम्, तदिदं ब्रह्माखण्डं न वृत्तिव्याप्यमपि, किन्तु वृत्त्याऽऽवरणाभिभवे स्वप्रकाशमात्रं ब्रह्म, वृत्तिव्याप्यमुपहितं तूपहितरूपेण मिथ्यैवेति निरूपितम्। तथा च ब्रह्मणोऽपि दृक्तादात्म्यवद् वृत्तिव्याप्यात्वस्याप्यसंभवान्नानैकान्तिकत्वापत्तिः। एतत्प्रस्थानेऽविद्यादीनामपि प्रत्याक्षानुमानागमादिविषयत्वम् वृत्तिविषयत्वेन मिथ्यात्वं च नानुपपन्नम्। नित्यपरोक्षगुरुत्वादीनामपि वृत्तिव्याप्यत्वमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्याध्यस्तत्वेनैव वृत्तिव्याप्यत्वात् तन्मते मिथ्यात्वोपपत्तिः। व्यवहारविषयत्वं त्वखण्डब्रह्मातिरिक्तस्यैव, इति तदन्यथानुपपत्त्या मिथ्यात्वमपि दृक्तादात्म्येनैव। वृत्त्युपहिते ब्रह्मणि वृत्तेर्दृक्तादात्म्यमादाय मिथ्यात्वव्यपदेशः। ज्ञानस्य परोक्षत्वापरोक्षत्वविभागादिकमपि न वृत्तिसम्बन्धमात्रेण, किन्तु तदवच्छिन्नचैतन्याध्यासेनैव। न च चैतन्यमात्राध्यासेन परोक्षत्वापरोक्षत्वविभाग उपपद्यते, किन्तु तदर्थं वृत्तिनिर्गमवादोऽपि, येन प्रतिकर्मव्यवस्थादिकमुपपद्येत। यद्यपि दृक्तादात्म्यरूपदृश्यत्वज्ञानं वृत्तिसापेक्षम्; तथापि मिथ्यात्वप्रयोजकत्वं तादात्म्यस्यैव मुख्यम्; अत एव वृत्तिव्याप्यतापीत्यभिप्रेत्यैव न्यायचन्द्रिका दृक्तादात्म्यं दृश्यत्वमेव मिथ्यात्वप्रयोजकमिति वदति। सर्वत्र वृत्तेरुपयोग आवरणाभिभवार्थः। ब्रह्मव्यतिरिक्तेषु त्वावरणाभिभवार्थोऽपि, साक्षिचैतन्याभेदार्थोऽपि, चिदुपयोगार्थोऽपि वा। अधिकं सिद्धान्तलेशसंग्रहादौ व्यक्तम्।

### ब्रह्मण इदन्तया वेद्यत्वाभावः, आवरणाभिभवमात्रार्थत्वाद् वृत्तेः

ब्रह्म नेदन्तया वेद्यम्, किन्त्वविद्यानिवृत्तिमात्रार्थतया। अत एव भगवत्पादभाष्यं "न हि शास्त्रमिदन्तया ब्रह्म बोधयति, अविद्यानिवृत्तिपरत्वाच्छास्त्रस्य" इति। तद्धि स्वप्रकाशं न स्वप्रकाशार्थं वृत्तिमपेक्षते। इदमेवाध्यासभाष्योपक्रमे "युष्मदस्मत्प्रत्ययगोचरयोर्विषय विषयिणोः" इत्यनेनापि सूच्यत इति प्रागेव व्यक्तीकृतम्।

### एकमेवेत्यादिश्रुत्यर्थविचारः

तदेवं प्रतिकर्तृव्यवस्थाद्युपपत्त्या दृश्यत्वस्य साक्षात्, परम्परया वा दृक्तादात्म्यरूपस्य मिथ्यात्वं विना ब्रह्मव्यतिरिक्तस्यानुपपत्त्या प्रत्यक्षानुमानादीनां मिथ्यात्व एव तात्पर्यस्य युक्तत्वेन प्रपञ्चमिथ्यात्वमुपपादितम्। ततः प्रकरणचतुष्टयेन मिथ्यात्वश्रुतीनामुपपत्तिः। तत्राद्वैतसिद्धिकारैः "एकमेवाद्वितीयम्", 'तरति शोकमात्मवित्" इत्यादिमिथ्यात्वपराणां वाक्यार्थो निर्णीयते यदधिकृत्य तत्तन्मिथ्यात्वलक्षणाविचार एव विशदीकृतम्।

दृष्टिसृष्टिवादे तु सिद्धिकाराश्चन्द्रिकाकाराश्च स्वीयं वक्तव्यं सम्यगेव विवेचयन्ति।

## एकजीववादनिष्कर्षः

एकजीववादेऽद्वैतसिद्धिनिष्कर्षस्तु—अविद्यावशात् सर्वशरीरेषु संसरतः समष्टयभिमानिन एव मुख्यजीवत्वेन, तस्यासुप्तत्वेन, सुप्ते च तस्मिन् लयकाले जगदप्रतीतेरिष्टत्वात्, संस्कारस्य कारणात्मनाऽवस्थितेः सुप्तपुनरुत्थानोपपत्तेः, समष्टयभिमानिन एव तल्पैकत्वेन प्रतिशरीरमहम्प्रत्ययविषयत्वेन च 'तव' 'मम'इत्यादिविकल्पाद्यनुपपत्तेः, ब्रह्मण एव जीवत्वेऽपि बन्धस्याऽऽविद्यकत्वेन नित्यमुक्तत्वश्रुतिविरोधाभावात्, भिन्नभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वादिव्यवस्थोपपत्त्या तत एव चैत्रमुखानां मैत्रेणानुसन्धानस्य "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इत्येकत्वश्रुतिविरोधेनाविद्यायामित्यादिश्रुतेर्भ्रमप्राप्तबहुत्वादेवोपपत्तेर्वर्णनीयतयाऽविद्या-कर्म-बन्धादीनामनेकधर्मत्वोक्तश्चोपपत्त्येश्वरकारणत्वव्यवस्थापनसिद्धान्तविरोधाभावस्याविद्याचिन्मात्राश्रयत्वोपपादनावसरे निरूपयिष्यमाणत्वेन चानेकशरीरकैकजीववादासंभवात्, समष्टयभिमानिनो जीवस्यैव सर्वज्ञत्वस्य—"तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप" इति स्मृत्यनुसारेण वर्णनीयतया सर्वज्ञत्वादिश्रुतीनामुक्तस्मृतेश्च निर्विषयत्वाभावेन तद्विरोधाभावात्, सामान्यतो मोक्षोपयोगिज्ञानविशेषवित्त्वेनाज्ञाततत्त्ववित्त्वेन तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्योपदेष्टृत्वसंभवेन "यदेव भगवान्" इत्यादिश्रुतिस्मृतिविरोध-मोक्षापदेशवैयर्थ्यानामप्रसङ्गात्, शिष्यवद् गुरोरपि कल्पितत्वेन स्वप्नगुरोरिव प्रवचनादौ प्रवृत्त्युपपत्त्या सर्वव्यवस्थोपपत्तेः प्रमामूलकत्वाभावेऽप्यबाधितविषयकत्वेन शास्त्रप्रामाण्योपपत्त्याऽनिश्चिताद्वैतकल्पकत्वाविरोधात्, एकत्वेन वस्तुतोऽसंसारिणोऽपि शुद्धचैतन्यस्य स्वाश्रिताविद्यावशेन कल्पकत्वाद्युपपत्तेः, अपूर्वजातीयानुत्पत्तिप्रसङ्गेनासाम्प्रदायिकत्वस्योत्पत्तिविरोधित्वाभावेन कारणसत्त्वस्यैव तद्विरोधित्वेन च कारणाभावात्. पूर्वं तत्त्वज्ञानानुत्पत्तावपि कारणसमवधाने इदानीं पश्चाद्वा तत्त्वज्ञानोत्पत्तिसंभवेन शास्त्रप्रामाण्यदार्ढ्यात्तत्त्वज्ञानोत्पत्तिविषयकश्रद्धादेरपि संभवात्, "तद्यो यो देवानाम्" इत्यादिश्रुतीनां भ्रमसिद्धजीवभेदाद्यनुवादकत्वेन तद्विरोधाभावाच्चैकजीववादोऽपि युक्त एवेति।

## मिथ्यात्वस्याज्ञानमूलकत्वस्याध्यासभाष्य उल्लेखाद् ज्ञानस्वरूपादिविचारस्याऽऽवश्यकता

सर्वोऽप्ययं मिथ्यात्वविचारः प्रधानमज्ञानं मूलीकृत्यैवात्मानं लभते। अध्यासभाष्येऽपि "मिथ्याज्ञाननिमित्तः" इत्यध्यासेऽज्ञानस्य निमित्तत्वं प्रस्तुतम्—"तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः" इति, 'कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि' इति।

### अविद्याविरोधित्वं वृत्तेरेव, न तु चैतन्यस्य, अतो नाविद्याया ब्रह्माश्रयत्व-विषयत्वायोगः

अत्र 'अध्यासं पण्डिता अविद्येति मन्यन्ते' इत्यत्राध्यारोपे कार्याध्यास इव मूलाज्ञानमपि नियम्यत इति व्यवस्थानुसन्धेया। अतोऽविद्याविरोधिनी विद्येति वाक्यनिर्दिष्टा विद्या का नामेति शङ्कायां ब्रह्मसिद्धिः—"न खल्वात्मस्वभावा विद्याऽविद्यानिर्वर्तिका; अविद्यायास्तया विरोधाभावात्, विरोधे वा नित्यनिवृत्तेर्नित्यमुक्तं जगत् स्यात्। न च विद्यान्तरमस्य विरोधिनिवर्तकम्, ऐकात्म्यवादे व्यतिरिक्तस्य तस्यायोगात्। आगन्तुकस्य ब्रह्मस्वभावत्वानुपपत्तेश्चेत्यात्मस्वभाव एव विद्या नाम। तस्याश्चाविद्ययाऽविरोधान्नाविद्यानिवर्तकत्वमित्याशङ्क्य—केन पुनरविद्या निवर्तते ? श्रवण-मनन-निदिध्यासनाभ्यसनैः साधनमेव शास्त्रोक्तैरित्यादिनाऽविद्याविरोधिनी विद्या श्रवणादिजन्याऽखण्डाकारवृत्तिरेवेति विवेचितम्। विश्वसिमः—"एतद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः" इति भाष्यार्थ एवात्र निष्कृष्यते। ब्रह्मविद्याभरणमप्यमुमर्थं स्पष्टयति। "अविद्यानिवृत्तिपरत्वात् शास्त्रस्य" इति समन्वयसूत्रभाष्यमसन्दिग्धमिममर्थमुपबृंहयति।

### अविद्यास्वरूपे सर्वदर्शनाविप्रतिपत्तिः, तस्या ज्ञानेन निवृत्तौ च

न चाविद्यायां विद्यानिवर्त्यायां निप्रतिपत्तिः, यतः सर्वप्रतिवादिभिश्चेत्थमास्थेया। तथा हि शून्यवादिना सत्त्वे यथादर्शनं नाविद्या, खपुष्पतुल्यत्वे न व्यवहाराङ्गम्। विज्ञानमात्रवादिनोऽपि यथावभासं ज्ञानसद्भावे नार्थापह्नवः; नीलपीतादेर्ज्ञेयाकारस्य बहिरवभासानपह्नवनात्, अत्यन्तासत्त्वे त्वहिरवभासायोगात् खपुष्पम्। बाह्यार्थवादिनामप्यनित्यादिषु नित्यादिख्यातयो रजतादिभ्रान्तयश्चावभासमानरूपसद्भावेनाविद्यात्वमश्नुवीरन्निति ब्रह्मसिद्धौ। अतो नाविद्याया अपह्नवः, इति। अनादिरप्रयोजना च मूलाविद्याऽपि ब्रह्मसिद्धिसंमता। अतस्तत्स्वरूपभेदे सत्यपि नापलापोऽविद्यायाम्, तत्त्वज्ञानेन निवृत्तौ च सम्भवति।

### अविद्याया अभावविलक्षणत्वे भावत्वव्यपदेशः, तस्या भावाभावविलक्षणत्वेनानिर्वचनीयत्वमेव स्वरूपम्

अस्या अविद्याया लक्षण-प्रमाणादिकं सर्वमपि तत्त्वप्रदीपिकादौ सम्यक् परीक्षितम्, यस्य न्यायसुधादौ निरासो दृश्यते। सा च भावरूपा। भावरूपत्वं च तस्या अभावविलक्षणत्वमात्रेण, परमार्थतस्तु भावाभावविलक्षणा तृतीयप्रकारा सेतीष्टसिद्ध्यादौ व्यक्तम्।

### अविद्याभावरूपत्वे द्वैतिनामविप्रतिपत्तावपि न्यायामृतेन न्यायदृष्ट्या भावत्वनिरासाद् न्यायामृत-

### निरासलक्ष्यत्वादत्राद्वैतसिद्धेरत्राभावत्वनिरासः, वस्तुतस्तु भावत्वनिरासोऽप्यत्र

यद्यपि द्वैतसिद्धान्तेऽपि भावरूपमेवाज्ञानम्, नाभावरूपम्; तत्रानिर्वचनीयत्वादौ विप्रतिपत्तावपि तत्राविवादात्; तथापि तस्या भावरूपत्वसमर्थनं नैयायिकादिनिरासदृष्ट्यैव, न तु स्वदृष्ट्येति तदीय एव निबन्धे व्यक्तम्, इति न्यायामृतस्य तद्भावत्वनिरासो न वस्तुगतिमनुरुध्येति तन्निरासार्थमद्वैतसिद्धिकाराणां प्रयत्नो निष्प्रयोजनः; तथापि 'गतानुगतिको लोकः' इति न्यायेन न्यायामृतगतिमेवानुरुध्याद्वैतसिद्धिरप्यत्र कृत्वाचिन्तया गच्छति ।

### अविद्यालक्षणानां तत्त्वप्रदीपिकोक्तानां निरूपणम् सर्वेषां लक्षणानां तत्र समन्वयश्च

तत्राविद्यालक्षण-मानादिविषये तत्त्वप्रदीपिकामेवालम्बते, प्रायेण न्यायामृतनिरासार्थमद्वैतसिद्धिः । तत्राज्ञानलक्षणमनादिभावत्वे सति ज्ञाननिवर्त्यत्वम्, भ्रमोपादानत्वम्, ज्ञानत्वेन रूपेण ज्ञाननिवर्त्यत्वं वा । तत्राद्यस्य प्रपञ्चोपादानमूलाज्ञानेऽनादिभावत्वस्य, उपादानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः । शुक्तिरूप्याद्यज्ञानमनाद्येव ज्ञाननिवर्त्यरूप्योपादानमपीति लक्षणसमन्वयः । भावत्वं चास्याभावविलक्षणत्वमात्रेण, तस्य ज्ञानाभावत्वनिरास एव तात्पर्यात्, तस्य भावाभावविलक्षणतृतीयप्रकारत्वात् तस्याभावोपादानत्वमपि न विरुद्धम् ।

### तृतीयप्रकाराया अविद्याया भावाभावोभयोपादानत्वोपपत्तिः

न चोपादानोपादेयभावे साजात्यनियम इति तु 'न विलक्षणत्वात्' इत्यधिकरणेन सिद्धान्तितम् । अतस्तस्याभावभिन्नत्वेऽपि न भावत्वम्, किन्तु सदसद्विलक्षणत्वमेव; तथापि भावानामपि सतां तृतीयप्रकारत्वमत्याहतम् । यत्किञ्चित् साधर्म्यं तु सर्वत्र सत्त्वादिना सुलभमित्यपि तत्रैव व्यक्तम् ।

### ज्ञानस्याज्ञाननिवर्तकत्वम्, जीवन्मुक्तानां संस्कारस्यापि ज्ञानेनैव निवृत्तिरित्यादिविवेकः

ब्रह्मणो वृत्तिविषयत्वपक्षेऽपि स्वरूपसदुपाधिमतो ज्ञानस्यैव निवर्तकत्वादज्ञानस्य ज्ञाननिवर्त्यत्वम् । जीवन्मुक्ताज्ञानसंस्कारादीनामखण्डाकारवृत्तेश्चाज्ञानयुक्तत्वेनप्रारब्धस्य प्रतिबन्धकस्याभावे ज्ञाननिवर्त्यत्वम् ; अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहितभ्रमव्याप्यभुज्यमानादृष्टाभावसहितस्याऽऽदेहादिमोक्षमभ्यसमानस्य तत्त्वज्ञानस्यैवाज्ञाननिवर्तकत्वात्, "भोगेन त्वितरे क्षपयित्वा ततः संपद्यते" इति सूत्रस्य प्रारब्धाभावसहकारबोधनमात्रे तात्पर्यात्, स्वत एव संस्काराणां निवृत्तिरित्यस्यापि विना प्रयत्नं साक्षात्कारस्यानुवृत्तिबोधन एव तात्पर्याच्च ।

## अविद्याया भावाभावविलक्षणत्वरूपतृतीयप्रकारत्वाविरोधः, तस्य बाधोपपत्तिश्च

सत्त्वासत्त्वयोरिव भावाभावयोरपि परस्परविरहरूपत्वाभावस्य न्यायचन्द्रिकोक्तरीत्या स्वीकर्तव्यत्वान्न तृतीयप्रकारत्वविरोधः। अज्ञानस्य यावत् स्वसत्त्वं साक्षिभास्यत्वमप्यविद्यावृत्त्युपहितचैतन्यस्यैव साक्षित्वादविद्यानिवृत्तिकाल एव साक्षित्वस्यापि निवृत्तेः संविन्मात्रस्यासाक्षित्वान्न बाधायोगः।

## अविद्याया भ्रमोपादानत्वलक्षणस्य निर्दुष्टत्वम्

भ्रमोपादानत्वं वाऽज्ञानलक्षणम्। इदं तु मायाऽपि परिणामविधयोपादानकारणमिति विवरणमताभिप्रायेण। उपादानत्वं हि तस्याः परिणामिविधयैव विवक्षितमिति न ब्रह्मण्यतिव्याप्तिः। अत्रापि तृतीयप्रकारत्वाद् भावाभावोभयोपादानत्वं यथायथमनाहतम्। अन्यदपि लक्षणमेवमव्याहतं द्रष्टव्यम्।

## भावरूप एवाज्ञानेऽहमज्ञ इति प्रत्यक्षं प्रमाणम्

अथ भावरूपेऽज्ञाने प्रत्यक्षप्रमाणोपन्यासः। यद्यपि द्वैतमतेऽपि भावरूपमेवाज्ञानम्, नाभावरूपमिति द्वैताद्वैतमतप्रकियाप्रस्तावे नायं विचारः सावसरः; तथापि न्यायामृतमनुसृत्यैव 'गतानुगतिको लोकः' इति न्यायेनाद्वैतसिद्धिरप्याऽऽन्तमनुगच्छति। 'अहमज्ञः', 'मामन्यं च न जानामि' इति प्रत्यक्षमज्ञानमवगाहते, न तज्ज्ञानाभावपरम्; धर्मि-प्रतियोगिज्ञानयोः सतोर्ज्ञानाभावानुभवविरोधात्, भावरूपत्वे त्वज्ञानस्य धर्मिज्ञानस्य साक्षिज्ञानत्वात् साक्षिणश्चाज्ञानसाधकत्वादुपपत्तिः।

## अज्ञानस्य ज्ञानाश्रयत्वोपपत्तिः, साक्षिवेद्ये सुखादौ 'सुखं न जानामि' इति प्रतीत्युपपत्तिश्च

अत्राहमर्थस्याज्ञानाश्रयत्वेन नाज्ञानानुभवविरोधः। विवरणाचार्यैरहमज्ञ इति प्रतीतौ तस्य शुद्धचैतन्याश्रयत्वेऽप्यन्तःकरणाज्ञानयोरेकत्र द्वयमिति रीत्या शुद्धचैतन्याश्रयत्वेनैवोक्तानुभवस्य व्यवस्थापनात्, साक्षिवेद्ये सुखादौ तु साक्षिणोऽज्ञानाविरोधेऽपि 'सुखं न जानामि' इत्यादिप्रतीत्यापादनं न्यायामृतगतम्, तदीयचन्द्रिकागतम्, बिन्दुटीकायां च ब्रह्मानन्दसरस्वतीभिः सुखस्यैवाज्ञानविरोधित्ववर्णनेन परिहृतम्। अत एव 'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यम्' इति विवरणमुपपद्यते।

## 'न जानामि' इति प्रतीतेर्ज्ञानाभावाभावविषयत्वेऽप्यज्ञानस्य भावरूपतैव

वस्तुतस्तु 'न जानामि' इति ज्ञानप्रागभावविषयमित्येवाभाववादिना स्वीकर्तव्यम्। ज्ञानप्रागभावश्च ज्ञानस्याज्ञानावस्थैवेति तेनापि भावरूपाज्ञानविषयत्वमेव पर्यवस्यति। अत एव चाज्ञानोपादानता, तदीयेनावरणेन ब्रह्मणो विवर्तमानता च सिद्ध्यति। अस्याज्ञानस्य भावरूपस्य विक्षेपशक्तिः प्रायेण सर्वसंमता, तस्यावरणशक्तौ परं विवादः। अधिकमन्यत्र।

### भावरूपे ज्ञाने विवरणाचार्याद्यभिमता-
### नुमानप्रमाणोपन्यासः, सर्वेषां
### भावाभावविलक्षण-
### तृतीयप्रकाराज्ञानसाधनत्वाविरोधः

अथाज्ञानेऽनुमानप्रमाणं यथा-(१) प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त स्वविषया-ऽऽवरण स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमो-त्पन्नप्रदीपप्रभावत्; (२) चैत्रप्रमा प्रागभावातिरिक्तानादिनिर्वर्तिका, प्रमात्वात्; मैत्रप्रमावत् (३) विगीतो भ्रम एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, संमतवदिति तत्र त्रयः प्रयोगाः। तत्राऽऽद्यमनुमानमेकाज्ञानपक्षे विवरणा चार्याणाम्। एवं तृतीयानुमानमपि। द्वितीयं तु जीवाज्ञानवादं तन्नानात्ववादं चाश्रित्य। सर्वत्र प्रागभावातिरिक्तत्वमेवानुमानस्य विषयः न तु तस्य स्वरूपं भावत्वमपि वा, तेनाज्ञानस्य न भावाभावविलक्षणतृतीयप्रकारत्वविरोधः।

### अविद्यानुमाने वस्तुपदप्रयोगप्रयोजनादिः

यद्यपि प्रथमानुमानुमाने वस्तुपदं प्रयुक्तम्; तथापि तत्तृतीयप्रकारतापक्षेऽपि तद्वस्तुत्वस्य व्यावहारिकत्वं सत्यस्यानिर्वचनीयत्वेऽपि स्वीकारान्न क्षतिः; अन्यथा प्रमाणेनानुमानेन प्रमाणज्ञानस्यापि पक्षत्वेऽज्ञानविषयकाज्ञानान्तरसाधनाच्चानवस्था स्यात्। अतोऽत्र प्रथमज्ञानस्य प्रागभावव्यतिरिक्तत्वमेव साध्यम्। तत्र तत्र प्रमाण-ज्ञानेन भावत्वमेव साध्यत इति वर्णनमपि तस्याभावव्यतिरिक्तत्वाभिप्रायमेव। तत्रैव खल्वविद्यायां विप्रतिपत्तिः; अन्यथा विशिष्य प्रागभावव्यतिरिक्तेति विशेषणं वितथम्; वस्तुपदेन भावत्वविवक्षयाऽपि प्रागभावव्यावृत्तिसिद्धेः। अत एव द्वितीया-नुमाने वस्तुपदाभावः। तृतीयानुमानेऽबाध्यातिरिक्तत्वविशेषणं तु ब्रह्मोपादानकत्व-मात्रमादाय सिद्धसाधनवारणार्थम् विवरणमतेऽज्ञानब्रह्मोभयोपादानत्वस्वीकारात्। तत्र मण्डनमते, वाचस्पतिमते वा ब्रह्ममात्रोपादानकत्वस्वीकारात् तन्मतनिरासा-भिप्रायं तृतीयानुमानम्।

### अनृत-मायाऽज्ञान-तमोनीहारादिघटितश्रुति-
### प्रमाणानामावरणशक्ति-
### मति आवरणविक्षेपशक्तिद्वयवति
### वाऽज्ञाने प्रमाणानामुपन्यासः

अथाज्ञाने श्रुतिप्रमाणोपन्यासः। तत्राज्ञाने 'अनृतेन प्रत्यूढाः' 'विश्वमाया-निवृत्तिश्च' इति च श्रुतिः। ज्ञाननिवर्त्येऽज्ञाने मानम्, मायाऽविद्ययोरैक्यात्, तस्याः शक्तिभेदमात्रत्वाद्वाऽऽवरणनिवृत्तिपरत्वस्यैव युक्तत्वाच्च, इति। श्रुतिद्वयमिदमज्ञाने प्रमाणम्। 'ज्ञानेन तु तदज्ञानं येषां नाक्षिशतमात्मनः।' इति तु ज्ञाननास्यत्वमज्ञानस्य

प्रतिपाद्यते। एवम्—'नासदासीद् नोसदासीत् तम आसीत् तमसा गूढमग्रे प्रकेतम्' इति श्रुतिः सदसद्विलक्षणावरणशक्तिमदज्ञाने प्रमाणम्। अनिर्वचनीयस्यापि कालसम्बन्धस्यानिर्वचनीयस्य स्वीकारात् 'तम आसीत्' इत्यासीच्छब्दप्रयोगोपपत्तिः। किं बहुना ? मायाशब्दो मिथ्याभूतविचित्रकार्यकारिपरः, शुक्तिरूप्यादौ तत्तदुपादानाज्ञानानां भावरूपाणां स्वीकारात्। विचित्रार्थक्रियाया व्यवहार एव साक्षात् मायाशब्दप्रयोगः सर्वथा तु वज्रादौ पृथिव्यादिव्यवहाराभावेऽपि पृथिवीत्ववद् मायाशब्दव्यवहाराभावेऽपि न दोषः, 'नैमित्तिके सति निमित्तानुसरणम्, न तु निमित्तमस्तीति नैमित्तिकारोपः' इति न्यायाच्च। नीहार-तमःशब्दावपि 'नीहारेण प्रावृताः', 'तमसा गूढमग्रे' इत्यादिवाक्यगतौ मायाया आवरणशक्तौ प्रमाणम्। श्रुत्यन्तराणि चात्र प्रमाणानि सविमर्शमद्वैतसिद्धौ विस्तृतानि।

### जीवस्यानवच्छिन्नानन्दप्रकाशानुपपत्तिः भ्रमस्य सोपादानत्वानुपपत्तिश्चाविद्यायां प्रमाणम्

अर्थापत्तिप्रमाणमप्यविद्यायामद्वैतसिद्धौ सविस्तरं परीक्षितम्—तत्रैका (१) तत्राऽऽद्या जीवस्यानवच्छिन्नब्रह्मानन्दप्रकाशानुपपत्तिः, (२) भ्रमस्य सोपादानत्वानुपपत्तिर्द्वितीया। तत्र जीवस्यानवच्छिन्नब्रह्मभावो जीवत्वेश्वरत्वादिविभागशून्यतायामेव, न तूपाधिप्रयुक्तजीवत्वाद्यवस्थायाम्, जीव ब्रह्माभेदेऽपि 'सन् घटः' इत्यादौ सदात्मना यथा ब्रह्मप्रकाशोऽसत्त्वापादकाज्ञानविषयत्वमात्राभावेन, एवमानन्दात्मनाऽप्रकाशोऽपि भवितुमर्हति; तथापि तदात्मनाऽप्रकाशोऽनानन्दतापादकाज्ञानवशात्, किन्तु तत्र सदाद्यात्मनाऽखण्डाकारब्रह्मणोऽज्ञानमनाद्यविद्याप्रयुक्तं सदादिभेदमादायैवेति जीवेशादिभिरखण्डस्य ब्रह्मणः सदादिभेदः। तत्राप्यानन्दात्मनाऽप्रकाशः सदाद्यात्मनैव प्रकाश इत्यादिकमनाद्यविद्याया अनादियोगं विना नोपपद्यते। सर्वथा त्वनवच्छिन्नब्रह्मण आनन्दात्मनाऽपि प्रकाशानुपपत्तिः प्रथमाऽविद्यायां प्रमाणम्।

### भ्रमोपादानत्वानुपपत्तिर्विवरणरीत्यैवाज्ञाने प्रमाणम्

एतेन—भ्रमोपादानत्वान्यथानुपपत्तिरपि प्रमाणमिति—व्याख्यातम्। भ्रमे ह्युपादानं बाधकज्ञानबाध्यमपि तद्विषय इव; अन्यथा शुक्तिज्ञानान्तरं बाध्यस्य रजतस्यापि रजवज्ञानस्येव मन एवोपादानकारणं स्यात्, अतो बाधकज्ञानबाध्यत्वं भ्रमोपादानस्य तस्यैव स्यात्, यत् साक्षात् तत्त्वसाक्षात्कारनाश्यं स्यात्। न चान्तःकरणं साक्षात् शुक्तिज्ञानस्येव ब्रह्मज्ञानस्य बाध्यं स्यात्। अज्ञाननाशाधीनो ह्यन्तःकरणनाशः। अत एवास्याखण्डाकारवृत्तेरज्ञाननाशानन्तरमेव मोक्षः। अतो नान्तःकरणं भ्रमोपादानम्। अन्तःकरणं हि भ्रमविनाशकवृत्तेरुपादानम्, न भ्रम-तद्विषयोपादानतामर्हति; व्याघातात्। तत्रोपादानोपादेययोः समसत्ताकत्वमज्ञानोपादानतायामेव भवति ब्रह्मोपादानत्वं तु विवर्तविधयैव। अतः शुक्तिरूप्यादौ भ्रमोपादान-

त्वान्यथानुपपत्त्या तूलाज्ञानकल्पनवद् व्यावहारिकभ्रमोपादानत्वान्यथानुपपत्त्या मूलाज्ञानकल्पनमिति विवरणरीत्या व्यवस्था ।

**वाचस्पतिमते भ्रमोपादानत्वं नाविद्यायाः, तन्मते तस्या आवरणविधया निमित्तमात्रत्वात् तथापि ब्रह्ममात्र-विवर्तोपादानत्वानुपपत्तिरज्ञाने प्रमाणम्**

मण्डनमते तु नाविद्योपादानम् । ब्रह्ममात्रविवर्तोपादानत्वाद् नानुपपत्तिद्वय-मप्यज्ञाने । तन्मते हि ब्रह्मैवोपादानम, तदपि विवर्तविधयैव । तच्च विवर्तोपादा-नत्वमज्ञानेनाऽऽवरणविधया निमित्तकारणत्वमात्रमविद्याया, इति तत्र भ्रमोपादा-नत्वानुपपत्तिर्ब्रह्मणो विवर्तमानत्वमात्रानुपपत्तिरज्ञाने प्रमाणमेव । प्रथमा त्वनुप-पत्तिरुभयत्र समानैव ।

**अज्ञानस्य जीवाश्रयत्व-ब्रह्माश्रयत्वेश्वराश्रयत्व-पक्षास्त्रयोऽपि युक्ताः; तत्राज्ञानस्य जीवाश्रयत्वेश्वराश्रयत्व-पक्षयोर्नानवस्थेत्यादि तत्र सर्वत्र जीवस्य बन्धः, सर्वज्ञत्वं चेश्वरस्यैवेति व्यवस्था**

अज्ञानस्य चिन्मात्राश्रयत्व-सर्वाश्रयत्व जीवाश्रयत्वपक्षास्त्रयोऽद्वैतसिद्धौ सम-र्थिताः । इदश्च न्यायामृतानुवादमनुकृत्य यथान्यायामृतं कृत्वाचिन्तया विचारसरणिं स्वीयामनुसृत्य । वस्तुतस्तु चिन्मात्राश्रयत्वसर्वज्ञाश्रयत्वपक्षौ द्वावेवाद्वैतमते । तत्र चिन्मात्राश्रयत्वमज्ञानोपाधित्वमात्रेण, सर्वज्ञाश्रयत्ववादस्तु तस्य विशेषणत्वाभि-प्रायेण । तत्र प्रथमे सर्वज्ञत्वं सर्वतादात्म्यमात्रेणाज्ञानोपहिततद्विषयमात्रस्य जग-त्कारणस्य, द्वितीये सर्वज्ञोपाधिमायापरिणामवृत्त्याश्रयत्वेन । उभयत्र—

> "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
> अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति वचनाद् अनादित्वादविद्यायोगस्य नान्योन्याश्रयः । तत्रोभयत्राविद्याया उपाधित्वेऽपि कारणावस्थस्योपाधेः प्रतिबिम्वपक्षपातित्वात्, तदवच्छिन्नपक्षपा-तित्वादेकस्यैव बन्धापत्तिः । तत्र जीवाश्रयत्वपक्षे विशिष्टस्य जीवस्यैव बन्धः, सोऽपि पूर्वपूर्वभ्रमसहकृतमूलाविद्यावच्छेदेन बीजाङ्कुरन्यायेनानादिना, पक्षान्तरे त्वनादिना प्रतिबिम्बभावेन ।

**अहमज्ञ इति प्रतीतेर्मण्डनमते, विवरणमते चोपपत्तिप्रकारः । उभयत्रापि कारकत्वप्रकारश्च चैतन्यस्याज्ञानाश्रयत्वाद्यविरोधश्च**

'तत्राहमज्ञः' इति प्रतीतिः साक्षाज्जीवस्यैवाज्ञानाश्रयत्व एव बिम्ब-प्रति-बिम्बभावे त्वज्ञानाहङ्कारयोरेकत्र द्वयमिति रीत्योभयोरपि 'खले कपोत' न्यायेनो-भयत्र तद्बन्धमोक्षव्यवस्था बुद्ध्यादितादात्म्य-तदभावाभ्याम्, बिम्ब-प्रतिबिम्बवृत्ति-

भ्यामिति विशेषः। तत्राविद्याकारणत्वं ब्रह्मावरणमात्रेण तद्विवर्तोपादानताप्रयोजकत्वाद् निमित्तकारणत्वमात्रं जीवाश्रयाज्ञानवादे, अन्यत्र तु परिणामित्वेनोपादानकारणत्वं चावरणेन निमित्तकारणत्वमपीत्यभिन्ननिमित्तोपादानत्वं ब्रह्मणः। विशेषस्तु ब्रह्मण उपादानत्वं विवर्तमानत्वमात्रेण, अविद्यायास्तु परिणामित्वमात्रेण। उभयत्र चिन्मात्रस्य स्वप्रकाशस्यात्मस्वभावस्य नाविद्यया विरोधः, किन्तु श्रवणादिजन्यवृत्तेरेवेति तत्र तत्र व्यक्तम्। वक्तव्यश्चात्र सर्वं पूर्वमेवोक्तम्। न्यायामृतस्य चिन्मात्रस्याज्ञानविरोधित्वेन तदाश्रयत्वविषयत्वायोग इति शङ्का तु नाद्वैतसिद्धान्त मूरीकृत्य।

### चिन्मात्रस्याज्ञानविषयत्वोपपादनम्. तस्यैव वा शक्तित्रयेण 'नास्ति', न प्रकाशते', 'नानन्दः' इति प्रकारत्रयेणावरणात्, घटादिज्ञानमात्रेणामुक्तिश्चेत्यादि

अथाज्ञानविषयत्वे शङ्कापरिहारौ। तथाहि-अज्ञानस्य विषयोऽपि चिन्मात्रमेव; तत्रैव प्रकाशप्रसक्त्याऽऽवरणकृत्यसंभवात्। तत्रावरणकृत्यं त्वसत्त्वापादकत्वशक्त्या. अभानापादकत्वशक्त्या, अनानन्दतापादकत्वशक्त्या च 'नास्ति', न प्रकाशते', 'नानन्दः' इत्यभिज्ञाभिलपनादिरूपो व्यापारः। सा च शक्तिः जाग्रत्स्वप्नसुषुप्त्यवस्थासु यथासंभवं वर्तते। तत्राज्ञानसम्बन्धस्तु—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"

इति वचनादनादिः। चिदिव, अविद्याप्यनादिः। स च सम्बन्धश्चिन्मात्रस्यैवाद्वितीयत्वादिविशिष्टचैतन्यस्य। तत्र शुद्धायाश्रितः स्वप्रकाशत्वेऽपि परिपूर्णानन्दादिरूपेणाप्रकाशान्नावरणविरोधः। जीवेश्वरयोः कल्पितभेदवत्त्वेन जीवं प्रति चैतन्याप्रकाशो वस्तुतः संविन्मात्ररूपेणाभेदेऽपि न व्याहन्यते, अनवच्छिन्नचैतन्यरूपेण सुखं न जानामीत्यनुभवाद् ज्ञानात्मनाऽज्ञानं ब्रह्मणः। घटोऽयमित्यादिज्ञानेन घटाद्यवच्छिन्नचैतन्याज्ञानत्वस्यैव नाशः, तदवच्छिन्नचैतन्याज्ञानत्वस्य तदवच्छिन्नचैतन्यज्ञानेनैव निवृत्त्याऽनवच्छिन्नचैतन्याज्ञानानिवृत्त्या न घटादिज्ञानमात्रेण मुक्तिः। यावन्ति अनाद्यवच्छिन्नचैतन्यविषयज्ञानानि, तावन्ति तत्र ज्ञानानि, तावन्त्यज्ञानविषयत्वानि निवर्तन्त इति वा स्वीकारान्न कोऽपि दोषः। उपहितान्याविषयकत्वे सत्युपहितविषयकत्वस्यैव ज्ञानाज्ञानयोर्विरोधित्वस्वीकाराच्च। तथा चानवच्छिन्नचैतन्यमेवाज्ञानविषयः, तत्तदवच्छिन्नचैतन्यविषयाज्ञानान्यवच्छिन्नचैतन्यज्ञाननाश्यानि, इति घटादिभानेन न मुक्तिरिति सर्वमनवद्यम्।

### सिद्धत्युक्तरीत्याऽज्ञानस्याश्रय-विषयविवेकसंग्रहः

अद्वैतसिद्धिकारास्तु – स्वरूपत आश्रयतो विषयतश्चाज्ञानं सुनिरूपमेव। तथाहि—चिन्मात्रमेवाज्ञानाश्रयः। अभिज्ञादिसाधारणस्य 'नास्ति न प्रकाशते' इति

व्यवहाररूपस्य, 'अस्ति प्रकाशते' इति व्यवहाराभावरूपस्य वा आवरणकृतस्य तत्रैव संभवात्। आवरणं च तद्योग्यता, अज्ञानसंबन्धरूपा सुषुप्त्यादिसाधारणी आब्रह्मज्ञानमवतिष्ठते इति सुषुप्तादौ नानाबरणम्, मोक्षकाले वाऽऽवरणमापद्यते। इदं चावरणानादित्वेन चित्प्रकाश्यत्वेन च, उत्पत्तौ इति ज्ञप्तौ वा न सापेक्षमिति नात्माश्रयादिकम्। सदा स्वरूपतः प्रकाशमानस्यापि शुद्धचैतन्यस्य परिपूर्णाद्याकारेणाप्रकाशमानत्वात् तत्रावरणकल्पने न किमपि बाधकम्।

**अज्ञाननिवर्तकानुपपत्त्यादिपरिहारप्रकारः**

एतेन --अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वविरुद्धे योग्यत्वायोग्यत्वे कथं ब्रह्मणि संभवतः? अज्ञानादिमत्त्वेनापरोक्षव्यवहारयोग्यत्वम्, स्वरूपेण तु नेति कल्पने स्वरूपाप्रकाशत्वापत्तिरिति वचनमपि—पराहतम्; कल्पितभेदं जीवं प्रति शुद्धचैतन्यस्यावृतत्वमेव विवक्षितमिति न स्वप्रकाशविरोधः भेदावरणयोरुभयोरप्यनादित्वेन परस्परानन्तर्याभावान्नान्योन्याश्रयः। कल्पितभेदस्य जीवस्यापि शुद्धचैतन्यतया जीवं प्रत्यपि चिन्मात्रप्रकाशाभावस्यैवाज्ञानसाध्यतायामपि न विरोधः अज्ञान-तमसोर्यादृशो विरोधो न तादृश एव चैतन्याज्ञानयोः; प्रकाशमाने वस्तुन्यज्ञानानुभववदालोके तमोऽनुभवाभावात्, इति स्वरूपचैतन्यस्याज्ञानाविरोधित्वे न किमपि बाधकम्। सुखादिस्फुरणं न प्रकाशत इत्यनुभवाभावेऽप्यवच्छिन्नाकारेण न प्रकाशत इत्यनुभावाच्छुद्धचैतन्यस्याज्ञानविषयत्वे न कोऽपि दोषः। 'त्वदुक्तमर्थं न जानामि' इति भासमान एवाज्ञानानुभवात्, सामान्यनिश्चयजनितविशेषसन्देहेनेव सामान्यज्ञानजनितविशेषाज्ञानेनापि विशेषविषयीकरणस्यावश्यकत्वेन भासमानेनाज्ञानमित्युक्तावुक्तप्रत्ययविरोधापत्तेः. द्वेषस्येव द्विष्टस्याप्यवच्छेदकतया इच्छाविषयत्वात्, ईश्वरस्य भ्रान्तिज्ञत्वस्येव भ्रमविषयज्ञत्वस्यापि विद्यमानत्वाद् अस्मदादीनामपि सर्वत्वेन सर्वज्ञानस्य विद्यमानत्वाच्च द्वेषस्येष्टत्वेऽपीत्यादिदृष्टान्तोऽप्यसंप्रतिपन्नः, इत्यज्ञानज्ञानाभावे नाज्ञानज्ञानसंभवः, इति प्रकाशमान एवाज्ञानम्। प्रतियोग्यभावयोरिव ज्ञानाज्ञानयोरपि विरोधादभावस्य प्रतियोगिसत्त्वानपेक्षत्ववदज्ञानज्ञानस्यापि स्वविषयाज्ञाननिवृत्यनपेक्षत्वात्, नाज्ञानाविरोधिन्या अज्ञाननिवृत्तेरपि कल्पनाप्रसङ्गः। विरोधस्य समानत्वात्तद्विषयकज्ञानापेक्षापि मास्तु, इति वर्णने तु अभावस्वभावविरोधिप्रतियोगिज्ञानविषयत्वमज्ञानस्याभाववैलक्षण्यसाधकमेवोपपादितमित्यस्मिन् मत एव पर्यवसानम्। एवं च वृत्त्यवच्छेदेन चैतन्यस्याज्ञानविरोधित्वम्, न स्वरूपत इति स्वरूपचैतन्यस्याज्ञानविषयत्वे न कोऽपि दोषः।

चिदुपरागार्था वृत्तिरिति मतेऽप्यज्ञाननिवृत्तिप्रयोजकत्वेन वृत्तेरेवाऽज्ञानविरोधित्वमिति मन्तव्यम्। जानामीति व्यवहारस्यापि वृत्तिप्रतिबिम्बितं चैतन्यमेव विषय इति न कोऽपि दोषः। वृत्तेस्तु निवर्तकत्वं प्रमाणवृत्त्युपारूढप्रकाशत्वेन विवक्षितम्, न तु जातिविशेषत्वेन, प्रकाशत्वेन वा। परोक्षवृत्तेस्तु विषयपर्यन्तत्वाभावान्न विषयाश्रिताज्ञाननिवर्तकत्वम्।

एतेन—सुखादिस्फुरणमपि—व्याख्यातम् । तत्र सुखादेर्ज्ञातैकसत्त्वेनाज्ञाननिवृत्तिं विनैवाज्ञानादर्शनादिति स्फुरणमात्रस्याज्ञानविरोधित्वे प्रमाणाभावः । परिपूर्णत्वादिनाऽप्रकाशविधुरत्वाभावेऽप्यध्यासाधिष्ठानत्वादिना प्रकाशमानत्वात् स्वसत्तायामप्रकाशविधुरत्वेन स्वप्रकाशत्वसाधनमप्युपपन्नमेव । साक्षिवेद्ये सुःख-दुःखादौ तु नाज्ञानप्रसक्तिः । आत्मा च प्रकाशरूपो न साक्षिवेद्यः, इति स एवाज्ञानविषयः । घटादिरिव स्वतमोनिवर्तकमालोकमात्मापि स्वतमोनिवर्तकवृत्तिमपेक्षत इति न दोषः । अत एव "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यम्" इति विवरणवचनमुपपद्यते ।

अज्ञानविशेषः, शक्तिविशेषोऽवस्थाविशेषो वाऽविद्यागतो विशिष्टगोचरवृत्त्या निवर्तत एव । प्रपञ्चोपादानमूलाज्ञानं परं भेदभ्रमस्यानुभूयमानत्वेन श्रवणादिकारणविशेषजन्येनैव ज्ञानेन निवर्तते । घटोऽयमिति ज्ञानेनापि तदवच्छिन्नाज्ञातत्वप्रयोजकाज्ञानविशेष एव निवर्तते, इति न सद्यो मोक्षापत्तिः, इति वृत्तेरेवाज्ञानविरोधित्वे न किमपि बाधकम् । तत्सिद्धम्—"आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला" इति । एतेन—आत्ममात्रदेहादिभेदो ज्ञानविषय इति पक्षोऽपि—व्याख्यातः, द्वितीयाभावोपलक्षितात्मस्वरूपमेवाज्ञानविषय इत्यङ्गीकारेऽपि न दोषः; तत्पराणामपि वाक्यानामखण्डार्थत्वाद्युपपत्तेर्वर्णयिष्यमाणत्वादिति निरूपयन्ति ।

अथाज्ञाने निवर्तकानुपपत्तिनिवृत्त्यनुपपत्तेराशङ्का श्रीभाष्यादावुत्थापिता न्यायामृते न पृथगालोचिता; तथाप्यज्ञानाश्रयानुपपत्तिशङ्काबीजं ज्ञानाज्ञानयोर्विरोधकथैव निवर्तकानुपपत्तावपि बीजम्, इति तत्र निर्धारितया ज्ञानाज्ञानयोरविरोधकथयैव सापि शङ्का परिहृतप्राया ब्रह्मसिद्ध्युक्तरीत्या, इति न तदर्थं पृथक् प्रकरणम् । अज्ञाननिवृत्त्युपपत्तिस्त्वनादित्वेऽप्यनिर्वचनीयस्य ज्ञाननाश्यत्वस्य श्रुतिस्मृतिसिद्धत्वान्नावसरति ।

## अहमात्मना कर्तृत्वाध्यासादिसमर्थनोपयोगितयाऽख्यात्यापि परीक्षाऽऽवश्यकता

तदेवमध्यासो भगवत्पादैरध्यासभाष्ये जगन्मिथ्यात्व-तद्धेतु-तत्प्रत्यक्षानुमानागमाद्यविरोधमायावादाद्युपबृंहणेन 'अहमिदम्', 'ममेदम्' इति नैसर्गिको लोकव्यवहारोऽध्यासकारणाभावात् 'अहं पदार्थमखण्डं मत्वैव प्रवर्तितः' इति शङ्कानिरासस्तत्तद्युक्तिजातानां संग्रहेण, अनिर्वचनीयाभावविलक्षणभावाभावविलक्षणाज्ञानोपपादनेन चोपबृंहितः । परन्तु—अहमर्थस्य चिदचिदात्मत्वरूपत्वमध्याससिद्धान्तनिष्पन्नं समर्थयितुं धर्माध्यासात् कर्तृत्वाध्यासादिः, देहात्म्यैक्याध्यासश्च समर्थनीयः, तदर्थमपराणि प्रधानान्यौपसंहारिकानि त्रीणि प्रकरणानि । तानि तु प्रकरणान्यौपसंहारिकार्थपराण्यध्यासभाष्यस्य सामान्यतोऽध्यासे निरूपितेऽप्यध्यासस्य विशिष्य मिथ्यात्वस्य ख्याति-बाधानुपपत्त्या तस्यानिर्वाच्यत्वानुपपत्त्या अख्यात्यन्यथाख्याति-

निरसनेनानिवर्चनीयख्यातिसमर्थनं विना न सिद्धयति। अतः पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेनाऽहमर्थानात्मताकर्तृत्वाध्यासदेहात्मैक्याध्यासज्ञानपूर्वत्वेन पूर्वोदाहृतानामनिर्वचनीयत्वख्यातिबाधानुपपत्तीनामेवार्थतः पूर्वत्वं युक्तम्, इति तानि प्रकरणानि पूर्वं प्रकृत्य अहमर्थानात्मत्वादिप्रकरणानामुपसंहारेणाद्वैतसिद्धयर्थः संकल्यते, येनाध्यासभाष्येणाद्वैतसिद्धेः प्रथमपरिच्छेदस्य चैकवाक्यता अध्यासभाष्यस्यैवाद्वैतसिद्धेरात्मतत्त्वमुख्यब्रह्मतायामेव तात्पर्यं चोन्नेतुं शक्यम्।

**"स्मृतिरूपः परत्र पूर्वदृष्टावभासः", "तथा च लोकेऽनुभवः" इति भाष्याभ्यामख्यात्यन्यथाख्यात्यादिनिरासेनानिर्वचनीयख्यातेरेव सिद्धान्तत्वसूचनम्, असत्ख्यातिनिरासश्च**

तत्राध्यासभाष्ये--'तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति। केचित्तु यत्र यदध्यासः, तद्विवेकाग्रहनिबन्धनो भ्रम इति। अन्ये तु यत्र यदध्यासः, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते" इत्यन्यथाख्यात्यख्यात्यनिर्वचनीयख्यातीः केवलमुपक्षिपन्ति भगवत्पादाः। परन्तु तत्रानिर्वचनीयख्यातिरेव युक्तेति न वर्णयन्ति; तथापि 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इत्यध्यासलक्षणवाक्येन स्मृतिरूपत्वोक्त्या रजतांशे स्मरणमित्यख्यातिवादस्य 'पूर्वदृष्टावभासः' इति पूर्वदृष्टतादात्म्यापन्नस्य पूर्वदृष्टसदृशस्य वा भानमिति वर्णनेन संसर्गमात्रावभास इत्यन्यथाख्यातिपक्षस्य च निरासं परत्र पूर्वदृष्टावभासं ज्ञानमित्यनिर्वचनीयख्यातेः समर्थनं च प्रतीयते। "तथा च लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते" इति भाष्यन्तु 'लोकेऽनुभवः' इति पदाभ्यामलौकिकानुभव एव रजतस्येत्यन्यथाख्यातिवादस्य, 'अनुभव'पदेनाख्यातिवादस्य च निरसनम्, रजतवत्' इति वत्प्रयोगेणानिवर्चनीयख्यातेः समर्थनञ्च विशदयति। नारायणसरस्वतीकृतौ भाष्यवार्तिके, प्रदीपे चास्मदीयेऽधिकं व्यक्तम्। तथा च अनिर्वचनीयख्यातिरेव भ्रमे युक्ता, न त्वसत्ख्यातिः रूप्याद्यसत्त्वे प्रमाणाभावात्। 'असदेवेदं रजतमभाद्' इति सद्भिन्नत्वविषयम्। असदात्मना सत एव हि त्वयापि प्रत्यक्षमिष्यते। न च पूर्वकालीनभानविषयरजतेऽसत्त्वज्ञानमसदात्मना सद्विषयकम्। एतेन—विमतमसत्, सत्त्वानधिकरणत्वात्, शशशृङ्गवत्; विमता अप्रमा, असद्विषयका, सत्त्वानधिकरणविषयत्वात्, शशशृङ्गमसदिति वाक्यजन्यपरोक्षज्ञानवदित्यनुमानद्वयमपि—परास्तम्; पूर्वयुक्त्या बाधात् शब्दैकसमधिगम्यत्व-परोक्षत्वयोः यथाक्रममुपाधित्वाच्च।

एतेन—असत्ख्यातिवादे बाह्यमतप्रवेशापत्तिरपि - सूचिता। न हि सदुपरागेण विशेषेण सत्ख्यात्यापत्तिः परिहर्तुं शक्यते। तार्किकाणां तु सतोरेव शुक्ति-रूप्ययोस्तत्तादात्म्यस्य च भ्रमे भानान्नासत्ख्यात्यापत्तिः। असत एव संसर्गस्य तत्र भानमिति तु युक्तम्।

### अनिर्वचनीयख्यातौ नासत्ख्यातिः, न वा शुक्ति-रूप्याकारवृत्तिद्वयाङ्गीकारादख्यातिः, न वाऽऽत्मख्यातिः, नापि वाऽऽन्यथाख्यातिरिति व्यवस्था

भ्रमत्वं तु व्यधिकरणप्रकारकज्ञानत्वरूपं न संसर्गासत्त्वं विना नोपपद्यते। नहि भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्, किन्तु स्वरूपसम्बन्धविशेषः, इति न तद्वैशिष्ट्यविषयकत्वाद्यर्थमसत्संसर्गविषयत्वमङ्गीक्रियेत। शशशृङ्गमसदिति वाक्येन तु विकल्पमात्रमेवोत्पद्यते, न तु ज्ञानमिति नास्माकमसत्ख्यात्यापत्तिरिति सुस्थम्। तत्र प्रातिभासिकस्थलेऽधिष्ठानांशेऽन्तःकरणवृत्तिरध्यस्तांशे चाविद्यावृत्तिः। एवमपि तादात्म्यस्य भानाद् नाख्यातिमतप्रवेशः। नहि वयं सर्वत्राध्यासे द्व्यात्मकतां ब्रूमः, किन्तु अन्तःकरणवृत्तिसापेक्षाधिष्ठानप्रकाशः, इति। इदन्त्वाद्यधिष्ठानस्य स्वप्रकाशत्वान्नेदमिति द्व्यात्मकतापत्तिः। एतेन—इदं रूप्यमित्यस्य त्र्यात्मकतापत्तिः, स्वप्ने चतुरात्मकतापत्तिश्च—पराहता, स्वप्ने इदं-रूप्ययोरुभयोरप्यविद्यावच्छिन्नचैतन्याधिष्ठानकत्वेन तस्य स्वप्रकाशत्वाच्च। चाक्षुषत्वानुभवस्त्वनुभवत्वमात्रेऽप्यात्मानं पश्यामीतिवदौपचारिकः। उपचारे च निमित्तं चाक्षुषेदंवृत्त्यवच्छिन्नचैतन्यस्याविद्यापरिणामवृत्तिविषयत्वमिनि मन्तव्यम्। अविद्यावृत्तिप्रतिफलिते चैतन्येऽविद्यावृत्तेः स्वत एवोपाधित्वेन नाविद्यावृत्तेरपि प्रातिभासिकत्वेऽनवस्थाप्रसङ्गः। रूप्यमिति तु न ज्ञानगताकारः, साकारवादप्रसङ्गात्। अपरोक्षत्वानुभवस्तु नातीतविषयवदुपपद्यते। दोषाणां स्वाश्रय एवातिशयजनकत्वमित्यत्र न विनिगमकं दृश्यते। स्वसम्बन्धिन्येव कार्यजनकत्वाङ्गीकारात्तु नातिप्रसङ्गावकाशः। ज्ञानैक्यानुभवस्तु विषयाभेदेनोपचारनिबन्धनः। उपचारशब्दार्थश्च विषययोरभेदाध्यासज्ञानयोरप्यभेदाध्यास इति नानुभवविरोधोऽपि यावता च ज्ञानभेदः, तावता विषयैक्याध्यासस्य ज्ञानैक्याध्यासनिमित्तत्वमपूर्वमपि कल्प्यत एव। सामग्र्यभावात्तु विषयभेदग्रहकाले न ज्ञानभेदग्रहः, इति न तदापत्तेरवकाशः। इदंवृत्त्यवच्छेदेन रजतवृत्तिस्तु शुक्त्यवच्छिन्नचैतन्यगोचराविद्याया एव परिणामः, न तु तदवच्छिन्नचैतन्यगताविद्यापरिणामः। इदंवृत्तिर्हि आश्रयावच्छेदिकैव, न तु विषयावच्छेदिकेति न दोषः। शुक्तित्वं जानत इदंवृत्तित्वं चाजानतो रूप्यनिवृत्तावपि तदज्ञानानुवृत्तिप्रसङ्गोऽप्येतेन पराहतः; शुक्तित्वाज्ञानस्यैवोभयपरिणामित्वात्। अध्यस्तेन सहेन्द्रियासंप्रयोगात्तु बाधकान्नाबाधितज्ञानैक्यानुभवः। सन्निकर्षस्य प्रमामात्रसामग्रीत्वाभावात् प्रत्यक्षत्वोपपत्तिरप्यविद्यावृत्त्यङ्गीकार एवोपपद्यते। अथवाऽविद्यावृत्तिर्न ज्ञानम्; ज्ञानत्वस्याज्ञाननिवर्तकमात्रवृत्तित्वाव, इति न ज्ञानैक्यानुभवविरोधः। धारावाहिकद्वितीयादिज्ञानमपि तत्तत्कालविशिष्टविषयकत्वेनानधिगतविषयमेवेति नानुपपत्तिः। परोक्षभ्रमेऽपि फलैक्योपचारेण ज्ञानैक्यानुभवोपपत्त्या फलैक्यनिबन्धनो वाऽयमैक्यानुभव इति सर्वं सुस्थम्। सति चैवमनिर्वचनीयख्यातेरेव प्रामाणिकत्वात्,

तस्य मिथ्याज्ञाननिमित्तत्वात्, पूर्वपूर्वभ्रमेणोत्तरोत्तरभ्रमनिर्वाहाद् जीवाज्ञानवादस्य प्रामाणिकत्वेनाहमाद्यध्याससमर्थनेन विगलिताहङ्कारात्मन एव प्रामाणिकत्वात्, मुख्यतात्पर्यविषयत्वात् तैत्तिरीयाद्युपनिषदां तत्रैव स्वारस्यात्। अहमध्यासस्य तैत्तिरीयोपनिषदि देहात्मादौ चाकाशाद्यध्यासपूर्वकत्वावगमात्, तस्मिंश्चानुपहिते सन्देहात् शारीरिकमीमांसापदस्वारस्यात्, 'माया कल्पिता' इति मङ्गलश्लोके जीवात्मतत्त्वस्य परमतात्पर्यविषयत्वज्ञापनाच्चाहमर्थात्मन एव तात्पर्यं परमादरोऽद्वैतसिद्धिकाराणाम्। न चैतावता प्रस्थानान्तरे विद्वेषः। ते हि यथासंभवं प्रस्थानान्तरमपि समर्थयन्ति। यथा सर्वज्ञाज्ञानाश्रयत्ववादम्, शाब्दापरोक्षवादम्, जीवेश्वरबिम्बप्रतिबिम्बवादम्, अन्यान्यांश्च।

अहमर्थानात्मत्वं कर्तृत्वाऽध्यासं देहैक्याध्यासं चाध्यासभाष्यविचारावसर एव न्यरूपयम्।

### अद्वैतसिद्धेः प्रथमपरिच्छेदस्याध्यासभाष्यसंकलनरूपस्य संग्रहः, अद्वैतसिद्धान्तस्य नास्तिकसिद्धान्तत्वनिरासश्च

किं बहुना ? भगवत्पादसिद्धान्ता एव सर्वे प्रसक्ततदाक्षेपपरिहारमुखेनाद्वैतसिद्धेरध्यासभाष्यमूलाः प्रथमपरिच्छेद आमूलचूडं निर्धार्यन्ते। द्वैतिनामद्वैतमतनिरसनप्रकारा लोकविरुद्धा तत्राद्वैतसिद्धान्ता उपन्यस्यन्त इति। अलौकिकेऽद्वैतवादे लौकिकव्यवहारेण किमुपकरिष्यते ? शरीरात्मतावादो हि लौकिकोऽलौकिकेन आत्म-स्वर्गादिपरलोकवादिसिद्धान्तेन विरुद्धः, इति परलोकवादनिरासपरशाक्यादिमतावलम्बिभिरप्रमाणं मन्यमानं कथमप्रमाणीक्रियते ? नास्तिको नाम न स एव, यो नास्तीति पदमात्रं प्रयुङ्क्ते, किन्तु यदस्ति, तन्नास्तीति, यन्नास्ति, तदस्तीति वाद्येव। सति चैवमद्वैतमत आधिकारिकाणां स्थितप्रज्ञानां वा दृष्टया ब्रह्मैवास्ति; नान्यत्, इति यन्नास्ति जगत्, तन्नास्तीति यदस्ति ब्रह्म, तदस्तीति वादिनश्च कथमद्वैतवादिनो नास्तिका नाम। ते हि भाविनीं दशामेव वर्तमानामिव दृष्ट्वा तथा वदन्ति। अन्ये तु परीक्षका भाविनीं दशां शास्त्रसिद्धां मत्वा तथा वदन्ति परलोकवादिनः; साकारब्रह्मवादिनश्च शास्त्रदृष्टयैव परलोकादिकमस्तीति मन्यन्ते, अन्यथा न तेऽपि नाम कथं नास्तिकाः। किं भ्रान्तदशायां रज्जौ सर्पोऽस्तीति मन्वाना एवास्तिकाः, न तु रज्जुतत्त्वसाक्षात्कारानन्तरं सर्पो नास्तीति वादिनः, इति न नास्तिशब्दप्रयोगमात्रेणाद्वैतवादो नास्तिक्यवाददूषणमर्हति। प्रभाकरो हि बृहत्याम्—यस्तु ब्रह्मविदां निश्चयः—यदुपलभ्यते, न तत् तथ्यमिति, यन्नोपलभ्यते, तत् तथ्यमिति, नमस्तेभ्यः, विदुषां नोत्तरं वाच्यमिति वदन्नप्यद्वैतसिद्धान्तमेव प्रपञ्चमिथ्यात्वादि साधु मन्यते। तदेवमद्वैतसिद्धेः प्रपञ्चमिथ्यात्वनिर्णयपरः प्रथमपरिच्छेदः समालोचितः॥

# अथ तृतीयं प्रवचनम्

## द्वितीयपरिच्छेदार्थसंग्रहः

तदेवमध्यासभाष्यसङ्कलनपरोऽद्वैतसिद्धेः प्रथमः परिच्छेदः समालोचितः। तत्र द्वितीयपरिच्छेदः 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे प्रस्तुतब्रह्मस्वरूपनिरूपणपरः, तृतीयपरिच्छेदस्तत्राथशब्दसूत्रितसाधननिरूपणपरः तुरीयपरिच्छेदस्तु जिज्ञासापदघटकाज्ञाननिवृत्तित्वोपलक्षितज्ञातत्वविशिष्टात्मस्वरूपाख्यमोक्षनिरूपणपरः । तदुक्तं वार्त्तिके—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति ।

तत्र द्वितीयपरिच्छेदप्रतिपाद्या विषया इमे, ते यथा—

(१) अखण्डार्थत्वम्
(२) सत्याद्यवान्तरवाक्याखण्डार्थतोपपत्तिः
(३) अखण्डार्थत्वोपपत्तिः
(४) निर्गुणत्वोपपत्तिः
(५) निर्गुणे सप्रमाणता
(६) निराकारत्वसाधनम्
(७) ब्रह्मणो ज्ञानत्वाद्युपपत्तिः
(८) ब्रह्मण उपादानत्वम्
(९) ब्रह्मणो विश्वकर्तृत्वम्
(१०) ब्रह्मणोऽभिन्ननिमित्तत्वम्
(११) स्वप्रकाशत्वलक्षणोपपत्तिः
(१२) स्वप्रकाशत्वोपपत्तिः
(१३) शब्दावाच्यत्वम्
(१४) सामान्यतो भेदखण्डनम्
(१५) विशेषतो भेदखण्डनम्
(१६) विशेषखण्डनम्
(१७) भेदपञ्चके प्रत्यक्षभङ्गः
(१८) जीवब्रह्माभेदानुमानभङ्गः
(१९) जीवभेदानुमानभङ्गः
(२०) जीवभेदानुकूलतर्कभङ्गः
(२१) भेदपञ्चकानुमानभङ्गः
(२२) जीवभेदश्रुतेरनुवादकत्वम्
(२३) असत्यभेदधीश्रुतिः
(२४) शब्दान्तरादेरात्मभेदकत्वाभावः
(२५) भेदश्रुतेः षड्विधतात्पर्यलिङ्गभङ्गः
(२६) ऐक्यस्वरूपोपपत्तिः
(२७) जीवब्रह्माभेदे प्रमाणम्
(२८) ऐक्यश्रुतेरुपजीव्यविरोधाभावः
(२९) तत्त्वमसिवाक्यार्थनिरूपणम्
(३०) 'अहं ब्रह्मास्मि' इत्याद्यनेकश्रुतिस्मृत्यर्थकथनम्
(३१) जीवब्रह्माभेदानुमानम्
(३२) अंशित्वेनैक्योपपत्तिः
(३३) बिम्ब-प्रतिबिम्बन्यायेनैक्यसिद्धिः
(३४) जीवाणुत्वखण्डनम्

### सखण्डाखण्डस्वरूपनिष्कर्षः, तदुभयोदाहरणपरीक्षा च

अत्राद्वैतसिद्धान्ते ज्ञेयं जिज्ञास्यं प्रस्तुतं ब्रह्माखण्डम्, उपाध्यध्यस्ततयाऽध्यारोपविधया, जगत्कारणतया, विवर्ताधिष्ठानतया वा ब्रह्मानाद्यविद्याकल्पितसदादिभेदवत्, आवृतानावृतभागद्वयवद्वा ब्रह्म सखण्डम्, तस्याखण्डत्वञ्च श्रवणादिप्रमाणजन्यवृत्तिप्रयुक्ताविद्यानिवृत्त्याऽऽवृतानावृतभावद्वयशून्यत्वेन। तत्र सखण्डमधिष्ठानम्,

अखण्डं तु मुक्तात्मस्वरूपम् । 'इयं शुक्तिः' इत्यत्रापि शुक्तिरप्यनाद्यविद्ययाऽनावृतमखण्डम्, आवृतावस्थं तु सखण्डम्, सखण्डत्वावस्थायामेवाधिष्ठानम् अन्यथा तु नाधिष्ठानता, न वा भ्रम इति व्यवस्था ।

सर्वत्र हि सखण्डेषु केषुचन खण्डेषु भासमानेष्वभासमानखण्डान्तरमात्रे बोधितेऽखण्डार्थत्वम्, यथा 'इदं रजतम्' इत्यत्रेदमंशे ज्ञायमान एव शुक्तित्वांशमात्रस्य ज्ञाने इयं शुक्तिरिति ज्ञानमखण्डार्थम् । इयान् विशेषः—यद् दृष्टान्ते शुक्तित्वमिदंत्वमुभयमनुवर्तते, महावाक्यार्थेऽवान्तरवाक्यार्थे वाऽनाद्यविद्याप्रयुक्तसदादिभेदस्य तत्प्रयुक्तानाद्यविद्यानाशे बाधाद् ज्ञाताज्ञातविभागशून्यस्वरूपत्वात् स्वप्रकाशसंविन्मात्रस्य तस्य वस्तुगत्याऽखण्डार्थत्वम्, न तु वाक्यजन्यज्ञानमखण्डार्थम्, ब्रह्मणो वृत्तिविषयतया स्वीकारेण मण्डनप्रस्थाने ज्ञानस्याखण्डार्थत्वाभावात् । विवरणमते तु ब्रह्मणो वृत्तिविषयत्वे सत्यपि यावद्वृत्ति नाऽखण्डार्थत्वम्, तथाऽविद्याया नाशे तु मण्डनमतवदेव स्वप्रकाशमेवाखण्डम्; सदादिभेदशून्यत्वात् ।

### तात्पर्यविषयस्वरूपमात्रबोधकत्वं वाक्यस्य स्वतः सिद्धमिति न तद्योगायोगचर्चावसरति

तत्र वाक्यस्य निर्विकल्पकज्ञानजनकत्वयोगायोगचर्चादिकमनवसरम्; अज्ञातार्थमात्रबोधकत्वस्य प्रमाणस्वाभाव्यात्, सदंशे चिदंशे चास्वप्रकाशायोग आवरणाभावात्, आनन्दांशमात्र एव भेददशायां प्रामाण्यप्रवृत्तेः प्रमाणजन्यज्ञानेन तदा तदंशेऽप्यविद्याया निवृत्तावखण्डार्थत्वमनपोहम् ।

### सत्यज्ञानादिवाक्यानामपि सदादिरूपेण कारणात्मताविवक्षायां नाखण्डार्थत्वम्, किन्तु स्वरूपमात्रविवक्षायामेव, अत एव आनन्दात्मनोऽपि न निर्देशः

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापि सद्रूपेण चिद्रूपेण च ज्ञानदशायां नाखण्डार्थत्वम्, किन्तु तस्य वस्तुगत्या । तदनन्यत्वाधिकरणं हि तदनन्यत्वदशामादायैवाखण्डार्थत्वमभिप्रैति । तच्च महावाक्यार्थज्ञानदशां भाविनीमादयैव, न तु कारणतावस्थायाम् । अत एव 'सत्यं ज्ञानमनन्तम्' इत्यत्रानन्दरूपत्वमपि न निर्दिश्यते । सौषुप्तावस्थापर्यन्तमेव व्यष्टिरूपेण, समष्टिरूपेण चाज्ञानोपधानात् कारणता, सखण्डार्थता वा, तुरीयावस्थायामेवाखण्डार्थता; आनन्दात्मनाऽपि ज्ञातत्वात् । अतः सत्यादिवाक्यानामखण्डार्थता बाधितैवेति प्रतिभाति, तथापि तत्राप्यखण्डार्थताव्यपदेशः 'सन् घट' इत्यादौ विकल्पांशस्य घटादेरिव सदाद्यंशस्य स्वरूपतोऽनध्यस्तत्वात्, बाधाभावाद् भेदमात्रस्य बाधादखण्डार्थत्वम् । अतोऽत्राभेदे सामानाधिकरण्यम् । तच्च वाक्यजन्यम्; औपाधिकस्याविद्याकल्पितस्वरूपभेदमात्रस्य वा बाधेनाभेदेऽखण्डार्थत्वव्यवहारः सत्यादिवाक्ये । अत एव तत्त्वमस्यादिवाक्येऽप्यभेदे सामानाधिकरण्यादखण्डार्थता ।

### जाग्रदाद्यवस्थायां सखण्डार्थता, तुरीयावस्थायाम-खण्डार्थता, यदाऽभेदे सामानाधिकरण्यम्, न बाधायाम्, "सदेवेदम्" इत्यादौ तु बाधायां तत् चतुर्विधसामानाधिकरण्यस्य सोदाहर-णनिर्देशमुपपादनम्

अत एव चातुर्विध्यं सामानाधिकरण्यस्य—(१) विशेषणविशेष्यभावे, (२) बाधायाम्, (३) अध्यासे, (४) अभेदे वा सामानाधिकरण्यमिति । एवं प्रत्यक्षादि-स्थले सविशेषत्वे विषयाणां विशेषण-विशेष्यभावे, बाधायां वा सामानाधिकरण्यम् । शब्देन तु निर्विशेषत्वे विषयस्यात्यन्ताभेदेऽपि सामानाधिकरण्यात् सत्यादिवाक्यस्या-प्यखण्डार्थत्वम् तत्र हि पदस्मारितातिरिक्तार्थो न वाक्येन बोध्यते, अन्यत्र तु पदस्मा-रितातिरिक्तसंसर्गोऽभिहितान्वयवादे, अन्विताभिधानवादे वा बोध्यते । तत्र सामा-नाधिकरण्येनाभेदे बोध्यमानेऽपि तादात्म्यं भेदघटितमेव बोध्यते, अखण्डार्थस्थले तु न भेदघटितं सामानाधिकरण्यम् । तत्र बाधायां सामानाधिकरण्येऽप्यभेदसम्बन्धः; परन्तु भेदघटितरूपतादात्म्यरूप एव; एकस्य तत्र स्वरूपतोऽपि बाधात् तादात्म्य-स्यापि बाधात् । सत्यादिवाक्ये तु भेदांशमात्रस्य बाधो न स्वरूपतोऽपि बाधस्ता-दात्म्यस्यापि । अयमेव न्यायः 'सा वैश्वदेव्यामिक्षा" इत्यादौ ।

### अखण्डार्थत्वप्रकारभेदनिष्कर्षः, तत्र निर्भेदार्थ-त्वस्य सत्यादिवाक्ये समन्वयः

अतोऽखण्डार्थत्वम्–निर्भेदार्थविषयत्वम्, निर्विशेषार्थविषयत्वम्, पदस्मा-रितसंसर्गाप्रमापकत्वम्, प्रतिपिपादयिषितपदार्थसंसर्गाप्रमापकत्वं वा सत्यादिभेद-स्मानाद्यविद्याप्रयुक्तत्वेन, सत्यादिवाक्यैरभेदे सामानाधिकरण्यबोधाविरोधेन निर्भेदा-र्थत्वस्य बोधादत्यन्ताभेदस्य सर्वाविद्याया निवृत्तौ भानेनाखण्डार्थत्वाद् निर्भेदं भूतल-मित्यादिवाक्यानामपि नाऽखण्डार्थतापातः । 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यत्रापि प्रकृष्ट-प्रकाशश्चन्द्र इत्यभेदे सामानाधिकरण्याद् नाव्याप्तिः ।

### निर्विशेषार्थत्वसमन्वयः, बाधायां सामानाधिकरण्यस्याभेदे सामाना धिकरण्याद् विशेषश्च

एतेन—निर्विशेषार्थत्वमखण्डार्थत्वमपि—व्याख्यातम्; अविद्याप्रयुक्तभेदा-विषयकत्वस्यैव तेनापि विवक्षणात् । विशेषो ह्यत्र भेद एव, योऽभेदे सामानाधिकर-ण्येन बाध्यते । बाधायां सामानाधिकरण्यस्थलेऽपि भेदस्य बाधो भाव्येव, अभेदे सामानाधिकरण्यस्थले तु भेदबाधो वर्तमान इति विशेषः ।

### प्रातिपदिकार्थमात्रपर्यवसाय्यनेकापर्याय-शब्दत्वस्य समन्वयः, पदान्तरावैयर्थ्यम्, पर्यायता वा पदानामित्यादि

एतेन—प्रातिपदिकार्थमात्रपर्यवसाय्यनेकापर्यायशब्दत्वमखण्डत्वमपि— व्याख्यातम्। अत्र पर्यवसायिपदेन वाच्यविधया प्रातिपदिकार्थमात्रपरत्वं व्युदस्यते, न मुख्याभेदेन सामानाधिकरण्यसिद्धं प्रातिपदिकार्थमात्रपरत्वम्. येन पदान्तरवैयर्थ्यम्, तदप्रयोगो वा स्यात्। अभेदेसामानाधिकरण्येन भेदमात्रस्य कल्पितस्य निरासेन पदान्तरसार्थक्यमव्याहतम्। प्रवृत्तिनिमित्तभेदात् स्वरूपैक्ये नापर्यायत्वस्य क्षतिः। अतो न पदान्तरवैयर्थ्यम्। अत एव तत्र सर्वत्र वाक्यत्वं वाक्यार्थबोधकत्वप्रयुक्तम्; अन्यथा हि पदमात्रस्याबोधकत्वाद् बोधकत्वमपि न स्यात्। 'शीतोष्णस्पर्शवन्तौ पयः पावकौ' इत्यादौ विशेषण-विशेष्यभावे वा सामानाधिकरण्यं न प्रातिपदिकार्थमात्रपर्यवसायित्वेन। इतरेतरद्वन्द्वस्थले प्रत्येकमेकैकवाक्यार्थमात्रपर्यवसायित्वात्, सम्भूयार्थपरत्वाभावात्, वेदान्तवाक्यानामद्वैते ब्रह्मणि प्रपञ्चमित्यात्वपक्षेऽखण्डार्थत्वस्य बाधायां सामानाधिकरण्येनाबाधात्, अभावपारमार्थिकत्वपक्षे ब्रह्मस्वरूपमात्रपरत्वेनाखण्डार्थत्वाविघाताच्च न कोऽपि दोषः।

### सर्वेषां ज्ञानानां प्रकारांशे भ्रमत्वात् 'विशेष्यांशे' एव प्रामाण्यात् सर्वत्र तत्राखण्डार्थत्व 'समन्वयः'

एकविशेष्यमात्रपरत्वमप्यधिष्ठानांशमात्रप्रामाण्यरूपं सर्वेषां ज्ञानानां बिकल्पांशेऽप्रामाण्यस्यैव ब्रह्मसिद्धि-तत्त्वशुद्ध्यादौ व्यवस्थापनात् सन्मात्रप्रामाण्य-

### पदानां परस्परविभिन्नार्थबोधकानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरस-प्रातिपदिकार्थरूपाखण्डार्थत्वसमन्वयः

वादस्य निदुष्टत्वस्य शतभूषण्यादौ विशिष्य ब्रह्मसिद्धावपि साधनाच्च न विरुद्धम्।

अत: पञ्चपादिकाद्युक्तरीत्या पदानां परस्परभिन्नार्थानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः, संसर्गागोचरार्थबोधकानेकापर्यायशब्दत्वं वाऽखण्डार्थमित्यपि व्याख्यातम्। तत्र संसर्गागोचरत्वमित्यत्र संसर्गपदेन पदस्मारितातिरिक्तसंसर्गो विवक्ष्यते, तेनाप्राप्तयोः प्राप्तिः संयोग इत्यादौ नाव्याप्तिः, तस्य पदस्मारितत्वात्, सत्यादिवाक्येषु तदभावाच्च। 'द्विषदन्नं न भोक्तव्यम्' इत्यत्रापि लक्षणया शत्रुगृहाभोक्तव्यत्वपरतया पदस्मारितसंसर्गपरत्वमेवेति न तत्रातिव्याप्तिः।

### प्रतिपिपादयिषिताभेदातिरिक्तसंसर्गाप्रमापकत्वस्य सत्यादिवाक्ये समन्वयः

अनेन प्रतिपिपादयिषिताभेदातिरिक्तपदार्थसंसर्गाप्रमापकत्वमखण्डार्थत्वमपि व्याख्यातम्। चन्द्रब्रह्मादिशब्दानां स्वरूपतो ज्ञातत्वेऽपि प्रकृष्टः 'प्रकाशश्चन्द्रः', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्येषु तेषां प्रकृष्टप्रकाश-सत्यज्ञानादिभेदाभावबोधस्यैव प्रतिपिपादयिषितत्वान्न पदार्थसंसर्गोऽभेदातिरिक्तः प्रतिपिपादयिषितः, अभेदस्तु न प्रतियोग्यनुयोगिभेदसापेक्षः संसर्ग इत्यतोऽपि न कोऽपि दोषः। अतो नाखण्डार्थत्व-लक्षणासंभवः इति सत्यादिवाक्यानामभेदे सामानाधिकरण्यपराणामखण्डार्थत्वो-पपत्तिः; पदस्मारितातिरिक्तभेदघटितसंसर्गपरत्वाभावात्, पूर्वोक्तरीत्या पदान्तर-सार्थक्यस्यापि सम्भवाच्च।

### सत्यादिवाक्यानामखण्डार्थत्वेऽनुमानम्, सत्यादिवाक्यार्थे नित्यपरोक्षे श्रौतेऽपि नानुमानापेक्षाविरोधः

सत्यादिवाक्याखण्डार्थत्वमनुमानेनापि सिद्ध्यति। यद्यपि श्रुतिसिद्धस्यार्थस्या-नुमानेन साधनं नापेक्ष्यते; अन्यथा स्वर्गादिसाधनत्वस्याप्यनुमेयत्वापत्तेः, प्रत्यक्षेणा-नुमित्या वाऽसिद्धस्य वेदैकगम्यत्वस्य धर्मे स्वीकारात्, तथापि न नित्यमपरोक्षेऽनु-मित्यनपेक्षायामपि प्रत्यक्षयोग्येऽनुमानमप्यनवसरम्, ब्रह्मस्वरूपं तु स्वतः प्रत्यक्षं स्वप्रकाशञ्च विषय इति युक्तम्, सदादिवाक्यानामपि सत्यादिभेदमिथ्यात्वबोधन एव तात्पर्येण तस्य च तेन परोक्षस्य साधनाद् नानुमानानपेक्षा। सत्यादिवाक्यस्य सदादिभेदविरोधाच्च नाभेदज्ञानमपरोक्षम्; अन्यथा तत्त्वमस्यादिमहावाक्यवैयर्थ्य-पातात्। सत्यादिवाक्येन सदादिभेदः परं बाध्यते, तत्त्वमस्यादिवाक्ये तत्त्वाद्युपाधि-प्रयुक्तजीवेशभेदप्रयोजकाविद्यानिवृत्त्या स्वत एव संविन्मात्रमपरोक्षमिति खलु सिद्धान्तः।

### इन्द्रियसंनिकर्षे शब्दादप्यपरोक्ष-ज्ञाननिर्वाहात् शाब्दापरोक्षवादसमर्थनम् सत्यादिवाक्यानामखण्डार्थत्वं न मुख्यम्, अतो न तद्वाक्यमात्रेण सार्थक्यम्,

तत्र वाक्यजन्यज्ञानस्यापि घटेन्द्रियसंनिकर्षदशायां शुक्तीन्द्रियसन्निकर्षदशा-यामिव शब्देनाप्यप्रोक्षज्ञानं दृष्टचरम्। अतः शब्देनाप्यज्ञातांशमात्रबोधकेन निर्वि-कल्पकं ज्ञानं बहुशो दृश्यते। निर्विकल्पकत्वं च ज्ञानस्यारोपितविकल्पांशनिवर्तका-ज्ञाननिवृत्त्या। अत एव मण्डनः सर्वस्य ज्ञानस्य प्रकाशांशेऽप्रामाण्यं स्वीकरोति, अज्ञा-तांशबोधकत्वेन खलु प्रामाण्यं प्रमाणानाम्, न तु तत् ज्ञानस्य सविशेषकत्वप्रयुक्तम्। नहि ज्ञानसामान्यं सविशेषविषयमिति नियमः। तत्र विषयस्य सविशेषत्वं न तन्त्रम्। सत्यादिवाक्यस्थले तु सच्चिदानन्दरूपं निर्विशेषमेत्र विषयः, सत्यस्वरूपमात्रस्य सदादिरूपत्वात्।

तत्र 'ब्रह्मविदाप्नोति परम्' इति वाक्येऽखण्डाकारसाक्षात्कार एव परप्राप्ते-रुपायत्वेनाम्नायते, आनन्दस्यापि स्वरूपमात्रत्वात् । तथा चितोऽपि । अत एव चितो नानुभाव्यत्वम्; अन्यथा घटादिवज्जडत्वमितीष्टसिद्ध्यादौ व्यक्तम् ।

तत्र सर्वत्र प्रतीतिष्वात्मस्वरूपमात्रमधिष्ठानतया स्वयं प्रकाशते सदर्थस्या-धिष्ठानतयाऽबाध्यस्वरूपत्वात् सद्रूपस्य, तत्र सत्यादिवाक्ये आनन्दस्वरूपत्वं न प्रतीयत इति न मिथ्यात्वनिर्णयः, यतस्तत्र सच्चिदंशयोरेवाभेदो बोध्यते, तेन च सदादि-भेदमात्रमिथ्यात्वमवगम्यते; यतो वस्तुपरिच्छेदराहित्यमप्यर्थविरुद्धम् । सच्चिदात्म-नैव ब्रह्मणोऽधिष्ठानत्वादधिष्ठानव्यतिरेकेण सर्वस्याभावाच्च तदनन्यत्वप्रयोजक-मेवानन्तत्वमत्र विवक्ष्यते । आनन्दात्मना तु ज्ञानं 'आनन्दो ब्रह्मेति व्यजानात्' इति वाक्यमात्रावसेयम् । अतः सत्यादिवाक्यस्यांशविशेष एवाभेदज्ञानम्, इति तस्या-खण्डार्थत्वं न मुख्यम्, किन्त्वंशविशेषेण भेदप्रतीतिनिवारणेनैवाखण्डार्थत्वम् ।

**सत्यादिवाक्यम्, अखण्डार्थम्, तन्मात्र प्रश्नोत्तरत्वाद्**
**इत्यतो प्रश्नोत्तरत्वहेतुसमन्वयः**
**प्रकारणार्थोपपादनपूर्वकम्**

अत एव—'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति कारणत्वेन सच्चि-दात्मन एव प्रस्तावः, यतस्तत्र सच्चिदात्मनोर्वस्तुतो न भेदः । तत एवाधिष्ठानता-दशायां सदंशस्यापि प्रकाशमानत्वं चिदात्मन इव, इति न तस्यापीन्द्रियसन्निकर्ष-प्रयुक्तवृत्तिविषयत्वेनाधिष्ठानत्वम् । इदमेवाभिप्रेत्य—"नहि पुरोऽवस्थिते विषये एव विषयान्तरमध्यसितव्यमिति नियमः" इति भाष्यम् । "ब्रह्मविद्यदाप्नोति परम्" इति प्रस्तुतब्रह्मस्वरूपं न सत्यादिवाक्यमात्रेण बोध्यते, किन्तु तन्मुखेन प्रस्तुत्य, "ब्रह्म पुच्छं प्रतिष्ठा" इति वाक्येन पुच्छब्रह्मोपरांहृत्य, तदेव "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" त्युपसंह्रियते, इति सत्यादिवाक्यस्याखण्डार्थत्वं दृष्टान्त-विधयैव विवक्ष्यते, न मुख्यतया प्रतिपाद्यतया; सर्वात्मनाऽखण्डार्थत्वस्य तत्राभावात् । एवं च "ब्रह्मविदाप्नोति" इति प्रस्तुतं ब्रह्म किमिति प्रश्नोत्तरत्वस्य सच्चिदात्मनो-रेकत्वेनाधिष्ठानतया प्रस्तावमभिप्रेत्य द्वारविधया प्रश्नोत्तरत्वमेवेति सत्यादिवाक्य-मखण्डार्थम्, तन्मात्रप्रश्नोत्तरत्वादित्यत्र प्रश्नोत्तरत्वपदार्थः ।

**तत्त्वमस्यादिवाक्याखण्डार्थत्वानुमानस्यापि**
**समन्वयः, साध्यहेत्वोः**

तत्त्वमस्यादिवाक्याखण्डार्थत्वं त्वानन्दात्मनापि ब्रह्मस्वरूपसाक्षात्कारेण सर्वो-पाध्युपादानाविद्यानिवृत्त्या जीवत्वेश्वरत्वप्रयोजकोपाधिनिवृत्तौ तत्प्रयुक्तोपाधिक-भेदस्यापि निवृत्त्या मुख्यमेव । अभेदप्रतीत्या भेदनिरासस्तु कार्य-कारणभावेऽपि भवति, तथापि तत्र कार्यात्मनाऽत्यन्तभेदस्य निवृत्तावपि तादात्म्यप्रतीतिनिर्वाहक-

तया भेदोऽप्यविरुद्धो भासते; भेदगर्भाभेदरूपत्वात् तादात्म्यस्य। स चाभेदोऽधिष्ठाननतादशायामेव। अत एव 'सन् घटः' इत्यादिस्थलेऽपि नाखण्डार्थत्वम्, कार्य-कारणभावस्य तदानीं विवक्षणात्। तत्त्वमसिवाक्यजन्यसाक्षात्कारदशायां तु सर्वोपाधिप्रयोजकाविद्यायाः, तत्प्रयुक्तानां च विनाशात् न कार्यकारणभावः इति सामानाधिकरण्यस्यात्रात्यन्ताभेदविषयत्वम्। इदमेवाभिप्रेत्य तत्त्वमस्यादिवाक्यानामखण्डार्थत्वानुमानम्—तत्त्वमस्यादिवाक्यम् अखण्डार्थनिष्ठम्, अकार्य-कारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात्। अयं तु हेतुर्न सत्यादिवाक्यस्यापि साधारणः, सत्यज्ञानयोरकार्यकारणभावाभावात् सामानाधिकरण्याच्च। एवञ्च तन्मात्रप्रश्नोत्तरत्वमुभयत्र हेतुः। सामानाधिकरण्यं ह्यत्राभेदमात्रप्रतीतिमादाय, न भेदघटिततादात्म्यमादाय। अतो न संसर्गागोचरत्वमसिद्धम्।

### सत्यादिवाक्यस्य मिलितलक्षण एव तात्पर्यम्, न प्रत्येकलक्षणत्वे

सत्यज्ञानादिपदानां न प्रत्येकं लक्षणत्वम्, परैः सत्यत्वस्यासत्वे क्षणिकज्ञाने ज्ञानत्वस्य च शून्यवादिभिः स्वीकारात्, किन्तु मिलितमेव लक्षणम्।

### स्वरूपस्यासंकीर्णरूपेण स्वरूपलक्ष्यत्वाविरोधः

तत्र स्वरूपस्यापि भेदावस्थायामविद्याप्रयुक्तायां लक्षणत्वम्, इतरव्यावृत्तावस्थायां तु लक्ष्यत्वम्, इति न लक्ष्य लक्षणभावविरोधः। संशयादिनिवर्तकस्वरूपज्ञाने स्वरूपस्यापि द्वारत्वं त्वविरुद्धम्।

### निर्विशेषज्ञानस्यैवाज्ञाननिवृत्त्या मोक्षहेतुत्वं तत्त्वमस्यादिस्थले

मोक्षहेतुर्हि ज्ञानं न सप्रकारकम्, किन्त्वज्ञानसमानविषयकमिति निष्प्रकारकज्ञानेनाप्यज्ञाननिवृत्त्या मोक्षोपपत्तिः। उपहितान्याविषयकत्वे सत्युपहितविषयकस्यैव ज्ञानस्याज्ञानसमानविषयत्वेनाज्ञानतत्प्रयुक्तसंशयादिनिवर्तकत्वात्. अभिहितान्वयवादे, अन्विताभिधानवादे वा तात्पर्यविषयासंकीर्णस्वरूपमात्रबोधकत्वेनैवानुभावकत्वाद् वाक्यस्य संसर्गविषयकत्वानियमात्। अयमेव न्यायस्तत्त्वमसिवाक्यार्थेऽपि। दृष्टान्तस्त्वत्र 'सोऽयं देवदत्तः' इति वाक्यम्। न चात्र साध्यवैकल्यम्। नहि तत्र तद्देश-तत्कालविशिष्टाभेदबोधकत्वम्; विशिष्टयोरभेदायोगात्। अत एव नात्र तद्देश-कालवैशिष्टथबोधकत्वम्, न वा तत्र विशेषणयोरैक्यबोधकत्वम्; बाधात्, किन्तु तत्तद्विशेषणाविवक्षया विशेष्यैक्यमात्रपरत्वम्। तदुक्तम्—

"अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः।<br>
घटते न यदैकता तदा नतरां तत्र विपरीतरूपयोः॥" इति।

### तत्त्वमस्यादिवाक्यानामैक्यबोधकत्वं लक्षणया, तत्राभेदो न प्रकारः, किन्तु संसर्गः

तत्रैक्यबोधनं तु लक्षणया। तत्र लक्ष्यस्वरूपैक्येऽपि प्रवृत्तिनिमित्तभेदान्नापययिता। तत्राभेदो न प्रकारः, किन्तु संसर्गः। पदार्थबोधसाम्येऽपि वाक्यार्थस्याभिज्ञाद्वय इव प्रथमं विशिष्टार्थोपस्थापनात्, अभिज्ञाद्वयप्रत्यभिज्ञयोरिव सप्रकारकत्वनिष्प्रकारकत्वाभ्यां विशेषात्।

तत्रापि चिन्मात्रस्य नित्यसिद्धत्वेऽपि सार्वज्ञाद्युपलक्षितस्वरूपज्ञानस्याज्ञाननिवर्तकस्यसाध्यत्वान्न महावाक्यावेद्यत्वम्, सोऽयमित्यादौ तत्तादेरिव सार्वज्ञादेरुपलक्षणत्वेन न सप्रकारकज्ञानत्वं महावाक्यजन्यज्ञानस्य। तेन च फलवैलक्षण्यम्, अस्याज्ञाननिवर्तकत्वात्। अत्रोभयत्र दृष्टान्त-दार्ष्टान्तिकयोरभेदो नैक्यम्, किन्तु भेदविरह एव—उपाधिनाशप्रयुक्तौपाधिकभेदविरह एव। तदुक्तं वार्त्तिके—

"उपाधिभेदभिन्नार्थो येनैकः प्रतिपाद्यते।
तदपि स्यादखण्डार्थं महत्खं कुम्भखं यथा॥"

इति। तत्सिद्धम्—

"मानं वेदान्तवाक्यानि निर्गुणाखण्डबोधनात्।
निर्गुणत्वं च तस्योक्तं श्रुत्या युक्तिसहायया॥"

इति।

### ब्रह्मनिराकारत्वे विष्णुपुराणवचनानि

अत एव तस्मिन्निराकारताऽपि। अत एव विष्णुपुराणे—परापरमूर्तभेदेन, परापरामूर्तभेदेन च चतुर्धा ब्रह्म प्रस्तुत्य, परामूर्तम्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मशब्दितम्॥"

इत्युपसंहृतम्। अस्य मुक्तात्मपरत्वेन केषाञ्चन विवरणमप्यद्वैतमतसम्मतमेव; तस्यैवानुपहितात्मतत्त्वरूपत्वात्। अत एवाद्वैतसिद्धावपि—

"मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्य-ज्ञान-सुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः॥"

इत्यत्र विष्णुपदेन व्यापकजीवस्वरूपमिति व्याख्यातम्। अत एवाहमर्थस्वरूपनिष्कर्षः प्रथमपरिच्छेदे द्वितीयपरिच्छेदान्ते च जीवाणुत्वनिरास उपपद्यते। कठवल्ल्यपि मुक्तात्मस्वरूपमेवाशरीरम् 'अस्तीत्येवोपलब्धव्यः" इति निर्धारयति।

### ब्रह्माभिन्ननिमित्तोपादानं निर्विशेषञ्च उपादानत्वं च विवर्तमानतया

इदं च ब्रह्म निर्विशेषं निमित्तम् उपादानं च तच्च केवलविवर्तोपादानम्, न परिणाम्युपादानम्। अत्रानुमानप्रयोगौ—महाभूतानि सद्वस्तुप्रकृतिकानि सत्स्वभावानुरक्तत्वे सति विविधविकारत्वात्; मृदनुस्यूतवस्तुवत्; जगद्, अभिन्ननिमित्तोपादानकम्, प्रेक्षापूर्वकं जनितत्वात्; सुख-दुःखवदिति। तथाहि—

### ब्रह्माविद्योभयोपादानताविवेकः

ब्रह्म निर्विशेषं निमित्तमुपादानं च।

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते॥"

इति वचनानुसारेण विवर्तकारणाज्ञातविषयत्वरूपविवर्ताधिष्ठानत्वेनोपादानत्वोपपत्तेः। आत्मनि कार्यजनिहेतुत्वमुभयविधोपादानसाधारणलक्षणमपि न दुष्टम्। एवं चाज्ञानं परिणामरीत्या, ब्रह्म विवर्तमानतया जगत्कारणम्। परिणामित्वं च परिणाम्युपादानसमसत्ताकत्वम्, न सत्यरूपान्तरापत्तिरूपम्, इति न जगत्सत्यतामापादयति। घटकुण्डलादेः परिणाम्यपेक्षादर्शनेन तद्वदेवाकाशादावपि तस्यापेक्षायां नाविद्याकल्पनानुपपत्तिः, येन ब्रह्मण एव कल्पितविकारेण परिणामित्वमपि कल्प्येत। तद्विषयकाज्ञानपरिणामित्वव्यतिरेकेण नहि विकारेऽतात्त्विकत्वं निर्वक्तुमलम्, इति नाविद्योपादनत्वमन्तरा प्रपञ्चविकारित्वोपपत्तिः। उपादानत्वस्वरूपविकल्प-तद्दूषणादिकं सर्वमप्यनुक्तोपालम्भनमेव। एवं भ्रमाधिष्ठानत्वेनापि ब्रह्मोपादानत्वम्। नहि शुक्तिः, अतीतादिकं वाधिष्ठानम्, किन्तु तदवच्छिन्नचैतन्यमेवेति नातीतेऽतिव्याप्तिः, शुक्तौवाऽव्याप्तिः। एवं चैकमेव चैतन्यमविद्योपहितत्वेनोपादानम्, अविद्यापरिणामेच्छाकृत्याद्याश्रयत्वेन कर्तृ च, इति सिद्धमिदं निर्विशेषं ब्रह्म निमित्तमुपादानं चेति। कुलालकार्यघटादीनामपि कल्पितत्वाद् रूप्यादीनामपि सकर्तृत्वाच्च न कोऽपि दोषः।

### कर्तृत्वनिष्कर्षः, येन ब्राह्मणो निमित्तत्वम्

एवं च कर्तृत्वं स्वोपादानगोचरप्रयत्नादिमत्त्वं मायाविवद् व्यामोहकत्वं वेति सूचितम्। व्यामुग्धजीवद्रष्टृत्वेऽपि भ्रान्तज्ञत्वमेव स्यात्, न तु भ्रान्तत्वम्। मायाव्यपि करवाणीति संकल्पपूर्वकं करोत्येव, इति व्याकरवाणीति नानुपपन्ना। मायावित्वेऽपि स्रक्ष्यमाणमायिकविश्वाकारमायासत्त्वांशपरिणामधारतया सार्वज्ञलाभात् शास्त्रयोनित्वाधिकरणभाष्यमपि न विरुद्धम्।

## ब्रह्मणोऽभिन्ननिमित्तोपादानत्वे प्रमाणानि

तत्र च (१) "यतो वा इमानि भूतानि जायन्ते", (२) 'सच्च त्यच्चाभवत्", (३) "सोऽकामयत बहु स्यां प्रजायेय", (४) "तदैक्षत बहु स्याम्", (५) "असद्वा इदमग्र आसीत् ततो वै सदजायत" इति श्रुतयः, (६) "ब्रह्मणि सृष्टिलयश्रवण-लिङ्गम्", (७) "भूतयोनिमिति योनिशब्दः", (८) "सर्वं खल्विति सामानाधि-करण्यम्", (९) "प्रकृत्यधिकरणम्", (१०) "महाभूतानि, सद्वस्तुप्रकृतिकानि" इत्यनुमानं च प्रमाणानि।

## "यतो वा" इत्यादिश्रुतीनामभिन्ननिमित्तापादानत्वपरतानिरूपणम्

तथाहि—'यतो वा' इति श्रुतौ हि लयाधारत्वादिलिङ्गेन प्रकृतिपरत्वमेव पञ्चम्या अङ्गीकरणीयम्। न ह्यन्यथा वाक्यशेष उपपद्यते। 'सच्च त्यच्चाभवदिति' सामानाधिकरण्यमपि ब्रह्मोपादानत्व एवोपपद्यते। सदादिभाव एवात्र जगत्सृष्टिः, न तु सृष्टयनन्तरकालिकप्रवेशोत्तरकालिकसत्वादिगुणाभिव्यक्तिः सच्च त्यच्चेति वाक्ये बोध्यते; तदनुप्रविश्य' इत्यस्य 'मुखं व्यादाय स्वपिति' इतिवदुपपत्तेः; इदं सर्वमसृजत' इति तु निमित्तत्वमात्रभ्रान्तिव्युदासार्थमिति न तेन पौनरुक्त्यम्। 'स्याम्' इत्यनेन सुखी स्यामितिवद् भाविसत्त्वोक्त्या नियामकरूपाणामीश्वराभिन्नानां पूर्वमेव सिद्धया तत्र संकल्पासंभवेन च गुरुः स्यामितिवदनुपपत्त्या कार्यभावापत्तेरेव विवक्षणीयतया 'बहु स्याम्' इति श्रुतिरपि व्याख्याता। 'तत्तेज ऐक्षत' इत्यत्र तेज आद्यवच्छिन्नचैतन्यस्य विवक्षणेऽप्यवच्छेदकतेज आदिसर्जने बाधकाभावेन ' तदैक्षत बहु स्याम्" इति श्रुतिरपीदानीमनुकूला। एतेन—"तदात्मानं स्वयमकुरुत" इति श्रुतिरपि—व्याख्याता, आकाशाद्यात्मना तस्यापि कारणतोपपत्तेः। ऊर्णनाभौ बहिष्ठस्य तन्तोरन्तः प्रवेशमात्रमेव, न तु लयः, इति तिरोभावमात्र एव 'यथोर्ण-नाभिः सृजत' इति दृष्टान्तः, इति न निमित्ते कुत्रापि लय इति लयाधारत्वलिङ्ग-मप्युपादानत्वं गोचरयति। अन्यत्र मुख्यासंभवाद् गौणोऽपि योनिशब्दोऽत्र बाधका-भावाद् मुख्योपादानार्थबोधक एवेति योनिशब्दोऽपि विवृतो मन्तव्यः। नहि सर्वगत-त्वमात्रेण सर्वत्वम्; आकाशस्यापि सर्वत्वप्रसङ्गात्, इति 'सर्वं खलु' इति सामाना-धिकरण्यमप्यस्माकमेवानुकूलम्। यथा च प्रकृत्यधिकरणमस्माकमेवानुकूलम्, तथा कल्पतरुपरिमालाद्युपबृंहितब्रह्मसूत्रभाष्यभूमिकायां विस्तृतम्।

एतेन—अनुमानद्वयमपि—व्याख्यातम्। यथा विवर्तमतेऽप्युपादानत्वोपपत्तिः, तथा पूर्वमेव निरूपितम्। नहि प्रधानं तदिति नार्थान्तरमपि। हेतुश्चात्र तदनुरक्तत्व-विशिष्टतद्विकारत्वमेव, इति न गोत्वानुरक्तखण्डे व्यभिचारः। ब्रह्म न द्रव्योपादान-मिति सत्प्रतिपक्षानुमानं तु श्रुतिबाधितं श्रुत्यनुगृहीतास्मदनुमानबाधने न समर्थमिति प्रथमानुमानं निर्दुष्टमेव। द्वितीयानुमाने तु हेतुद्वयतात्पर्यान्न व्यर्थविशेषणत्वम्;

अन्तःकरणस्यैव परिणाम्युपादानत्वेऽपि तद्रूपेण परिणताविद्याधारतया विवर्तोपादानत्वमपि विद्यत एवेति न साध्यवैकल्यम्, नापि श्रुतिविरोधेन हीनबलत्वेन सोपाधिकत्वेन च सत्प्रतिपक्षोऽपीति सर्वमनवद्यम्।

### ब्रह्मस्वप्रकाशत्वनिष्कर्षप्रकाराः

एतेन—स्वप्रकाशत्वमपि—व्याख्यातम्। तथाहि—परिणममानाविद्याधिष्ठानत्वमपि ब्रह्मणः स्वप्रकाशत्वादुपपद्यते। ब्रह्मणः स्वप्रकाशत्वात्तु तज्ज्ञानार्थं प्रमाणान्तरानपेक्षा। स्वप्रकाशत्वं चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वम्। अनधिकरणत्वस्य स्वरूपत्वाद् मोक्षेऽपि सत्त्वेन नाव्याप्तिः। स्वरूपस्यापि लक्षणत्वं त्वन्मते ब्रह्माभिन्नानन्दादौ गुणत्वव्यवहारवदुपपद्यते। अभावश्चात्र योग्यत्वविरोधी व्यावहारिको वा विवक्षित इति न ब्रह्मण्यसंभवः। अवेद्यत्वं चात्र फलाव्याप्यत्वरूपमेव विवक्षितम्। घटादीनामपि फलव्याप्यत्वस्य पूर्वमेवोपपादनाद् अपरोक्षव्यवहारपदेन प्रमाणजन्यापरोक्षवृत्तिविषयत्वस्यैव विवक्षणाच्च न घटशुक्तिरूप्यादावतिव्याप्तिः। ब्रह्मणस्तु न फलव्याप्यत्वम्; स्वस्य स्वासंबन्धादिति नासंभवोऽपि। अपरोक्षव्यवहारश्चापरोक्ष इति शब्दप्रयोग एव विवक्षितः, इति न तद् दुर्वचम्। तच्च योग्यत्वं प्रमातारं कञ्चन प्रतीति न दोषः। स्वविषयमपि स्फुरणं स्वभावभेदात् स्वव्यवहारजनकमिति न व्याहत्याद्यवकाशः।

एतेन चिदविषयस्वरूपत्वमपि स्वप्रकाशत्वं निर्दुष्टमिति सूचितम्। नहि स्वमेव स्वस्य विषयः। चिदन्यस्य सर्वस्य चिद्विषयत्वात्तुच्छस्य च निःस्वरूपत्वान्नातिव्याप्तिः। मिथ्यात्वानुमितिस्तु स्वपरविषयतानियामकेनैकेन रूपेण स्वविषयापीति युक्तम्, नैवमत्र। स्ववेद्यत्वस्य बाधितत्वेन तदादायार्थान्तराप्रसङ्गेन स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वमपि तत् संभवति। स्वप्रकाशत्वं चेह ब्रह्मस्वरूपमेवेति न तत्तात्त्विकत्वेऽद्वैतहान्यापत्तिरिति सर्वमनवद्यम्।

### अनुभूतिस्वप्रकाशत्वानुमित्यादिव्यवस्था

एतेन--अनुभूतिः स्वप्रकाशा, अनुभूतित्वादिति व्यतिरेक्यनुमानमपि तत्र प्रमाणमिति सूचितम्। न च साध्याप्रसिद्धिः, वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगीत्यनुमानेन साध्यप्रसिद्धिसंभवात्। अत्र च चिदविषयत्वरूपस्वप्रकाशत्वस्य साधने वेद्यत्वं चिदविषयत्वरूपमेव चिदन्यमात्रवृत्तिपक्षः। अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वरूपत्वे फलव्याप्यत्वरूपं तत्। साध्यं तु पूर्वत्रात्यन्ताभावप्रतियोगित्वमुत्तरत्रापरोक्षव्यवहारयोग्यं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वमित्याद्यद्वैतसिद्धौ विस्तरः। श्रुतिविरोधात्तु नात्र सत्प्रतिपक्षादिकम्। कल्पितव्यक्तिभेदमादायानुभूतित्वजातेः शुद्धेऽपि संभवान्नासिद्धिः। जात्यन्यूनसत्ताकव्यक्तिभेदसापेक्षैव सेति नातिप्रसङ्गः। अनुभाव्याभावेऽप्यनुभूतित्वम्, अनात्मन्यनुभूतिशब्दप्रयोगश्च पूर्वमेव निरस्तमिति न दोषः।

## स्वप्रकाशत्वेऽनुमानान्तरपरीक्षा

एतेनानुमानान्तराण्यपि व्याख्यातानि। नहि स्वस्यैव स्ववेद्यत्वम्; विषयविषयिभावस्य भेदव्याप्तत्वात्। स्वेनैव स्वव्यवहारोपपत्तौ न स्वविषयत्वोपपादकं किञ्चिदस्ति। वेदान्तप्रामाण्यादिकं वृत्तिविषयत्वमात्रेणोपक्षीणमिति न विरोधः। एतेनात्मस्वप्रकाशत्वमपि व्याख्यातम्। यथा चात्मनो न ज्ञानाश्रयत्वम्, किन्तु ज्ञानरूपत्वमेव, तथान्यत्र विस्तृतम्। एवं च निर्धर्मकतयाऽवेद्यतया च ब्रह्मानन्दादिपदलक्ष्यं न वाच्यम्; प्रवृत्तिनिमित्ताभावादिति मन्तव्यम्। अवाच्यशब्दस्तु वाच्यत्वात्यन्तावबोधनद्वारा लक्षणया स्वरूप एव पर्यवसन्नः। वस्तुतस्तु ब्रह्म न लक्ष्यमपि वाच्यत्वाभावनिबन्धनत्वात्तद्व्यवहारस्य। लक्ष्यत्वाभावेन वाच्यत्वव्यवहारोऽपि गौण इष्ट एव। यथा चान्विताभिधानेऽपि स्वरूपलक्षणाऽविरोधस्तथा पूर्वमेव निरूपितम्। एवं च ब्रह्मणि न शब्दस्याभिधया प्रवृत्तिः। एतदभिप्रायैव "यतो वाचो निवर्तन्ते" इति श्रुतिरिति मन्यामहे। निर्धर्मकतया बाधात्। सधर्मकत्वेन सोपाधिकत्वाच्च तात्पर्यविषयो ब्रह्म वाच्यमित्यनुमानमपि पराहतमिति सर्वमनवद्यम्।

इति द्वितीयपरिच्छेदार्थसंग्रहः।

तदेवं प्रथमपरिच्छेदस्याहमर्थानात्मत्वनिरूपणवद् द्वितीयपरिच्छेदस्यापि जीवात्माणुत्वनिरासेनोपसंहाराद् अनुपहितात्मतत्त्वपरमात्मतायामेवद्वैतसिद्धेः परमादरः सूच्यत इति 'अथातो ब्रह्म जिज्ञासा' इति प्रस्तुत्य ब्रह्मपदार्थनिष्कर्षः।

## अथ तृतीयपरिच्छेदार्थसंग्रहः

अथ—"अथातो ब्रह्म जिज्ञासा" इति सूत्रेऽथशब्दप्रस्तुतसाधननिरूपणार्थस्तृतीयः परिच्छेदः।

अत्र प्रतिपादिता विषयाः—

(१) मनन-निदिध्यासनयोः श्रवणाङ्गत्वम्
(२) विवरणोक्तनियमोपपत्तिः
(३ श्रवणादेर्विधेयत्वोपपत्तिः
(४) विचारस्य श्रवणविधिमूलत्वोपपत्तिः
(५) वाचस्पत्युक्तस्वाध्यायविधिविचाराक्षेपकत्वविचारः
(६) ज्ञानस्य पुरुषतन्त्रताभङ्गः
(७) ज्ञानविधिभङ्गः
(८) शाब्दापरोक्षत्वमिति

अत्राद्वैतसिद्धिर्विवरणप्रस्थानमेव श्रवणोपयोगविषये समाद्रियते। अतस्तन्मतेन श्रवणनियमविधिस्तात्पर्यावधारणस्यैव श्रवणत्वम्, अस्य विधेयत्वम्, विचारस्य श्रवणविधिमूलत्वम्, जिज्ञासासूत्रस्य श्रवणविधिमूलकत्वम्, विचारस्य श्रवणविधि-

मूलकत्वोपपत्तिरिति पञ्चप्रकरणानि । विधित्वनिषेधस्तु दर्शनमात्रे, विवरणदृष्ट्या भामतीमतेन श्रवणादेरपि क्रियात्वमिति ।

अत्र च श्रवणविधिपक्षस्य पूर्वं पश्चादुपसंहारे तद्विधिपक्षस्य चोपक्षेपाद् मङ्गलश्लोके विट्ठलेशोक्तरीत्या भामतीमत एव परमादर इत्यवगम्यते ।

## शाब्दापरोक्षवादे, तत्परोक्षवादे च श्रोतव्यवाक्ययोजना

तत्र ज्ञानस्य पुरुषातन्त्रत्वपक्षः, मोक्षजनकस्य ज्ञानस्यापरोक्षत्वं चोभयसम्मतम् । तत्र प्रथममते साक्षाच्छाब्दत्वमपरोक्षस्य, द्वितीये श्रवण-मनन-निदिध्यासनपरिपाकसहकृतमनोजन्यत्वमपरोक्षज्ञानस्य, उभयत्र श्रवण-मनन-निदिध्यासनानां सर्वेषां साक्षात्कारे जनयितव्येऽस्त्युपयोगः । विशेषस्तु श्रवणमेकत्राङ्गि, अपरत्र निदिध्यासनमङ्गि, इतरे त्वङ्गे, तत्र पूर्वाङ्गत्वमेव श्रवण-मननयोः, श्रवणाङ्गित्वपक्षे तूत्तराङ्गे निदिध्यासनमनने इति न फलभेदः ।

## शाब्दापरोक्ष-तत्परोक्षवादयोः फलाभेदादिव्यवस्था

तत्र निदिध्यासनाङ्गित्वपक्षे साक्षात्कारे श्रवणस्य, श्रुतस्य शब्दस्य वा प्रयोजकतया शाब्दत्वम् श्रवणाङ्गित्वपक्षे साक्षाच्छब्दजन्यत्वेन । यथाऽन्विताभिधानवादेऽन्वयानुभवस्य शाब्दत्वं साक्षात्, अभिहितान्वयवादे तु शाब्दत्वं शब्दप्रयुक्तत्वेन । उभयत्र तत्त्वसाक्षात्कार एवाज्ञाननिवर्तनक्षम् इत्यविशेषः ।

## कर्मणां ज्ञानयोग उपकारकत्वे मण्डन-विवरणाचार्यमतयोर्निष्कर्षः

विशेषस्तु—शाब्दापरोक्षवादे संन्यस्तस्य श्रवणाधिकारः, शाब्दपरोक्षवादे तु यावन्निदिध्यासनपरिपाकाभ्यासेन साक्षात्कारोदयः, तावत्पर्यन्तं निष्कामकर्मणां संयोगपृथक्त्वन्यायेन । तत्र प्रथमे श्रवणानन्तरमेव स्थितप्रज्ञः सिद्धः, तथापि तस्य षष्ठ-सप्तमभूमिकाभेदेन तदतिशयावस्था, द्वितीयपक्षे तु यावन्निदिध्यासनाधीनसाक्षात्कारं साधकावस्थास्थितप्रज्ञस्य, तदनन्तरमेव निरतिशयः सिद्धः स्थितप्रज्ञः । तत्राद्ये संन्यस्तानां चिरेणैव मोक्षः, द्वितीये तु निरतिशयानां स्थितप्रज्ञानामचिरेण मोक्षः । इदमेवाभिप्रेत्य—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यत्राश्वदृष्टान्तः । यथाश्वेन ग्रामं गच्छन्नचिरेण गच्छति, वृषभेण तु चिरेण, तथाऽत्रापि कर्मसाहित्ये निदिध्यासनपर्यन्तमचिरेण साक्षात्कार इति मन्तव्यम् ।

## भास्करीयज्ञान-कर्मसमुच्चयवादाद् मण्डनाभिमततत्समुच्चयवादविशेषादिः

अत्र ज्ञान-कर्मसमुच्चयवादो भामत्यभिमतः, मण्डनादिमतो वा । सोऽपि न भास्करमत इव समसमुच्चयेन, किन्तु पापक्षयार्थत्वेनैव, आनिदिध्यासनम्, आत्मसाक्षात्कारानन्तरं तु नोभयत्र कर्माधिकारस्तत्र । श्रवणाङ्गित्व-तदङ्गत्वपक्षयोः

कर्मण उपयोगो सत्यपि विशेषे, प्राप्तात्मसाक्षात्काराणां कर्मसंन्यासे न विशेषः। इदमेवाभिप्रेत्य तत्त्वप्रदीपिकादिष्वद्वैतसिद्धौ च ज्ञान-कर्म-समुच्चयवादनिरासः।

### तृतीयपरिच्छेदस्य, किं बहुना ? परिच्छेद-त्रयस्यापि मण्डनसिद्धान्त एव समादर इति विस्तरेणोपपादनम्

इदमत्रावधेयम्—यत्तृतीयपरिच्छेदोऽपि मण्डनसिद्धान्तेनैव वाचस्पतिमतेनोपसंह्रियते। तत्र जिज्ञासासूत्रस्य श्रवणविधिमूलकत्वं न भामतीप्रस्थाने भवितुमर्हति, तस्याविधित्वात्, ब्रह्मजिज्ञासाया ऐच्छिकत्वमापद्यते, इति तत्र प्रवर्तनार्थं भामत्या स्वाध्यायविधिमूलकत्वं स्वीक्रियते। न चैतावतापि पूर्वोत्तरमीमांसयोरैक्यम्; धर्मजिज्ञासासूत्रे धर्मपदस्य प्रभाकरदृष्टया वेदार्थपरत्वं हि वेदार्थविषयत्वोपाधिकं तदिष्टमेव तदैक्यम्। यदि तदैक्यं मीमांसकदृष्टया, जैमिनिदृष्टया वा, "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति सूत्रितदिशा तूपनिषदामर्थवादत्वेन, तर्हि तासां पृथक् न प्रामाण्यं स्यात्, पृथक् ब्रह्मजिज्ञासासूत्रणं चानुपपन्नं स्यात्। इदमेवाभिप्रेत्य भगवत्पादानां "स्वाध्यायानन्तर्यं तु समानम्" इति वाक्यम्, भामती चात्र सम्यग् व्याचष्टे धर्मपदेन वेदार्थो विवक्ष्यत इति। यतः "चोदनालक्षणोऽर्थो धर्मः" इति धर्मपदार्थनिष्कर्षः, ब्रह्म तु 'जन्माद्यस्य यतः' इति निष्कृष्यते। ब्रह्मपदार्थो यदि जीवः, तर्हि अर्थवादता वेदान्तानामिति भामत्यादिपूर्वपक्षः, अनुपहित-चैतन्यपरत्वे तु सिद्धान्त इति व्यवस्था। अनेन ज्ञाप्यते—न जीवात्मतत्त्वातिरिक्तं ब्रह्मतत्त्वं नाम; अन्यथा जीवपरत्वेन पूर्वपक्ष; अर्थान्तरपरत्वेन सिद्धान्त इति पूर्वोत्तरपक्षयोर्वैयधिकरण्यं स्यात्। "शेषत्वात् पुरुषार्थवादः" इति सूत्रोपक्षिप्तसिद्धपूर्वपक्षनिरासपरे "अधिकोपदेशात्तु" इति सूत्रेऽधिकपदमसंसारिस्वरूपपरतया विवृण्वद् भाष्यमप्यमुमेवार्थं द्रढयतीत्यलमतिविस्तरेण। अत्राद्वैतसिद्धौ—प्रथमपरिच्छेदस्याहमर्थानात्मत्वसमर्थनपरतयोपसंहारः, द्वितीयपरिच्छेदस्य जीवाणुत्वनिरसनपरतयोपसंहारवत् तृतीयपरिच्छेदस्याप्यसंसार्यात्मस्वरूप एव वेदान्तानां तात्पर्येणैवोपसंहारश्च तस्याः परमादरो मण्डनसिद्धान्ते, भामतीसिद्धान्त एव वेति विशदमवगम्यते।

### तुरीयपरिच्छेदार्थसंग्रहः

अथ तुरीयः परिच्छेदः "अथातो ब्रह्मजिज्ञासा" इति सूत्रे जिज्ञासाघटकज्ञान-पदसूचितं मोक्षस्वरूपमद्वैतसिद्धान्तसिद्धमुपपादयितुमारभते। तत्र षट् प्रकरणानि। तानि यथा—

(१) अविद्यानिवृत्तिनिरूपणम्
(२) अविद्यानिवर्तकनिरूपणम्
(३) मुक्तेरानन्दरूपत्वेन पुरुषार्थत्वनिरूपणम्

( ४ ) चिन्मात्रस्य मोक्षत्वोपपत्तिः
( ५ ) जीवन्मुक्त्युपपत्तिः
( ६ ) मुक्तौ तारतम्यभङ्गश्च

## अविद्यानिवृत्ति-तन्निवर्तकप्रकरणयो-र्मुक्तिप्रकरणे सङ्गतिनिरूपणम्

अत्रानिर्वचनीयाविद्याप्रकरणे तन्निवर्तक-तन्निवृत्तिप्रकरणे यद्यपि प्रसङ्गात् सङ्गते, तथैव श्रीभाष्यादिषु ते अपि विचारिते; तथापि तयोर्मुख्या सङ्गतिर्मुक्ति-प्रकरण एव, यतः सैव मुक्तिः. अतोऽत्र तन्निवृत्तिप्रकरणम् । अविद्यानिवर्तकप्रकरणं तु मुक्तिसाधनत्वात् साधनाध्यायार्थसंकलनपरे तृतीये परिच्छेद एव साक्षात् सङ्गतम्; तथाप्यविद्यानिवर्तकस्यैवाविद्यानिवृत्तिरूपत्वस्याद्वैतमते स्वीकारादुभयस्य फला-ध्याये सङ्गतिः । मुक्तिर्हि—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।"

इति ज्ञातत्वोपलक्षितनिवृत्तिस्वरूप आत्मैवेत्यद्वैतसिद्धान्तः ।

## अविद्यानिवृत्तेर्मुक्तिस्वरूपत्वसमर्थनम्

अविद्यानिवृत्तिश्चेयं ज्ञातत्वोपलक्षितात्मरूपत्वात् तत्रोपलक्षणज्ञानाजन्यत्वेन तद्रूपायास्तस्या अपि जन्यत्वासंभवान्न न संभवति वस्तु, तथापि ततोऽविद्यानिवृत्ति-स्तद्विरोधिनी वृत्तिरेव, इति न तस्याः साध्यत्वविरोधः, यावत्कार्योत्पत्तिविरोधि-कार्यमेव ध्वंस इत्यङ्गीकारात् । तत्र च जीवन्मुक्तावपि यद्यपि वृत्त्युपलक्षित आत्मा-ऽस्ति । तथापि चरमवृत्त्युपलक्षितात्मन एव मुक्तित्वान्न तदापि मुक्तव्यवहारा-पत्तिः । जीवन्मुक्ति-प्रयोजकवृत्तेः परमुक्तिप्रयोजकवृत्तौ विशेषस्तु प्रारब्धविक्षेपा-विक्षेपाभ्याम् । अतो न जीवन्मुक्ति-परमुक्त्योरविशेषापत्तिः । तत्र मुक्तेर्वृत्तिसाध्यत्वं तद्विरोध्यावरणनिवृत्तिमात्रेण । अतोऽज्ञाननिरासात्मरूपैव मुक्तिः ।

## तत्त्वज्ञानस्याविद्याप्रयुक्तस्यापि समान-विषयकस्यापि निवर्तकत्वेनाविद्या-निवर्तकत्वोपपादनम्

अविद्यानिवर्तकश्च ज्ञानं न चिन्मात्रम्; तस्य तदविरोधित्वात्, किन्तु श्रव-णादिसाध्यब्रह्मज्ञानम् । तस्याप्यज्ञानप्रयुक्तत्वेन निवर्त्यत्वेन स्वरूपतो मिथ्यात्वेऽपि विषयतोऽमिथ्यात्वम् । अज्ञाननिवृत्तेरपि मिथ्यात्वपक्षे तेन तदुत्पत्तेरविरोधात्, सत्यत्वपक्षेऽप्यसत्यात् सत्योत्पत्तेः साधनात् न जानामीत्यनुभवेऽपि भावरूपसाक्षि-भास्याज्ञानस्यैवानुभवेन तस्य साक्षिणा तद्भासकेनाविरोधात्, वृत्त्युपारूढाया वृत्ते-रेवाज्ञानविरोधित्वात् चरमवृत्तेरखण्डाकाराया उपाधित्वमात्रेणोपहितान्याविषयकत्वे सत्युपहितविषयत्वेनाज्ञानसमानविषयत्वेऽपि 'सन् घटः' इत्यादिज्ञानस्य तद्विपरीतस्य ततो विशेषेण घटज्ञानादपि मुक्त्यनापत्तेः, मायोपादानकत्वेऽप्यात्मसाक्षात्कारस्य

"तरति शोकमात्मवित्" इति प्रमाणवशात् साक्षात्कारदशायामज्ञाननिवर्तकत्वा-विरोधात्, तत्रात्माज्ञानस्योपाध्यविषयकत्वेऽप्युपहितविषयकत्वेन शुद्धब्रह्मविषयाज्ञान-निर्वतकत्वाविरोधात् उपादाननाशस्योपादेयनाशप्रयोजकत्वेन तज्ज्ञानस्यापि ततो नाशेन तेनाद्वैताविरोधाच्च न कोऽपि दोषः।

### आनन्दरूपतया साक्षात्क्रियमाण आत्मा पुरुषार्थः, तस्य संसारिणो विशेषश्च

स चात्मानन्दरूपः साक्षात्क्रियमाणत्वेन पुरुषार्थः, साक्षिणस्तु तथाऽऽत्मा भासते; तया साध्यत्वादानन्दात्मतयाऽऽत्मनः; इति संसारिणो विशेषो मुक्तात्मनः।

### चिन्मात्रत्वेऽपि मुक्तात्मनः 'अहं मुक्तः स्याम्' इतीच्छोपपत्तिर्मुक्तिसमयेऽहङ्कारविच्छेदमात्रेण

तत्र यद्यपि 'अहं सुखी स्याम्' इतिवत् 'अहं मुक्तः स्याम्' इतीच्छानुपपत्तिः; संसारिणः कायिकसुखानुभवकाल इवाहमर्थस्याद्वैतमतेऽननुवृत्तेः, चिन्मात्रं हि तदाऽऽत्मा प्रकाशते नाहमिति, तथापि मुक्ततायाः बन्धविच्छेदरूपत्वेन शृङ्खलादिबद्धस्य शृङ्खलादिविच्छेदमात्रेणैवाहमर्थस्याहङ्काराख्यबन्धबद्धस्याहङ्कारविच्छेदमात्रेण चिन्मात्रानुवृत्तेर्मुक्तावविरोधात्, स्वप्रकाशचिदात्मन्यानन्दरूपताया एव मुक्तात्मरूपत्वाच्च न चिन्मात्रमुक्तात्मताविरोधः।

### जीवन्मुक्तस्वरूपनिष्कर्षः, द्वैतमिथ्यात्वनिश्चयेऽपि भरतादिवद् द्वैतेन तस्य व्यवहारादि च

इदञ्च मुक्तात्मरूपत्वमसंप्रज्ञातसमाध्यवस्थायां स्थितप्रज्ञस्य गुणातीतस्य निरतिशयस्येत्यनुभवसिद्धम्, तत उत्थितावस्थायां साधकावस्थायां वा नानुभवसिद्धम्। जीवन्मुक्तश्च तत्त्वज्ञानेन निवृत्ताविद्योऽनुवृत्तदेहादिप्रतिभासः, निवृत्तसर्पभ्रमस्य संस्कारवशाद् भयकम्पाद्यनुवृत्तिवद् दण्डसंयोगनाशेऽपि च भ्रमणानुवृत्तिवदविद्या-संस्कारानुवृत्त्या मिथ्यात्वनिश्चये भरतादिवत् सुखिवत्, दुःखिवच्च जीवद् व्यवहरन् आप्रारब्धभोगसमाप्ति विनैव यत्नं श्वासनिश्वासादिवदभ्यस्मानतत्त्व-ज्ञानाद् भोगसंभोगसमाप्तौ विदेहकैवल्याख्यां परममुक्तिं प्राप्नोति। 'भोगेनत्वितरे क्षपयित्वा ततः सम्पद्यते" इति सूत्रं तु प्रारब्धकर्मणां विदेहमुक्तिप्रतिबन्धकत्व-मात्रं सूत्रयति, तेन च प्रतिबन्धकाभावविधया भोगाभावः परममुक्तौ कारण-मित्यवगम्यते। अत एव बिन्दुटीकायां ब्रह्मानन्दः—"अप्रामाण्यज्ञानानास्कन्दित-पटुतमसंस्कारसहित-भुज्यमानादृष्टाभावसहितमेव तत्त्वज्ञानं सर्वात्मनाऽज्ञाननिवर्तकम्" इति वदति। तथा चाविद्यालेशानुवृत्त्याऽऽदेहाद्यनुवृत्ति शरीरेऽवस्थित-ऽप्यशरीरमेवाऽऽत्मानं जीवन्मुक्तो मन्यते,—"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः" इति न्यायेन, इति सत्यऽपि बन्धाभासे बद्ध इवामुक्तवत् पश्यन्निव शृण्व-

न्निव जिघ्रन्निव क्वचिदपि सुख-दुःखादिविषयासंसक्तो नित्यसंन्तुष्टो न शरीरादि-दुःखेन दुःख्यति, न तत्सुखेन वा सुख्यतीति प्रमाणतोऽवगम्यते।

### आप्रारब्धसमाप्तिशक्तिविशेषमात्रानुवृत्त्या जीवन्मुक्तिः

तस्याविद्यायां निवृत्तायामपि तस्याः शक्तिविशेषमात्रम्, विक्षेपशक्तिमात्रं वाऽनुवर्तते, प्रारब्धकर्मवशादिति तु तत्त्वम्, इति आप्रारब्धभोगमनुवर्तमानेन तत्त्वज्ञानेन पूर्वजातीयेन तस्याः सर्वशक्तिनाशात् जीवन्मुक्तिः। तथा च—"तस्याभिध्यानात् ···· भूयश्चान्ते विश्वमायानिवृत्तिः", 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पद्यते" इत्यादिश्रुति-स्मृत्यादयस्तत्र प्रमाणम्। इति जीवन्मुक्तिव्यवस्था।

### मुक्तौ न सुखतारतम्यम्

तत्र जीवन्मुक्तेषु—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥"

इत्यादिलक्षणयुक्तेष्वपि यदि सुखे न तारतम्यव्यवस्था, तदा परममुक्तेषु कैव कथा तत्तारतम्यस्य ?

### मुक्तेर्न भक्तिसाध्यत्वम्, किन्तु ज्ञानसाध्यत्वमेव, इति भोगक्षयमात्रेण परममुक्तिः

तत्रापरोक्षज्ञानिनोऽपि जीवन्मुक्तस्य परमानन्दहेतुभक्त्यभावे तत्साध्यस्य मोक्षकरणस्येश्वरप्रसादस्याभावेन प्रारब्धकर्मणा संसारानुवृत्तिर्बद्धस्येव व्युत्थितस्य, समाध्यवस्थायां तु तस्याणिमाण्डव्यादीनामिव ? तत्र व्युत्थितानां परदृष्टचा तदनुवृत्तावपि तत्र मिथ्यात्वनिश्चयेन तस्याबन्धकत्वात् "तस्य तावदेव चिरम्" इति तस्य प्रारब्धकर्मक्षयापेक्षायामपीश्वरप्रसादस्य परममुक्तावनपेक्षणम्। "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेरपि भक्तेः साक्षात्कारोपयोग एव स्वारस्यावगमे-नापरोक्षज्ञानिनो मुक्त्यर्थं प्रारब्धक्षयार्थं वा भक्तेरनपेक्षणाद् भोगक्षयमात्रेण परममुक्त्युपपत्तेः।

### मुक्तौ जीवब्रह्मादिभेदेषु मुक्तानां परस्परमीश्वरेण च तारतम्य-निरासस्तत्तत्प्रमाणपरीक्षणपूर्वकम्

यदा तु जीवन्मुक्तावपि मुक्तौ न तारतम्यम्, तदा कैव कथा निरतिशयानन्दस्वरूपब्रह्मभावे तत्तारतम्यस्य ? तदा हि मुक्तस्य न ब्रह्मणा भेदः; उभयोरपि विभुत्वेनैक्यात्, "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्यादावपि तस्य भेदनिषेधात् तत्प्रयुक्ततारतम्यस्याप्यभावात्, परममुक्तौ न जीवानाम्, न वा जीवेश्वरयोर्भेदः। तत्र तया परिच्छिन्नोपाध्योस्तत्त्वज्ञानेन तन्नाशाद् घटाकाश-

नामिव, घटाकाशमहाकाशयोश्चैवोपाधिनाशेन भेदाभावात्, परममुक्तौ तु जीवेश्वरयोस्तयोरपि प्रतिबिम्बपक्षे ईश्वरस्येश्वरत्वमपि नास्ति, किन्तूभयोरपि प्रतिबिम्बत्वमिति नानेकेश्वरभावापत्तिः। तयोर्बिम्बप्रतिबिम्बभावे तु जीवोपाधिमात्रनाशेन मुक्तस्यैवेश्वरभावेन जीवत्वापनयेन च नानेकेश्वरभावापत्तिः। "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" इत्यधिकरणं तूपासकानां सविशेषब्रह्मभावमेव सूत्रयति; न तु तत्त्वज्ञानिनाम्। न च स ईश्वरोऽपि; जगत्कारणत्वस्येश्वरधर्मत्वेनोपाधिधर्मत्वाभावात्; अन्यथा तत्क्रतुन्यायेन तस्याप्युपासकेन प्राप्त्या जगद्व्यापारवर्जमिति निर्देशानुपपत्तेः।

"मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥"

इत्यादिवचनानामाधिकारिकजीवपरत्वेन मुक्तपरत्वाभावेन मुक्ततारतम्ये तेषामप्रमाणत्वात्। 'वृद्धिह्रासभाक्त्वम्" इति सूत्रं तु जीवानामौपाधिकभेदेन भेदमात्रपरत्वेन मुक्तौ विशेषाप्रतिपादनपरं न मुक्ततारतम्ये प्रमाणम्। "भोगमात्रसाम्यलिङ्गाच्च" इति सूत्रं तु गौणमुक्तानामेव भोगतारतम्यं बोधयति, न परमुक्तानन्दतारतम्ये प्रमाणम्। अत एव "ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्" इति सूत्रेण मुक्तौ तारतम्यनिषेध उपपाद्यते।

## चरमवृत्त्युपक्षिप्तात्मनो मुक्तित्वम्

तदयं निष्कर्षः—चरमवृत्त्युपलक्षितात्मैवाज्ञाननिवृत्तिः। उपलक्षणसाध्यतयैव मुक्तेरपि साध्यता। पाके निवृत्तेऽपि पाचकानिवृत्तिवद् मुक्तेरपि न निवृत्तिः। एतदभिप्रायमेव "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति वचनम्। एतेन—अविद्याविरोधिवृत्तिरविद्यानिवृत्तिरिति मतमपि—व्याख्यातम्। वृत्तिध्वंसोत्पत्तिपर्यन्तं तद्रूपत्वम्, चरमवृत्तिध्वंसस्तु अधिकरणस्वरूपमेवेति नानुपपत्तिः। सोपाधिकभ्रमे उपाधिविरहकालीनस्यैव ज्ञात्रधिष्ठानस्याज्ञाननिवृत्तिरूपत्वान्नेयं प्रक्रियाऽन्यत्र युक्ता। 'नेति नेति' वीप्सास्वारस्येनात्मातिरिक्तसर्वमिथ्यात्वावगमात्, निवृत्तेरपि निवृत्त्यनुपपत्तिरेव तस्याधिष्ठानानतिरेके प्रमाणम्। वृत्त्युपलक्षितस्यात्मनो जीवन्मुक्तावपि सत्त्वेऽपि मुक्तिमात्रापादनमिष्टमेव।

## नित्यप्राप्तात्मरूपत्वेऽपि मुक्तेस्तत्प्रतिबन्धकनिवृत्तिसाध्यत्वमात्रेण साध्यत्वोपचारः, अविद्यानिवृत्तिश्च वृत्त्युपारूढचैतन्यात्माऽऽत्मसाक्षात्कारेणाधिष्ठानसाक्षात्कारेणेत्यादिनिरूपणम्

चरमसाक्षात्कारोपलक्षितत्वरूपपरममुक्त्यापादनं नावसरमाप्नोति। प्राप्तप्राप्तिरूपतया फलस्यानन्दप्रकाशस्य स्वरूपतोऽसाध्यत्वेऽपि तत्तिरोधायकाज्ञान-

निवृत्तेः साध्यत्वमात्रेण कण्ठगतचामीकरादाविव साध्यत्वोपपत्त्या वेदान्तश्रवण-साध्यत्व-पुमर्थत्वयोरपि नानुपपत्तिः। अविद्यानिवर्तकं च न स्वप्रकाशब्रह्मचैतन्य-मात्रम्; तस्य तत्साधकत्वात्, किन्तु वृत्त्युपारूढं चैतन्यम्। चैतन्यप्रतिफलनधारिणी वृत्तिरेव तन्निर्वर्तिका। अभावस्य भावजनकत्ववत् प्रीतिभासिकस्य व्यवहारिक-सुखजनकत्ववच्चासत्याया अपि वृत्तेः सत्योत्पादकत्वे न विरुद्धम्।

एतेन—इच्छानिवर्त्यद्वेषवद् ज्ञानसत्यतापादनमपि—निरस्तम्; अधिष्ठान-तत्त्वसाक्षात्कारणत्वस्यात्राङ्गीकारेण रूप्यवत्सत्यत्वानापत्तेः। अन्यत्रादृष्टमपि स्व-स्यैव स्वनिवर्तकत्वं प्रमाणवलादङ्गीक्रियते। नहि केवलं वृत्तिः, केवलं वा चैतन्यं निवर्तकम्, इति वृत्तिफलितचैतन्यस्यैव निवर्तत्वनिबन्धनस्यैव निवर्तकत्वे न कापि शङ्का। उपहितविषयमपि निवर्तकज्ञानमुपाध्यविषयत्वान्न भ्रमरूपमिति तन्तुनाशस्य पटनाशप्रयोजकत्वदर्शनेन स्वोपादानाविद्यानाशस्यैव वृत्तिनाशप्रयोजकत्वेन न तया सद्वितीयत्वापत्तिः। तत्र च सुखात्मतैव पुरुषार्थः। तत्र पुमर्थता न परकीयत्वप्रयुक्ता, स्वकीयत्वप्रयुक्ता वा, किन्तु साक्षात्क्रियमाणताप्रयुक्ता। तत्र च हेयतयाऽज्ञातत्वं विशेषणं दीयते, इति नास्मदादिसुखमीश्वरस्यापि पुमर्थो भवति। मुक्तसुखसाक्षा-त्कारो न संसारिण इति न संसारिणोऽपि मुक्तसुखपुमर्थताप्रसङ्गः। एतेन—"प्रत्यक्षप्रकाशत्वेन सुखं पुमर्थः" इति वचनमपि व्याख्यातम्।

## जीवन्मुक्तावविद्यासंस्कारानुवृत्तौ न दोषः

तच्च सुखमहमर्थगतमुक्तिकालान्वयिचिदंशस्यैव। तच्च दुःखाभावातिरेक्य-प्यात्मानतिरेकीति नानुपपत्तिः। सुख-प्रकाशयोस्तत्त्वतोऽभेदेऽपि काल्पनिकभेद-सत्त्वान्न सुखप्रकाश इति व्यपदेशानुपपत्तिः। तच्च सुखं जीवन्मुक्तस्यानुभवसिद्धम्। जीवन्मुक्तो नाम निवृत्ताविद्योऽप्यनुवृत्ताविद्यासंस्काराधीनदेहादिप्रतिभासो निःसा-रितपुष्पायां संपुटिकायां पुष्पवासनावदविद्याया अपि वासनासंस्कारापरपर्यायः। संभवत्येव विमतो नाशः संस्कारव्याप्तः, संस्कारनाशान्यत्वे सति नाशत्वादित्यनु-मानमप्यत्र प्रमाणम्। विनश्यदवस्थस्य समवायिकारणं विनापि स्थितिदर्शनादुप-पादकसत्त्वे बहुक्षणसंबन्धकल्पनाया अप्युपपत्तेर्न संस्कारादिस्थित्यनुपपत्त्याऽज्ञानानु-वृत्त्यापातः संभवति। पूर्वज्ञानं प्रतिबन्धकाभावासहकृतं न संस्कारादिनिवर्तकम्, उत्तरं तु तत्सहकृतं तन्निवर्तकमिति न विरोधः।

## अविद्यालेशानुवृत्त्या देहाद्यनुवृत्तिर्जीवन्मुक्तौ

एतेन—अविद्यालेशानुवृत्त्या देहाद्यनुवृत्तिपक्षोऽपि—व्याख्यातः। तत्र च लेशो नाम आकारः। आकारश्च अपरोक्षप्रतिभासयोग्यार्थभासजनकाऽऽविद्यक-शक्तिविशेषः। तदनुवृत्त्या च तद्वदविद्याप्यनुवर्तत एव। शक्तिनाशमात्रात्तु मुक्त इति व्यवहारोऽविद्यादशायामप्युपपद्यत एव। विलीना हि पूर्वतनेन ज्ञानेनार्थक्रिया-

समर्थत्वसंपादिका शक्तिरिति सर्वमनवद्यम् । लेशस्थितौ कर्मानुवृत्तिः, कर्मानुवृत्तौ च लेशस्थितिरित्यन्योन्याश्रयस्तु ज्ञप्तौ स्थितौ वा न विरोधी । एवं च यागे नष्टेऽपि तत्सूक्ष्मावस्थारूपमपूर्वं यथाऽङ्गीक्रियते, एवमज्ञाने गतेऽपि तल्लेशो देहादिप्रतिभास-हेतुरङ्गीक्रियत इति जीवन्मुक्तिरुपपन्नैव ।

### कैवल्यसम्पत्त्यर्थं भोगक्षयमात्रं कारणम्, नेश्वरप्रसादोऽपि

तस्य च जीवन्मुक्तस्य कैवल्यसंपत्त्यर्थं प्रारब्धकर्मक्षयमात्रमपेक्षितम्; "तस्य तावदेव चिरम्" इति श्रुतेः, न तु ईश्वरप्रसादोऽपेक्ष्यते; स्मृति-पुराणदीनां स्तुति-परत्वात् । भोगादेव प्रारब्धकर्मक्षयोपपत्त्या नेश्वरप्रसादस्य तत्रापेक्षा ।

### मुक्तावुच्च-नीचभावः, तत्र भेदाभावात्

एतेन—मुक्तावुच्चनीचभावोऽपि—परास्तः; मुक्तौ भेदाभावेन तारतम्या-सिद्धेः । यथा च भेदे न प्रमाणम्, तथा पूर्वमेव निरूपितम् । किञ्च तारतम्याभि-धानम् "ऐहिकमप्रस्तुतप्रतिबन्धे" इति सूत्रेण परमुक्तौ तारतम्यशङ्कया तत्समा-धानान्न परममुक्तौ घटते । अपरमुक्तौ तु इष्टमेव ।

### मुक्तजीवानां भोगतारतम्येऽनुमानप्रमाणनिरासः, तत्र तत्र तारतम्यश्रावणं त्वपरमुक्तिविषयम्, कर्मादिसाध्यसुखपरं वा

एतेन—मुक्तजीवभोगः, ईश्वरभोगान्निकृष्टः, इत्याद्यनुमानमपि—पराहतम्; आद्ये मुक्तस्य ब्रह्मरूपतया जीवत्वाभावेनाश्रयासिद्धेः, ईश्वरत्वाभावेन साध्याप्रसिद्धेः, स्वरूपसिद्धेश्च । द्वितीये जीवेश्वरविभागकाले चेत्, सिद्धसाधनम् । कालान्तरे चेत्, पूर्वदोषानतिवृत्तिः । 'सैषानन्दस्य' इति ब्रह्मानन्दपर्यन्तमेव तारतम्यमभिदधाति । अनन्तरं तु "यतो वाचो निवर्तन्ते" इत्यवाङ्मनसगोचरत्वं निरतिशयत्वं च श्राव-यति । निवर्तन्ते' इति मुक्तौ आनन्दापरिच्छेदमात्रं बोधयति इत्युक्तश्रुतिविरोधा-दनुमानत्रयमपि बाधितमेव । साधनतारतम्यप्रयुक्तं हि तारतम्यं वैषयिके सुख एव संभवति, न स्वरूपानन्दे । सालोक्य-सायुज्ययोस्तु परापरमुक्तिरूपसत्त्वादपकर्षो विद्यत एव । सायुज्यं चैक्यमेव, न संश्लेषमात्रम्; व्यापकेनेश्वरेण संश्लेषस्य नित्यसिद्धत्वात् । यथा ब्रह्मलोकान्तावाप्तिरुत्क्रमणगमनादिसाध्या, नैवं मुक्तिः; "अत्र ब्रह्म समश्नुते" इति तस्य अपारलौकिकत्वावगमात्, येन पारलौकिकसंश्लेषः सायुज्यं स्यात् । "एतस्यैवान्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतिसिद्धसर्वानन्दस्य स्वरूपानन्देऽन्तर्भाव एव "श्रोत्रियस्य चाकामहतस्य" इत्य-सकृत्प्रयोगतात्पर्यविषयः, इति न तदनुपपत्तिरपि मुक्तौ सुखतारतम्ये प्रमाणम् । केवलकर्मसाध्यत्वे कर्मसमुच्चितज्ञानसाध्यत्वपक्षे च मोक्षानित्यत्वापत्त्या ज्ञानसाध्य-त्वपक्षस्यैव युक्तत्वात्तस्यैकरूपत्वेन साधनतारतम्यनिबन्धनतारतम्यस्यापि

नावकाशः । "एतेन साधनस्योत्तमत्वेन साध्यमुत्तममाप्नुयुः" इति वचनमपि व्याख्यातम्; तस्यापरमुक्तिविषयत्वात् ।

तस्मात् स्वरूपानन्दस्य स्वप्रकाशात्मरूपिणः ।
प्राप्तिर्मुक्तिर्न तत्रास्ति तारतम्यं कथञ्चन ॥

इति सिद्धमिति ।

## उपसंहारः

तदेवं मुक्तस्वरूपमप्यद्वैतसिद्धावभिधेयप्रधानायाम्, अभिधानप्रधानायां वाऽनुपहितासंसार्यात्मितत्त्वस्वरूपमेव विवक्ष्यते । अत एव ब्रह्ममीमांसायां तुरीयपरिच्छेदे 'आत्मा प्रकरणात्' इति मुक्तात्मस्वरूपपरिच्छेदे आत्मपदमेव प्रयुज्यते, तत्र प्रमाणं च "स्वयं ज्योतिरुपसंपद्य स्वेन रूपेणाविर्भवति", "स एवोत्तमः पुरुषः" इति समाद्रियते । तथा च गीता—

"क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति शम् ।

# वेदान्तदर्शनबिन्दुः

## प्रथमं प्रवचनम्

## उपनिषत्स्वद्वैतब्रह्मवादः[1]

श्री एल्० सुब्रह्मण्यशास्त्री
प्राचार्यः, भारतीयविद्याभवनम्, बम्बई—७.

षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि ।
शाश्वताय नमस्कुर्मो वेदाय च भवाय च ।।

निखिलशास्त्रपारदृश्वान उपकुलपतिमहोदयाः, पण्डितवरेण्याश्च ! तत्रादौ सर्वतन्त्रस्वतन्त्राः प्राच्यप्रतीच्योभयविद्यानदीष्णाः संस्कृते, आङ्गलभाषायां च शास्त्रग्रन्थनिर्माणेन परिकर्मितवाङ्मया विश्वविख्यातयशोराशयः श्रीमन्तो महामहोपाध्यायगङ्गानाथझामहोदया इदानीमस्मत्स्मृतिपथमवतरन्ति; प्रातःस्मरणीयानां येषां नाम्नेयं व्याख्यानमाला विश्वविद्यालयव्यवस्थापकैरायुज्यत । अतस्तान् वाङ्मनःकायैरादौ प्रणमामि । तत ऐषमस्तनानामद्वैतवेदान्तमधिकृत्य कर्तव्यायां व्याख्यानमालायां ममावकाशं दत्तवत्या विश्वविद्यालयनिर्वाहकसमितेः, श्रीमतामुपकुलपतिमहोदयानां च कृतज्ञतामाविष्कृत्य प्रस्तुतकार्येऽवतरामि ।

अस्यां व्याख्यानमालायां क्रमेणोपनिषत्स्वद्वैतब्रह्मवादः, ब्रह्मसूत्रेष्वद्वैतब्रह्मवादः, मीमांसान्यायानां वेदान्तार्थनिर्णयाय महोपकारकत्वमित्येतान् विषयानधिकृत्य यथामति व्याख्यास्यामि ।

तत्र प्रथममुपनिषत्स्वद्वैतवादः प्रारभ्यते । ये विरक्ता अद्वैतविद्यामुपगम्य निश्चयेन शीलयन्ति, तेषां समूलस्य संसारबन्धस्य विशरणात् अत्यन्तावसादनाद् वा, तेषां ब्रह्मगमयितृत्वाद् वा; ब्रह्मविद्या उपनिषत्' इति सङ्कीर्त्यते। उपनिषद्ग्रन्थस्तु तादर्थ्याद् गौण्या वृत्त्या 'उपनिषत्' इत्यभिधीयते। तत्र च

---

१. वाराणसेयसंस्कृतविश्वविद्यालयस्यैकादश (११) । दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां मुम्बईनगरस्थ—भारतीयविद्याभवनविद्यालयस्य प्राचार्येण पण्डित एस्-सुब्रह्मण्यशास्त्रिमहोदयेन प्रदत्तमिदं विशिष्टव्याख्यानम् —
सम्पादकः

मन्त्रब्राह्मणारण्यकसमुदायात्मकत्वाद् वेदस्यैकैकस्या वेदशाखाया एका उपनिषद् आरण्यकान्तर्गता नियमेन भवति; क्वचित्तु काण्वमाध्यन्दिनशाखयोर्मन्त्रकाण्डेऽप्येका उपनिषद् आधिक्येन वर्तत इति विशेषः। ततश्च—

एकविंशत्यध्वयुक्तम् ऋग्वेदं कवयो विदुः।
सहस्राध्वा सामवेदो यजुरेकशताध्वकम्।
नवाध्वाऽऽथर्वणः प्राहुः··· ···॥

इति स्मृत्युक्तरीत्यैकत्रिंशदुत्तरशताधिकसहस्रशाखानां तावत्सङ्ख्याका उपनिषद आसन्निति सम्भाव्यते; परन्त्वध्येत्रभावाद् नष्टाबह्वच इदानीमदर्शनं गताः, अष्टोत्तरशतोपनिषदस्तु प्रामाणिकाः समुपलभ्यन्ते। तत्रापि ईशादिदशोपनिषदः श्वेताश्वतरकौषीतकादयश्च सर्वैर्भाष्यकारैः परिगृहीता इत्यतस्ता एवाधिकृत्य विचारः प्रस्तूयते।

**वेदव्याख्यानेऽनुसर्तव्या नियमाः**

शास्त्रतात्पर्यविद्भिः सहस्रशाखादर्शिभिराचार्यशबरस्वामिभिर्वेदव्याख्याने केचन नियमा उपदिष्टाः, ते चाविरोधादुपनिषद्व्याख्यातृभिरप्यनुसरणीयाः; अन्यथा तत्त्वाव्यवस्थापत्तेः। तथा हि "य एव लौकिकाः शब्दास्त एव वैदिकाः, त एव च तेषामर्था इति न विधौ परः शब्दार्थः" इति च न्यायविदः। अज्ञातज्ञापनपरे वाक्ये न लक्षणादिरिति तदर्थः। यत्र च सर्वथाऽनुपपत्तिः तत्रैव तत्सिद्ध्यधिकरणोक्तरीत्या गौणीपरिग्रहः 'यजमानः प्रस्तरः' इत्यादौ। यद्यपि निरूढलक्षणा साम्प्रतिकी लक्षणा च परिगृहीते भट्टपादैः,

तथापि—

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैवाप्रयोगतः॥

इत्युक्तरीत्या अप्रयुक्तलक्षणा न स्वीकार्या। एतेन तर्कमाश्रित्य तत्त्वान्वेषणे क्रियमाणे तर्काप्रतिष्ठानात् तत्त्वनिर्णयो दुर्लभ इति भीत्या तर्कं परित्यज्य वेदमेव शरणीकुर्वतामप्यध्याहारादिभिर्वेदव्याख्याने क्रियमाणे तत्त्वनिर्णयदौर्लभ्यतादवस्थ्यमिति शङ्का परिहृता भवति, वेदव्याख्यानस्य मीमांसकरीत्यैव कर्तव्यतानियमात्। तत्र च तत्त्वव्यवस्थानोपपत्तेः।

उपनिषदो भिन्नभिन्नकर्तृकाः, भिन्नभिन्नप्रस्थाना इति पाश्चात्यानां मतं तु न भारतीयानां कर्णे पतति, वेदानां सर्वेषामपौरुषेयत्वस्यान्यत्र साधितत्वात्, "सर्वे वेदा यत्पदमामनन्ति" इति सर्वोपनिषदामेकवाक्यत्वस्य श्रुत्यैव प्रतिपादनाच्च।

**अद्वैतपदार्थः**

'अद्वैतम्' इत्यस्य द्विधा इतं द्वीतम्, तदेव द्वैतम्; न विद्यते द्वैतं यत्रेति व्युत्पत्त्या द्वितीयाभावोपलक्षितं ब्रह्मेत्यर्थः। द्वितीयाभावविशिष्टं ब्रह्मेत्यर्थे विशिष्टशुद्धयोर्भेदाभेदाद् द्वैतसद्भावावसरः स्यात्, अत उपलक्षितमित्युक्तम्। तत्र च द्वितीयस्य प्रत्यक्षादिसिद्धस्य नात्यन्तासत्त्वं युज्यत इति द्वैतस्य मिथ्यात्वमुच्यते। मिथ्यात्वं च सदसद्विलक्षणत्वम्, चेतनानां जीवानां ब्रह्मभिन्नत्वेऽद्वैतं न सिद्ध्येदित्यतो जीवब्रह्मैक्यं चार्थसिद्धमेव। ब्रह्मणः सगुणत्वे गुणगुणिनोर्भेदाभेदस्वीकारात् पुनर्द्वैतापत्तिरेव स्यात् अतो निर्गुणत्वमप्यद्वैतपदेन सिद्ध्यति। एवमनेकार्थानां सूचकमद्वैतपदम् "सलिल एको द्रष्टा अद्वैतो भवति", "अद्वैतं चतुर्थं मन्यन्ते स आत्मा" इत्यादिश्रुतौ प्रयुक्तं दृश्यते।

**अद्वैतश्रुतयः**

तत्राद्वैतबोधकाः काश्चन श्रुतयो विविच्यन्ते—

बृहदारण्यके तृतीयाध्याये 'स होवाचैतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादि श्रूयते। तत्र न विद्यते स्थूलं यस्मिन् तदस्थूलम्, न विद्यते अणुर्यस्मिन्नित्येवं व्युत्पत्त्या स्थूलसूक्ष्मादिनिखिलप्रपञ्चशून्यं ब्रह्मेत्यर्थः। न स्थूलमस्थूलमिति नञ्तत्पुरुषस्तु न युक्तः, ब्रह्मणः स्थूलभिन्नत्वे अणुत्वापत्तेः, 'अनणु' इत्यस्यासंगतेः। "सदेवसोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यपि श्रुतिर्ब्रह्मणि द्वैताभावे प्रमाणम्। अत्र एकमिति सजातीयाभावः प्रतीयते, 'घट एकोऽस्ति' इत्यत्र घटान्तराभावप्रतीतिवत्, अद्वितीयमिति न विद्यते द्वितीयं यस्येति विजातीयाभावः प्रतीयते। एवकारेण स्वगतभेदाभावः प्रतीयत इति सजातीयविजातीयस्वगतभेदरहितं ब्रह्मेत्यर्थः। यत्तु केचित् "चिदचिच्छरीरको विशिष्टः परमात्मा एक एव सजातीयविजातीयद्वितीयरहितः" इति व्याचक्रुः, तेषामपि स्वगतजीवजडभेदसत्त्वात् स्वगतभेदराहित्यं दुरुपपादम्।

**नेह नानाश्रुतिः**

"नेह नानास्ति किञ्चन" इति श्रुतिरपि प्रपञ्चमिथ्यात्वे प्रमाणम्। तत्र चेह प्रपञ्चवति ब्रह्मणि नाना द्वैतं किञ्चन नास्तीत्यर्थात् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कण्ठत एवोच्यते। यत्तु इह प्रपञ्चे लोकदृष्टप्रकारेण नानाभूतं स्वनिष्ठतया भिन्नं किञ्चिदपि नास्तीत्यर्थं वदन्ति, तत्रेदं चिन्तनीयम्— 'मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन' इत्यस्मिन् वाक्ये 'इदं' शब्दनिर्दिष्टब्रह्मण एव इह शब्देनात्र ग्राह्यतया तेन प्रपञ्चस्य ग्रहणायोगात्। इदंशब्दरहिते बृहदारण्यकवाक्येऽपि पूर्वत्र 'ते निचिक्युर्ब्रह्मपुराणमग्रयम्' इत्यस्मिन् पूर्ववाक्ये ब्रह्मण एव प्रकृतत्वात्। लोकदृष्टप्रकारेण' 'स्वनिष्ठतया' भिन्नमित्यध्याहारस्याशास्त्रीयत्वात्। एवं "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यत्र द्वैतदर्शनस्य मृत्यु-

प्रापकत्वम्, 'इव' शब्देन तस्य मिथ्यात्वं चोच्यते। स्वनिष्ठत्वदर्शनस्य मृत्युप्रापकत्वम्, मृत्युशब्दस्याज्ञानपरत्वं परैरुच्यमानं शब्दबहिर्भूतमेव।

**यत्र हि द्वैतमिव भवति**

"यत्र हि द्वैतमिव भवति" इत्यत्रापीवशब्देन प्रपञ्चमिथ्यात्वमेव दृढीक्रियते। अनुपदमेव यत्र त्वस्य सर्वमात्मैवाभूत्, 'तत्केन कं पश्येत्' इत्येकत्वदर्शनेन तदुपोद्बलनात्। यत्तु "तत् कृत्स्नजगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेन तत्प्रत्यनीकं नानात्वं निषिध्यते, न नानात्वमात्रम्" इत्युक्तम्; तत्र केवलस्य ब्रह्मणस्तन्मते निमित्तमात्रत्वात्—तद्रूपेणान्तर्यामित्वेन चैक्यायोगः अध्याहारश्च। तत्र "को मोहः कः शोक एकत्वमनुपश्यतः" इति मन्त्रोक्तमेकत्वं ह्यस्मिन् ब्राह्मणे सृष्ट्यादिवाक्यैर्दृढीक्रियते। यत्तु प्रत्यक्षानवगतानां बहूनां भावानां नानात्वं सृष्टिवाक्ये प्रतीयमानं कथं श्रुतिरेव निषेधेदिति, तत् सृष्टिवाक्यानां निषेधवाक्यावगतनिषेध्यसमर्पकत्वेन सार्थक्यात् प्रत्युक्तम्। सृष्टिवाक्याभावे ब्रह्मणि निषिद्धः प्रपञ्चोऽन्यत्र सन्नित्यभ्युपेयं स्यात्। न च सृष्टिवाक्यानां प्रकारान्तरेण प्रयोजनवत्वं प्रतिपादयितुं शक्यते; प्रत्यक्षेणानुमानेन शास्त्रेण वा तज्ज्ञानस्य प्रयोजनानवगमात्। सकलद्वैताभावप्रतिपादने तु परमपुरुषार्थः श्रूयते—"यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्", "विद्वान् नामरूपाद्धि मुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादौ।

**श्रुतेः प्रत्यक्षविरोधपरिहारः**

यत्तु प्रत्यक्षादिना प्रपञ्चसत्यत्वग्रहात् तद्विरुद्धं मिथ्यात्वं शास्त्रेण कथं बोधयितुं शक्यते? प्रत्यक्षस्य ज्येष्ठत्वेनोपजीव्यत्वेन च प्राबल्यादिति। तत्रेदं समाधानम्—प्रत्यक्षस्य 'घटः सन्' इत्याद्याकारस्य न कालत्रयाबाध्यं सत्त्वं विषयः, भूतभाविकालयोरिन्द्रियासम्बन्धात्। अपि तु प्रत्यक्षग्राह्यं सत्त्वं वर्तमानत्वं वा सत्ताजातिर्वेति वक्तव्यम्। तच्च मिथ्यात्वेन न विरुध्यते. प्रत्यक्षस्य ज्येष्ठत्वं बाध्यत्व एवानुकूलं प्राथमिकस्य रजतभ्रमस्य पाश्चात्त्येन शुक्तिज्ञानेन बाधात्। उपजीव्यत्वं तु प्रत्यक्षस्वरूपस्य वर्तत एव। तत्तु शास्त्रेण न बाध्यते, प्रत्यक्षगतं पारमार्थिकत्वं तु बाध्यते। तच्च नोपजीव्यम्, अपारमार्थिकैरपि रेखाक्षरादिभिः सत्यवर्णप्रतिपत्तिदर्शनात्। अपारमार्थिकस्यार्थक्रियाकारित्वं पत्रात्मकरूप्यकादिभिः सत्यरूप्यव्यवहारदर्शनाच्च।

केचित्तु "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्" इति स्मृतिमनुरुध्य प्रत्यक्षस्य श्रुत्या बाध्यत्वमेवोरीचक्रुः। तन्मते च मिथ्यात्वश्रुतिर्निरङ्कुशं सत्त्वग्राहि प्रत्यक्षं बाधत एव। न चैतस्मिन् मते "यजमानः प्रस्तरः" इत्यादौ मीमांसकोक्तं गौणत्वं विरुध्यते प्रत्यक्षावग्राह्यं यजमानप्रस्तरभेदमुपमृद्य तयोरभेदं श्रुतिर्वक्ती-

त्युपगमापत्तेरिति शङ्कनीयम् । यतस्तात्पर्यवती श्रुतिः प्रत्यक्षापेक्षया प्रबलेत्युपगम्यते । 'यजमानः प्रस्तरः' इत्यादिकं त्वर्थवादः । अतो न तस्य स्वशक्यार्थे तात्पर्यम्, अपि तु विधिस्तुतौ । अद्वैतश्रुतेस्तु षड्विधतात्पर्यलिङ्गोपपन्नाया अद्वैत एव तात्पर्यम् । अतस्तत्प्रत्यक्षापेक्षया प्रबलमेवेति प्रत्यक्षं बाधितुं शक्नोति । अथवा सर्वत्रापि प्रत्यक्षापेक्षया श्रुतिः प्रबलैव । परन्तु बाधितस्यापि प्रत्यक्षस्य स्वोचितविषयसमर्पणमावश्यकम्, निर्विषयप्रत्यक्षायोगात् । अत एवाद्वैतश्रुतिबाधितं प्रत्यक्षं तत्त्वावेदनात् प्रच्यावितं सदर्थक्रियासमर्थव्यावहारिकविषयसमर्पणेनोपपाद्यते । एवं च प्रस्तरे यजमानभेदग्राहिणोऽर्थक्रियासंवादिनः प्रत्यक्षस्य प्रातिभासिकविषयसमर्पणेनोपपादनायोगाद् "यजमानः प्रस्तरः" इति श्रुतिबाध्यत्वे सर्वथा निर्विषयत्वं स्यात् । अत उत्सर्गमपोद्य श्रुतिरेव गौण्या व्याख्यायते । न च प्रस्तरयजमानाभेदस्तात्त्विक इति वक्तुं शक्यम्, षड्विधतात्पर्योपेतसकलप्रपञ्चमिथ्यात्वश्रुतिविरोधादिति ।

### वाचारम्भणश्रुतिः

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति छान्दोग्यश्रुतिरपि मृत्कार्यमिथ्यात्वोपपादनमुखेन ब्रह्मकार्यजगन्मात्रस्य मिथ्यात्वं ब्रूते । तथाहि "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतम्" इति गुरुणा एकविज्ञानेन सर्वविज्ञानमुपक्षिप्तम् । "तत्कथमुपपद्यते" इति शिष्येण पृष्टे सति गुरुराह—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । अनेन वाक्येन ब्रह्मविज्ञानेन सर्वविज्ञानमुपपादनीयम्, ब्रह्म च सर्वस्य जगत उपादानकारणम्, "यतो वा इमानि भूतानि" इति पञ्चम्योपादानत्वश्रवणात्, उत्पत्तिलयाधारत्वस्य श्रुतिसिद्धस्यान्यथानुपपत्तेश्च, 'तदात्मानं स्वयमकुरुत' इति कार्यस्य ब्रह्मात्मत्वश्रवणाच्च ।

उपादानज्ञानेन वा कार्यविज्ञानं कथं स्यात् ? मृद्विज्ञानेन तत्कार्याणां घटशरावादीनां ज्ञानादर्शनादिति, यथा "सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति प्रसिद्धवत् श्रुतिः कथं ब्रूयादिति शङ्कायाम्—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतिः प्रवर्तते । वाचाया आरम्भणं वाचारम्भणं वागित्यर्थे 'वाचा' शब्दः प्रसिद्धः, यथा "वाचा दिशा निशा" इत्यादौ । आरम्भणम् आलम्बनमित्यर्थः । तर्हि वाक् तदालम्बनं च घटादि वस्त्वस्ति, कथं मृद्विज्ञानेन तज्ज्ञानमिति शङ्कायाम् 'नामधेयम्' इत्युक्तम् । नामैव नामधेयम्, घटः शराव इति नाममात्रम् न तु वस्तुसत्ताऽस्तीति द्योत्यते नामधेयपदेन । दृष्टं च नामपदस्याभासद्योतकत्वम् "यजन्ते नामयज्ञैस्ते" इति गीतासु । लोकेऽपि "पुत्राभासे पुत्रः" इति नामधेयमिति वदन्ति । घटस्सन्निति व्यवहारः तर्हि कथमुपपाद्य इत्यत आह—"मृत्तिकेत्येव सत्यम्" इति । 'इति' शब्दः प्रकारार्थः । मृत्तिकात्वेनैव रूपेण घटादिकं

सत्यम्, न तु घटत्वेनेत्यर्थः। अथवा 'इति'पदस्याद्यर्थत्वाद् मृत्तिकादिः सत्यं घटमपेक्ष्य मृत्सत्या, तदपेक्ष्य तत्कारणं जलं सत्यम्. तदपेक्ष्य तत्कारणं तेजः सत्यम्। इत्येवं मूलकारणं ब्रह्मैव सत्यमित्यर्थः। अत एव 'इति' पदं सार्थक्यम्, आवश्यकं च। मृदो ज्ञानेन घटज्ञानं कथं सम्पन्नमिति चेत्. मृदा विज्ञानेन घटस्तत्त्वतो विज्ञातो भवति, घटतत्त्वं ज्ञातं भवतीत्यर्थः। मृत्तिकेत्येव सत्यमित्युक्त्या हि कार्यस्यासत्यत्वमवगतम्, अत एवोपादानज्ञानेन कार्यस्य तत्त्वमेव ज्ञातं भवति, न स्वरूपम्; कार्यस्वरूपस्यासत्यत्वेनासत्यज्ञानस्य च शुक्तिरजतज्ञानवदज्ञानोपादेयतया अज्ञानत्वात्। अज्ञानवन्तं विपरीतज्ञानवन्तं वा अधिकृत्य लोके 'ज्ञानवान्' इत्यव्यवहारात्। अत एव "आत्मनो वा अरे विज्ञानेन सर्वं विज्ञातं भवति" इति बृहदारण्यकवाक्ये तृतीयाया अभेदोऽर्थं आत्मविज्ञानाभिन्नं सर्वस्य वस्तुनः स्वरूपतत्त्वविज्ञानमित्यर्थः।

"ननु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्" इति बृहदारण्यकश्रुतिरपि ब्रह्मव्यतिरेकेण प्रपञ्चाभावबोधकतया प्रपञ्चमिथ्यात्वे प्रमाणम्। दृष्टान्तभूतां सुषुप्त्यवस्थां दार्ष्टान्तिकभूतमोक्षावस्थां चाधिकृत्य प्रवृत्तमिदं वाक्यं प्रपञ्चस्य ब्रह्मव्यतिरेकेणाभावं बोधयति। एवं "विद्वान् नामरूपाद्विमुक्तः" 'तरति शोकमात्मवित्" इत्यादौ ज्ञानप्रयोज्यत्वं द्वैतनिवृत्तौ प्रतीयते. उद्देश्यविधेयभावस्थले चोद्देश्यतावच्छेदकप्रयोज्यत्वं विधेये भासत इत्युत्सर्गः। ततश्च ज्ञानप्रयोज्यनिवृत्तिप्रतियोगित्वेन प्रपञ्चमिथ्यात्वमर्थसिद्धम्, सत्यस्य ज्ञानादनिवृत्तेः।

**न तदश्नाति किञ्चन**

"न तदश्नाति किञ्चन, न तदश्नाति कश्चन" इति श्रुतिरपि तत्र प्रमाणम्; तद् ब्रह्म न किञ्चिदपि व्याप्नोति। एतावता ब्रह्मसम्बन्धो जगति निषिध्यते। तद् ब्रह्म न कश्चन व्याप्नोति। एतावता जगत्सम्बन्धो ब्रह्मणि निषिध्यते। ब्रह्मणोऽसङ्गस्य परमार्थसत्यत्वात्, प्रपञ्चस्य मायाकल्पितत्वेनानृतत्वात्, सत्यानृतयोर्वास्तवसंबन्धाभावात्। तदुक्तं वार्तिककारैः—

निस्सङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा।
आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते॥ इति।

ब्रह्मसृष्टस्य जगत उपादानोपादेयसंबन्धमपि निराकुर्वती इयं श्रुतिः प्रपञ्चमिथ्यात्वं सूचयति।

एवं बह्वीभिः श्रुतिभिर्द्वैताभावे सिद्धेऽपि न ब्रह्माद्वैतसिद्धिः; जीवानां सद्भावात्। अत इदानीं जीवब्रह्मणोरैक्यमुपनिषद्वाक्यैः प्रतिपाद्यते।

**जीवब्रह्मैक्यविचारः**

उपनिषत्सु जीवब्रह्मणोरैक्यमेव तात्पर्येण बोध्यते। तथाहि "तत्सत्यं स आत्मा तत्त्वमसि" इति छान्दोग्यश्रुतिर्जीवब्रह्मैक्यबोधिनी प्रसिद्धा। अस्या जीवब्रह्मैक्यपरत्वं षड्विधतात्पर्यलिङ्गोपबृंहितम्।

विचार्यवाक्यस्याद्यन्तभागयोरेकार्थपर्यवसानम्—उपक्रमोपसंहारौ, अभ्यासोऽनन्यपरपुनः श्रवणम्, अर्थवादः स्तुतिनिन्दान्यतरबोधकं वाक्यम्। एतत्त्रयं शब्दघटितत्वात् शब्दनिष्ठम्। तत्राद्यस्यैकार्थतात्पर्यनिर्णायकत्वेन लिङ्गत्वम्, तात्पर्यविषयत्वेन सन्दिग्धानां बहूनां मध्ये यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानम्, तत्रैव तात्पर्यनिर्णयात्। अत एवोपांशुयाजाधिकरणे उपक्रमोपसंहारैकरूप्यादेव 'उपांशुयाजमन्तरा यजति' इत्यत्र लेट्त्वकल्पनेन विधिरङ्गीकृतः। न तु 'विष्णुरुपांशु यष्टव्यः" इत्यादौ तव्यप्रत्ययश्रवणे देवताश्रवणे च सत्यपि। "जामि वा एतद्यज्ञस्य यदन्वञ्चौ पुरोडाशौ" इत्युपक्रमे जामितादोषं संकीर्त्य 'अजामित्वाय' इत्युपसंहारे तत्परिहारकीर्तनेनैकवाक्यत्वावगमात्।

**षड्विधतात्पर्यलिङ्गानि**

प्रकृते च "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यद्वितीयं ब्रह्म श्रूयते। तत्रैवान्ते "ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि" इत्यद्वितीयात्मनोपसंहारः। अभ्यासस्त्वनन्यपरम्, पुनः श्रवणम् ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेत्यादेर्नवकृत्वोऽभ्यासात्। यद्यपि 'समिधो यजति' इत्यादौ विधिपरपुनःश्रवणमभ्यासः पूर्वतन्त्रे कर्मभेदक उक्तः, तथाप्यत्र सिद्धार्थविषयकोऽभ्यास एकार्थज्ञापकः, अन्यथा पुनःश्रवणवैयर्थ्यात्। तस्मादादरज्ञापनद्वारा तस्य तात्पर्यज्ञापकत्वम्, तदुक्तं भामत्याम् "अभ्यासे हि भूयस्त्वमर्थस्य भवति यथा अहो दर्शनीया अहो दर्शनीया" इत्यभ्यासबोध्य आदरोऽर्थान्तरादुत्कृष्टत्वरूपः। अर्थवादेन तु बलवदनिष्टाजनकत्वरूपं प्राशस्त्यं बोध्यते। प्रकृते चार्थवादः "येनाश्रुतं श्रुतं भवति, अनेन जीवेनात्मनाऽनुप्रविश्य" इत्यादिरर्थवादः। अपूर्वत्वं तु ब्रह्मात्मैक्यस्य वर्तत एव, प्रामाणान्तरानधिगतत्वात्। उपपत्तिरुक्तधीविषयस्यैक्यस्य मृदादिदृष्टान्तैः, तप्तपरशुग्रहणदृष्टान्तेन स्वपितिनामनिर्वचनेन च समर्थनम् तेन वाक्यार्थस्याबाधितत्वसिद्धिः। अपूर्वत्वम्, फलम्, उपपत्तिश्चेत्येतत् त्रयमुक्तार्थज्ञानस्य प्रमात्वनिर्वाहकम्। तत्रानधिगतत्वांशोऽपूर्वत्वेन, अबाधितत्वांश उपपत्त्या। अनधिगताबाधितफलवदर्थविषयकज्ञानं वेदजन्यं यथार्थं भवति। तदुक्तं जैमिनिना—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणम्' इति।

अत्र वेदस्योपदेशरूपत्वाद् निष्प्रयोजने धर्मे ब्रह्मणि वा तात्पर्याभावात् फलवत्त्वमभीष्टम्, अन्यथा अध्ययनविधिविषयत्वानुपपत्तेः। अध्ययनविधिना फलवदर्थावबोधमुद्दिश्य अध्ययनविधेः।

न च "त्वं तदसि" इत्येवान्वयो वक्तव्यः, 'असि' पदानुरोधात्। ततश्च किञ्चिज्ज्ञत्वादि विशिष्टे जीवे जगत्कर्तृत्वादिविशिष्टब्रह्माभेदे बोधनीये जहदजहल्लक्षणास्वीकारो दोष इति शङ्कनीयम्। मुख्यार्थस्य विशिष्टस्यानन्वये विशेष्य-

मात्रपरत्वमङ्गीकुर्मः। न चेयं लक्षणा; घटोऽनित्यः' इत्यत्र शुद्धघटपरस्य घटपदस्य लक्षणां विना मुख्यवृत्त्यैव प्रयोगदर्शनात्। अनित्यत्वस्य घटत्वेऽनन्वयात्, घटपदस्य घटमात्रपरत्वात्, तत्र घटत्वस्योपलक्षणतयैव भानात्। अन्यथा 'घटोऽनित्यः' इति प्रयोगो लाक्षणिक इति व्यवहारापत्तः। घटोऽनित्यः' इति प्रयोगे तु घटपदस्य घटत्वपरत्वे लक्षणा सर्वसम्मतैव। ततश्च "तत्त्वमसि' इत्यादौ तदादिपदस्य केवलविशेष्यशुद्धचैतन्यपरत्वे शक्तिरेव प्रयोगश्च मुख्य एव। लक्षणोक्तिस्तु विशिष्टशक्तिज्ञानाकार्यशाब्दबोधजनकत्वगुणयोगेन।

## मतान्तरप्रदर्शनम्

यत्तु पदद्वयलक्षणापेक्षयैकपदे लक्षणामाश्रित्य तदित्यस्य तत्सहचरित इति वा, 'द्वा सुपर्णा' इति श्रुतेः, यद्वा 'सन्मूलाः सोम्येमाः प्रजाः' इत्युक्तेस्तदाश्रितस्त्वमिति वा लक्षणया व्याख्यायताम् अन्यत्र 'वसन्तादिभ्यष्ठक्" (पा० ४।२।६३) इति सूत्रे वसन्तपदस्य तत्सहचरिते, 'ब्राह्मणोऽस्य मुखमासीत्" इत्यत्र मुखपदस्य मुखजे लक्षणाङ्गीकारादिति व्याख्यानम्, तदपि विचारणीयम्। उपक्रमादिभिरैक्ये तात्पर्येऽवधृते तत्र लक्षणायाश्च निराकृतत्वेनैतादृशव्याख्यानासंगतेः।

## शरीरशरीरिभावविचारः

यत्तु शरीरवाचिनां देवमनुष्यादिशब्दानां शरीरिपर्यन्तत्वदर्शनाद् ब्रह्मशरीरभूतजीव वाचि 'त्वं' पदस्य जीवशरीरकब्रह्मपरत्वं व्युत्पत्तिसिद्धम् 'यस्य सर्वाणि भूतानि शरीरम्' इति, यस्यात्मा शरीरम्' इति च चेतनाचेतनप्रपञ्चस्य ब्रह्मशरीरत्वोक्तेरिति। तत्रेदं विचारणीयम्। एवमपि 'त्वं'पदेन जीवशरीरकः परमात्मोच्येत, तस्य तत्पदार्थभेदबोधनं न संभवति, 'असि' पदार्थानन्वयात्। तत्पदार्थस्य विशेष्यत्वमङ्गीकृत्य जीवशरीरकत्वविधानाभ्युपगमे तु तत् त्वम् अस्तीत्यापत्तेः।

वस्तुतस्तु देवदत्तादिशब्दानां शरीरविशिष्टात्मवाचित्वे यथा देवदत्तः सुखी, दुःखीत्यादिरात्ममात्रविषयो व्यवहारः देवदत्तः कृशः स्थूलः, सुन्दर इत्यादिः शरीरमात्रविषयव्यवहारः शब्दान्तरानपेक्ष एव दृश्यते; यथा वा इन्द्रः सुखी, इन्द्रः सहस्राक्षः, विष्णुः सर्वज्ञः, विष्णुर्नीलमेघश्याम इत्यादौ निष्कृष्टात्मशरीरवाचकशब्दान्तरसामानाधिकरण्याभावेऽप्यात्ममात्रविषयः शरीरमात्रविषयश्च व्यवहारः। तथा पृथिव्यादावदर्शनाद् न पृथिव्यादीनां मुख्यशरीरत्वम्, अवयवविशेषविशिष्टशरीरवाचकानामेव तद्विशिष्टात्मपरत्वव्युत्पत्तेः। अन्यथा 'घटो जगत्कर्ता' इत्यपि विष्णुविषयकोऽनौपचारिको व्यवहारः प्रसज्येत्, घटशरीरके जगत्कर्तृत्वाबाधात्। तत्र चेष्टापत्तौ सर्वेषां शब्दानां विष्णुवाचकत्वमेवाङ्गीक्रियताम्। किं प्रपञ्चस्य तच्छरीरत्वमङ्गीकृत्यैतादृशव्युत्पत्तिकल्पना क्लेशेन ?

एवं च यथा उदयनाचार्यैः परमाणूनामीश्वरशरीरत्वमङ्गीक्रियते, साक्षात् तत्प्रयत्नविषयत्वात्। तथा पृथिव्यादीनामीश्वरनियम्यत्वगुणयोगात् तच्छरीरत्वव्यपदेश औपचारिक एव। ततश्चौपचारिकप्रयोगैर्न वेदवाक्यानामुपपादनं युक्तम्।

किञ्च, न शरीरमात्रवाचकपदानां शरीरिपरत्वव्युत्पत्तिः कल्पयितुं शक्या 'देह आत्मा, शरीरम् आत्मा' इत्यादेर्मुख्यप्रयोगस्यापत्तेः। वैदिकैस्तत्रेष्टापत्तेः कल्पयितुमशक्यत्वात्। साङ्केतिकदेवदत्तादिशब्दानां कथञ्चिदविशिष्टवाचकत्वेऽपि निष्कृष्टदेहवाचकानां शरीरकलेबरादिशब्दानामात्मशब्दसामानाधिकरण्यं वक्तुमशक्यमेव। एवं च प्रपञ्चवाचकशब्दानामपि मुख्यवृत्त्या न ब्रह्मसामानाधिकरण्यं वक्तुं शक्यम्।

वस्तुतस्तु देवदत्तादिशब्दानामपि शरीरमात्रवाचकत्वमेव व्यवहारबलात् कल्प्यम् न तु तद्विशिष्टात्मवाचकत्वम्; लक्षणयैव क्वचित् तत्सामानाधिकरण्यव्यवहारोपपत्तौ विशिष्टे शक्तिकल्पनानौचित्यात्। अन्यथा नीलादिशब्दानामपि विशिष्टवाचकत्वापत्तेः। यदि लक्षणयैव तत्प्रयोगोपपत्तौ न शक्तिरादरणीया नीलादिपदानामित्युच्यते, तदा प्रकृतेऽपि तुल्यम्। तस्मात् सर्वं ब्रह्मेत्यादीनां 'मृद्घटः' इतिवत् प्रपञ्चब्रह्मणोरुपादानोपादेयभावात्, तयोश्च तादात्म्यात् सामानाधिकरण्यं समर्थनीयम्, न शरीरशरीरिभावेन।

वस्तुतस्त्वेतादृशस्थलेषु 'यद् रजतं सा शुक्तिः' इतिवद् बाधायां सामानाधिकरण्यं बोध्यम्। यद् रजतमिति ज्ञातं न तद् रजतम्, अपि च शुक्तिरितिवद् यत् प्रपञ्चरूपेणावगतं न स प्रपञ्चः, अपि तु ब्रह्म इति तदर्थः। एवं च "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतीनां न लक्षणास्वीकारावसर इति ज्ञेयम्।

किञ्च, शरीरवाचकानां शरीरिपर्यन्तत्वमित्यस्य कोऽर्थः? न तावच्छरीरिलक्षकत्वम्, तावता मुख्यत्वानुपपादनात्। मुख्ये सम्भवति लक्षणाङ्गीकारस्यायुक्तत्वात्। नापि तत्र शक्तत्वम्, शरीरवाचिनेत्यसाधारण्येन निर्देशानुपपत्तेः, प्रवृत्तिनिमित्तमनुष्यत्वादिजातेः शरीरिण्यवृत्तेः। न च शरीरिणि शक्तिरस्त्विति शङ्क्यम्, तथा सति मनुष्यत्वादेरात्मवृत्तित्वेनाचाक्षुषत्वापत्तेः। अत एव जीवे मनुष्यादिपदप्रयोगः शरीराभेदभ्रमेणोपपाद्यते। यत्तु "आदित्यो ब्रह्म" इतिवद् जीवे ब्रह्मत्वोपासनार्थं "तत्त्वमसि" इति निर्देश इति, तदपि न; अस्योपासनाप्रकरणत्वाभावात्, तत्त्वनिर्णयप्रधानत्वात्। अन्ते "तद्धास्यविजज्ञौ" इत्युपसंहाराच्च। न च "स आत्मा अतत्त्वमसि" इति पदच्छेदो युक्तः, "त्वं ब्रह्मणो भिन्नोऽसि" इत्यस्यानुपदेष्टव्यत्वात्। नाहं ब्रह्म' इति प्रत्यक्षेणैव ब्रह्मभेदस्य सिद्धत्वात् ऐक्यस्याप्रसक्तत्वेन निषेधानुपपत्तेश्च। अपि च यथा "शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयते" इति दृष्टान्तेन यथा ज्वरादिरोगग्रस्तस्य

तन्नवृत्तौ स्वास्थ्ये सति विश्रान्तिः तथा जाग्रत्स्वप्नयोः करणव्यापारजनितश्रमापनुत्तये जीवस्य देवतात्मस्वरूपेऽनपायिस्वस्वरूपात्मकेऽवस्थानमित्यर्थस्यैवेह विवक्षितत्वात् ।

**अनेन जीवेनात्मनेति श्रुतिः**

"अनेन जीवेनात्मनानुप्रविश्य, नामरूपे व्याकरोत्" इति जीवेन आत्मनेति स्वबोधकपदसामानाधिकरण्याच्च जीवब्रह्मणोरभेदः। न च जीवशब्देनेश्वर एवोक्तः, रूढिपरित्यागापत्तेः। जीवत्वं हि प्राणधारकत्वम्। तज्जीव एव प्रसिद्धम्। न च त्रिवृत्करणपूर्वकजगत्सृष्टेर्जीवेऽसम्भवान्न तस्य जीवपरत्वमिति शङ्क्यम्, अस्मदादावसंभवेऽपि प्रथमजस्य समष्टिप्राणाभिमानिनो हिरण्यगर्भस्य तत्संभवात् ।

**एकविज्ञानेन सर्वविज्ञानप्रकारः**

किञ्च, एकविज्ञानेन सर्वस्य तत्त्वतो विज्ञानं जीवब्रह्मणोरैक्यं विना नोपपद्यते, विकारस्य ब्रह्मव्यतिरेकेणासत्त्वात्; ब्रह्मज्ञानेन तत्त्वतो विज्ञानं सिद्धयेत्, जीवस्य तु सर्वान्तर्गतस्य न विकारान्तर्भावः सृष्टिप्रकरणे कुत्रापि जीवसृष्टेरनुक्तेः। अत ऐक्याभिप्रायेणैव तस्य ज्ञातत्वमुपपादनीयमिति तयोरभेदसिद्धिः ।

**'अहं ब्रह्मास्मि' इति श्रुत्यर्थः**

किञ्च, बृहदारण्यके 'ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मि" इति। तस्मात् "तत्सर्वमभवत् तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इत्युक्त्वा "य एवं वेदाहं ब्रह्मास्मि" इति, स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति" इत्यत्र स्पष्टमेव 'अहं ब्रह्माभिन्नोऽस्मि' इति ज्ञानस्य सर्वात्मभावरूपमोक्षहेतुत्वमुक्तम्। तत्र च 'तद्यो यो देवानां प्रत्यबुध्यत' इति भेदपरवाक्यस्यापि देवादिषु प्रबुद्धं पुरुषं निर्धार्य 'स एव तदभवत् इति ब्रह्माभेदोक्तः, न च 'नाम ब्रह्मेत्युपासीत' इत्यादिवत्; अत्रापि 'इति' शब्दशिरस्कत्वाद् न ब्रह्माभेदपरत्वं वाक्यस्येति शङ्क्यम्, अत्राप्युपासनप्रकरणस्थत्वाभावात्। 'आत्मेत्येवोपासीत' इत्यादाविव 'इति' शब्दस्य स्वाभाविकसकर्मकत्वप्राप्तौ तन्निराकरणपरत्वेनोपयोगात्। न च 'अहं' शब्दोऽन्तर्यामिपर इति वक्तुमुचितम्, अत्रैव 'अहं मनुरभवं सूर्यश्च' इति वामदेवजीवस्य वस्तुतो ब्रह्माभेदेन सूर्यादिभावस्योक्ततया अन्तर्यामिपरत्वाभावात्। "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्', इति जीवगतज्ञानफलस्य ब्रह्मभावस्य प्रकाशनात् तद्वाक्येऽन्तर्यामिपरत्वस्य शङ्कितुमप्यशक्यत्वात्, 'पश्यन् प्रतिपेदे' इत्यस्यापि बोधनिमित्तसर्वभावस्योक्तत्वेन स्वाभाविकसर्वभाववतो ब्रह्मणः 'पश्यन् प्रतिपेदे' इति वचनस्याश्लिष्टत्वात् ।

**स एक इति श्रुत्यर्थः**

"स यश्चायं पुरुषे यश्चासावादित्ये—स एकः" इति तैत्तिरीयश्रुतिरपि जीवब्रह्माभेदे प्रमाणम्। 'ब्रह्मविदाप्नोति परम्' इत्यत्र शुद्धस्य ब्रह्मणः प्रकृतत्वेन तस्मिन्नुपाधिकृतभेदस्य तात्त्विकत्वप्रसक्तौ तन्निराकरणार्थत्वेनैक्योपदेशोपपत्तेः। न च "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद यथा पशुः" इति समनन्तरवाक्ये उपासनापदश्रवणात् पूर्वत्रापि "य एवं वेदाहं ब्रह्मास्मि" इत्यत्र 'वेद उपास्ते' इत्येवार्थ इति शङ्कनीयम्। "तद्धैतत्पश्यन् प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति" इति पूर्वतरवाक्ये 'पश्यन्' इत्यनेन दर्शनस्यैवोक्तेः।

**काठकोपनिषदर्थविचारः**

एवं हि काठकोपनिषदपि जीवब्रह्मैक्यपरा तथाहि—

येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः॥

इति देहव्यतिरिक्तमात्मानं निश्चयेन ज्ञातुं नचिकेताः प्रश्नमुत्थापयामास। यमस्तु जीवतत्त्वज्ञानस्य मोक्षसाधनतया तस्य उपदेशार्हतां परीक्षितुं बहुभिरैश्वर्यदीर्घजीवित्वदेवस्त्र्यादिभिः प्रलोभयामास। तेषु नचिकेतसो वैराग्यं दृष्ट्वा सन्तुष्टो यमः—ममाप्येतादृशं वैराग्यं नाभूत्। मत्त उत्तमगुणोऽस्ति त्वादृशः शिष्योऽतीव दुर्लभः, त्वां शिष्यं प्राप्य कृतार्थोहम्, त्वया ज्ञातुमिष्टो जीवो वस्तुतः परमात्मैव तज्ज्ञानं धीरस्य हर्षशोकोपलक्षितसंसारनिवर्तकमिति प्रोवाच। नचिकेताः सन्तुष्टः सन्, यद्येवं तर्हि धर्माधर्माद्यतिक्रान्तस्य तस्य स्वरूपं वदेति पुनरपृच्छत्. अन्यत्र धर्मादित्यादिना यमः प्रणवोपदेशपूर्वकं जीवस्य स्वरूपं विस्तरेणोक्त्वा तमेव पुनः कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" इत्यनेन प्रत्यगात्मत्वेन परामृश्य, इति बहुवारं कर्म-

य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते॥

फलभोक्तारम्, अङ्गुष्ठमात्रं जीवं भूतभव्येशितृपरमात्माभिन्नत्वेनोपदिशति। अन्ते च—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः।
तं स्वच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम्॥

इत्यत्राङ्गुष्ठमात्रं जीवमनूद्य तं शरीरादिभ्योऽन्यत्वेन ज्ञातव्यमुपदिश्य विशुद्धं जीवं शुक्रामृतपदबोध्यब्रह्माभिन्नं विद्यादिति समापयति। अनेन स्पष्टमेव ज्ञायतेऽस्या उपनिषद ऐक्ये तात्पर्यमिति।

**अत्रैव मतान्तरम्**

केचित्तु "येयं प्रेते विचिकित्सा मनुष्ये" इति मन्त्रं शरीरव्यतिरिक्तजीवप्रश्नपरमिति न मन्यन्ते। हेतुं चाह; नचिकेताः परमास्तिकः पितुर्यागे सर्वस्वदक्षिणासु नीयमानासु वैकल्यं दृष्ट्वा आत्मप्रदानेनापि पितृयागसमृद्धिमकामयत। यागो हि पारलौकिकफलः, शरीरव्यतिरिक्ते आत्मनि जन्मान्तरे फलति। यदि च सः शरीरव्यतिरिक्तात्मनि सन्दिहेत्, तदा पितृकृतयागे समृद्धिं न कामयेत। अपि च नचिकेता द्वितीयवरत्वेन स्वर्गफलामग्निविद्यां मृत्युसकाशे प्रार्थयामास। यदि च स तस्य देहान्तरभोग्यस्वर्गफलं मम भविष्यति, अहं देहातिरिक्त इति न जानीयात् तदा अग्निविद्यां न प्रार्थयेत्। किञ्च, नचिकेता यमलोकमेव प्राप्तः तत्र यमेन यात्यमानान् जीवान् दृष्ट्वा देहव्यतिरिक्तमात्मानं कथं न जानीयात्? तस्मात् 'येयं प्रेते' इत्यनेन परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते। एवं च येयं प्रेते' इति न शरीरवियोगमात्राभिप्रायम्, अपि तु सर्वसम्बन्धविमोक्षाभिप्रायम्।

अयमर्थः— मोक्षाधिकृते मनुष्ये प्रेते सर्वसम्बन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्ति-नास्त्यादिका येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यामिति।

तथा हि माध्यमिका वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिं मोक्षमिच्छन्ति। पाषाणकल्पो मोक्ष इति तार्किकाः। शाङ्करास्तत्त्वज्ञानेनोपाध्युच्छित्तौ ब्रह्मभावं मोक्षं वदन्ति। त्रय्यन्तनिष्णातास्तु परब्रह्मह्यशरीरतया प्रकारभूतस्याणोर्जीवस्य परमात्मानुभवो मोक्ष इत्याहुः तत्र मोक्षस्वरूपं तत्साधनं च विद्यामिति नचिकेतसः प्रश्नार्थं इत्याहुः।

**तत्र विमर्शः**

तत्रेदं विवेचनीयम्—नचिकेता यमलोकं गतः, यमं तल्लोकस्थान् यात्यमानान् जीवान् पश्यतीत्येतावता शरीरव्यतिरिक्तात्मज्ञानवानिति तावद् वक्तुमयुक्तम्। इदानीन्तनैरमेरिकादिदेशान्तरगमनवत् तस्य यमलोकगमनम्। तत्रस्थजीवानां च यातनाशरीराविष्टानामेव च तस्य दर्शनमभूत्। ततश्च तल्लोके एवमेव जना बाध्यन्त इत्येव स ज्ञातुं प्रभवति। इमे यात्यमाना मनुष्यलोके पापं कृत्वा अत्रागता इति प्रत्यभिज्ञातुं स नैव प्रभवेत्। इत्थं च नानेन शरीरव्यतिरिक्तात्मज्ञानसिद्धिः; नापि पितृयागसमृद्धिकाङ्क्षया आत्मप्रदानेन तस्य शरीरव्यतिरिक्तात्मनिश्चयसद्भावानुमानाच्छरीरव्यतिरिक्तात्मप्रश्नानुपपत्तिः।

यतः सर्वे वयमास्तिका एव शास्त्रं विश्वस्य विहितानि कर्माणि श्राद्धादीनि कुर्मः, प्रतिषिद्धानि हिंसादीनि परिहरामः। नैतावता अस्माकं सत्तानिश्चयरूप

देहव्यतिरेकनिश्चयो जात इति वक्तुं शक्यते। तथा सतीतरैः शरीरादिनिन्दायां क्रियमाणायां दुःखं न स्यात्, प्रशंसायां च हर्षो नोदियात्। शरीरतापेन न तप्येत। किञ्च, मोक्षस्वरूपं तत्साधनं च ज्ञातव्यमिति जिज्ञासाबाधस्य नचिकेतसोऽस्तीति कथं ज्ञातुं शक्यते? वस्तुतस्तु स्वर्गार्थमग्निविद्याप्रार्थनलिङ्गात् स्वर्गार्थी स इति वक्तुं शक्यम्, अन्यथा तत्प्रार्थनायोगात् तं दुर्दशम्' इत्यादिमन्त्रेण शरीरव्यतिरिक्तात्मज्ञानवतो मोक्ष इति मृत्युवचनानन्तरं हि सोऽन्यत्र धर्मादित्यादिना परमात्मरूपं पृच्छति न प्राक्; किञ्च, मरणानन्तरं जीवास्तित्वविषये नचिकेतसः प्रश्नो यदि न स्यात्, तदा--

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।
यथा च मरणं प्राप्य आत्मा भवति गौतम॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥

इति मृत्युवाक्यमनुपपन्नमेव, अपृष्टोत्तरत्वात्। एवमेव स्वर्गभोग्यगफलार्थतया अग्निविद्याप्रार्थनेनापि न तस्य देहान्तरास्तित्वनिर्णयोऽनुमातुं शक्यते, आस्तिकानां महतां प्रवादात् तु आस्तिककुलोत्पन्नस्य तस्य तादृशजीवास्तित्वं विश्वस्यानुष्ठानव्यग्रता अभूत्। परन्तु तादृशास्तित्वे तस्य सम्भावना आसीत्, न तु निश्चयः। अत एव 'अस्तीत्येके, नायमस्तीति चैके' इति संशयात् पृच्छति। प्रश्नस्य मुक्तात्मविषयत्वे ईश्वरविषयप्रतिवचनानुपपत्तिश्च। एवं च श्रुतेर्मुख्यार्थपरित्यागः, विपरीतार्थप्रकल्पनं चास्मिन् मते आपद्येयातामिति संक्षेपः।

**ब्रह्मवेद ब्रह्मैव भवति**

एवं "ब्रह्मवेद ब्रह्मैव भवति" इति मुण्डकवाक्यमपि जीवब्रह्मैक्ये प्रमाणम्। ज्ञानस्य ह्यज्ञाननिवृत्तावेव सामर्थ्यम्, न त्वपूर्वकार्योत्पत्तौ। ततश्च ब्रह्मज्ञानाद् ब्रह्मज्ञाननिवृत्तौ ब्रह्म भवतीत्यर्थात् पूर्वमेव ब्रह्मणः सतो ज्ञानात् तद्भावाविर्भाव इत्यवगतेरैक्ये तात्पर्यम्। एवं 'ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतिर्जीवस्य संसारावस्थायामेव ब्रह्मभावोऽस्तीति दर्शयति। न च नित्यं ब्रह्मभूतस्य ब्रह्मभावोक्तिरयुक्तेति शङ्क्यम्, यथा कण्ठगतचामीकरादावज्ञानादनाप्तत्वव्यवहारः, ज्ञानात् प्राप्तिश्च; तथा अज्ञानादब्रह्मभूतस्य ज्ञानादज्ञाननिवृत्तौ ब्रह्मभाव इति सामञ्जस्यात्। न चात्रैवोपनिषदि 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैतीति साम्यमेव मुक्तः प्राप्नोति, न तु तद्भावः" इत्युक्तमिति शङ्कनीयम्, परमसाम्यस्यैक्यरूपत्वात्। अत एव परमपदं सार्थकम्।

परेऽव्यये सर्वे एकीभवन्ति।
युक्तात्मानः सर्वमेवाविशन्ति॥

इति चैक्ये प्रमाणम्। न च 'नृपा एकीभूताः" इत्यादिवदत्रैकीभावो युक्तो मुख्ये संभवति, गौणार्थग्रहणायोगात्। अपि च नृपाणामेकीभावोऽभिप्रायैकीभाव-निबन्धनः, अभिप्रायश्च प्रत्यन्तःकरणं भिन्नः पूर्वमासीत्। ततश्च भिन्नान्तःकरणोपाधि-परिच्छिन्ना जीवा भिन्ना आसन्, इदानीं त्वभिप्रायरूपान्तःकरणवृत्त्यैक्यादन्तःकर-णानामैक्यम्, ततश्च भेदकाभावाद् नृपपदवाच्या जीवा एकतां प्राप्ता इत्यर्थः स्वरसः। स च अद्वैतानुकूलः, "नान्योऽतोऽस्ति द्रष्टा, नान्यदतोऽस्ति द्रष्टा" इति द्रष्टरि ब्रह्मभेदो नास्तीति ब्रुवती श्रुतिरप्यैक्ये प्रमाणम्।

ननु

य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद।
यस्यात्मा शरीरं य आत्मानमन्तरो यमयति॥

इत्यत्र नियम्यनियामकभेदेन जीवेश्वरभेदः प्रतिपादितः। तत्कथमैक्यं शास्त्रार्थ इति चेत्, न; अस्मिन् वाक्ये जीवस्यौपाधिकभेदमादाय नियम्यत्वोक्तेः, अत एव "एष ते आत्माऽन्तर्याम्यमृतः" इति परमात्मादन्तर्यामिणो जीवात्मत्वं ब्रवीति। अनोन्यदार्तमिति च चेतनादन्यस्याचेतनस्य मृत्युग्रस्तत्वं वदति। न च जीवाः 'आर्त'-शब्देनाभिधीयेरन्, तेषां नित्यत्वेन, मुक्त्यर्हत्वेन, चार्तत्वेन हेयत्वायोगात्।

### द्वितीयाद् वै भयं भवति

किं च द्वितीयाद् वैभयं भवतीति भेदस्य भयहेतुत्वेन निन्दित्वादभेद एवो-पनिषदां तात्पर्यम्। न च स्वसमानद्वितीयदर्शनं भयहेतुरित्यपि वक्तुं शक्यम्। उत्त-रत्र यन्मदन्यन्नास्ति कस्मान्नु बिभेमि तत एवास्य भयं वीयायेति द्वितीयसामान्या-भावेनैव भयनिवृत्तेः प्रतिपादनात्। परमार्थदर्शनरहितस्य द्वितीयदर्शननिमित्तभय-संभवाद् 'एकाकी बिभेति' इत्युक्तम्।

'तस्मादेकाकी न रमते, स द्वितीयमैच्छात्' इत्यत्रैकाकिनोऽस्त्युक्तिः, इष्ट-संयोगजन्यरतेरेकाकिन्यभावात्। इदं चातत्त्वज्ञानिविषयम्। अत एव न पूर्वोक्तेन विरोधः "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इत्यत्र आत्मन्यल्पमपि भेदं पश्यतो भयोक्तेरात्माद्वैतज्ञानमेव मोक्षहेतुरिति सिद्ध्यति, 'यदा ह्येवैष अभयप्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" इति तदुपपादनाच्च।

एवं 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मविद्यामुपक्रम्य "तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यत्र तस्य ब्रह्मण एतस्मादात्मन इति प्रत्यक्षसिद्धजीवाभेदेन सामानाधिकरण्यादपि जीवब्रह्मणोरभेदः, 'आत्म'शब्दस्य प्रत्यगात्मनि रूढत्वात्। एवं "तदाहुर्यदब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते" इत्यत्र ब्रह्मविद्यामुप-क्रम्य 'अहं ब्रह्मास्मि' इति विशेषणादैक्यावगमः। वेद्यं ब्रह्म यदि वेदितुरन्यत् स्यात्,

तदा अयं ब्रह्मेति स्यात्, न त्वहं ब्रह्मेति। आत्मानमेवाविदहं ब्रह्मास्मीति चावधारणात्। आत्मैव ब्रह्मेत्यवगमः। न च वाच्यं ब्रह्मणोऽहं ब्रह्मास्मीति ज्ञानं सर्वात्मभावश्च तत्फलम्, न तु जीवानामिति। तथा सति 'तद्यो यो देवानां प्रत्यबुध्यत" इत्युपक्रम्य "य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" इति सर्वेषां ब्रह्मात्मज्ञानात्सर्वभावनिर्धारणं नोपपद्येत। इत्थं चात्मविद्याया ब्रह्मविद्येति व्यपदेशोऽपि जीवब्रह्मैक्यं द्रढयति।

**मैत्रेयीब्राह्मणार्थविचारः**

एवं मैत्रेयीब्राह्मणमपि जीवब्रह्मैक्यं प्रकाशयति। अत्र हि "येनाहं नामृता स्या किमहं तेन कुर्याम्, यदेव भगवान् वेद तदेव मे ब्रूहि" इत्यनेनामृतत्वसाधनं ज्ञानं प्रार्थितवत्या मैत्रेय्या मोक्षसाधनमात्मज्ञानं ब्रवीति याज्ञवल्क्य इति सम्प्रतिपन्नम्, आत्मा च क इति तु विवेचनीयम्। न वा "अरे पत्युः कामाय" इत्यारभ्य "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्युक्त्वा प्रवृत्तस्य 'आत्मा वा अरे "द्रष्टव्यः" इत्यनन्तरवाक्यस्य यस्य प्रीतये सर्वे प्रिया भवन्ति, स एव ज्ञातव्यः। आत्मप्रीतिस्तु न परार्था, किन्त्वात्मानिरतिशयानन्दरूपत्वात् स्वयमेव प्रियः। ततश्चानन्दरूपः स एव ज्ञातव्यः, अमृतत्वाय न पत्यादिभेदज्ञानेन दुःखबहुलं संसारयोऽनुवर्तितव्य इत्यभिप्रायः। अनन्तरं च "स आत्मा ब्रह्मणोऽनन्यः" इति ब्रह्मा तं परादाद्योऽन्यत्रात्मनो ब्रह्मवेद इति तस्य सर्वात्मकत्वम्, "अस्य महतो भूतस्य निश्वसितमेतत्" इति तस्य जगत्कारणत्वमेकायनखण्डेन लयाधारत्वमूलकमुपादानत्वं चोक्त्वा तस्यैव यत्र हि 'द्वैतमिव भवति' इत्यादिना द्वैतभाने सुखदुःखादिप्राप्तिः, यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यनेन सर्वात्मत्वनिश्चयदशायां द्वैताभानम्, तत्प्रयुक्तदुःखाद्यभावं च सूचयति। आत्मज्ञानेन सर्वं ज्ञानं चोपक्षिपति सर्वादावेव। तदुपयोगितयैव मृद्घटन्यायेनोपादानत्वमपि दर्शयति। तदर्थमेव यथा दुन्दुभेर्हन्यमानस्येत्यादिना दुन्दुभ्यादिदृष्टान्तेन सामान्यविशेषन्यायेन प्रपञ्चस्य ब्रह्मानन्यत्वं ब्रवीति। अत्र प्रियसंसूचितः, अत्रोपक्षिप्तः, आत्मा जीव एव। तत्प्रियार्थमेव सर्वस्यापि प्रियत्वात्। आत्मनस्तु कामाय सर्वं प्रियं भवति, 'आत्मा वा अरे द्रष्टव्यः' इति वेदानुपूर्वीदर्शनेनोभयत्र 'आत्म'पदस्य एक एवार्थ इति स्वरसतः प्रतीयते। प्रथमात्मपदस्य जीव अर्थः। द्वितीयस्य तु ब्रह्मेति तु न वक्तुं शक्यते, आत्म'शब्दस्य प्रत्यगात्मनि मुख्यत्वात्, समभिव्याहारस्योपेक्षितुमशक्यत्वात्; जीवब्रह्मणोरैक्यस्य तत्त्वमसीत्यादौ, अत्रैव च पूर्वं 'अहं ब्रह्मास्मि' इति महावाक्येन प्रतिपादितत्वाच्च। अत एवात्मज्ञानेन सर्वज्ञानम्, तस्यात्मनो जगत्कारणत्वम्, आत्मज्ञानस्यामृतत्वसाधनत्वमित्यादिकमुपरिष्टाद् वक्ष्यमाणं सर्वमुपपन्नं भवति।

**अत्रैव केषाञ्चिन्मतम्**

केचित्तु—'आत्मनस्तु कायाय सर्वं प्रियं भवति' इत्यन्तं जीवपरमेव, आत्मा वा अरेद्रष्टव्यः' इति तु परमात्मपरम् । आत्मनस्तु कामाय=आत्मन इष्टसंपत्तय इति यावत् । न च जीवात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्तीत्युक्ते सति जीवस्य स्वरूपमन्वेष्टव्यं भवति । प्रियमेव ह्यन्वेष्टव्यम्, न तु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपम् । यस्मादात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्ति, तस्मात् पत्यादिप्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसङ्गतं भवति, प्रत्युत न पत्यादिशेषतया पत्यादीनां प्रियत्वम्, अपि त्वात्मशेषतया तेषां प्रियत्वे त एवोपादेयाः स्युः, न त्वात्मा । ततश्च तस्य 'आत्मा वा अरे द्रष्टव्यः' इत्यनेनानन्वये वाक्यभेदः स्यात्, पूर्ववाक्यस्य प्रकृतानुपयोगश्च ।

अयमर्थः—वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तम्, अपि तु निरतिशयानन्दस्वरूपपरमात्मप्रयुक्तम् । अतो योऽन्येषां प्रियत्वमापादयति, स परमात्मैव द्रष्टव्य इत्युपदिश्यते ।

अयमर्थः—न हि पतिजायापुत्रादयो मत्प्रयोजनाय, 'अहमस्य प्रियः स्याम्' इति स्वसंकल्पात् प्रिया भवन्ति, अपि त्वात्मनः कामाय । परमात्मनः स्वाराधकप्रियप्रतिलम्भरूपेष्टनिर्वृत्तये । परमात्मा हि कर्म्मभिराराधितः सन् तत्तत्कर्मानुगुणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति, एष ह्येवानन्दयाति इत्युक्तेः, न तु तत्तद्वस्तुस्वरूपेण प्रियमप्रियं वा । ततश्च 'आत्मनस्तु कामाय' इत्यत्रात्मा जीवः । 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र आत्मा परमात्मा ग्राह्यः । यस्मात् पत्यादीनामिष्टसंपत्तये तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्ते, अपि त्वात्मेष्टसंपत्तये स्वतन्त्रेण स्वप्रियत्वेनोपादीयन्ते । तस्माद् य एवात्मनो निरवधिकनिर्दोषप्रियः परमात्मा स एव द्रष्टव्यः, न पत्यादय इति व्याचक्रुः ।

**मतान्तरविमर्शः**

अत्रेदं विवेचनीयम्—इदं लोके प्रसिद्धं यत् पत्यादयो जायादीनां पत्यादिप्रयोजनाय प्रिया न भवन्ति किन्तु जायादीनामेव प्रयोजनायेति । सर्वेषामपि स्वात्मा प्रियः पतिजायादयोऽपि प्रिया इत्यनुभवसिद्धम् । तत्र पत्यादीनां स्वात्मव्यतिरिक्तानां प्रियत्वं पतित्वादिप्रयुक्तं न भवति, तथा सति पत्यादीनां स्वप्रतिकूलतादशायामपि प्रियत्वापत्तेः, अपि तु स्वात्मनो हितकरणप्रयुक्तम् । अतः पतिजायादीनामिष्टसंपादनदशायामनिष्टसंपादनदशायां चाविशेषेण स्वात्मनः प्रियत्वं प्रसिद्धम् । अतः पत्याद्यपेक्षया अतिशयितप्रियत्वमात्मनो लभ्यते । तस्मात् पत्यादीन् परित्यज्य मुख्यप्रियमात्मानमेव दर्शनादिना समाश्रयेदित्यर्थे संभवति, अध्याहारादिकल्पना न शोभते, उक्तं च सुरेश्वराचार्यैः—

दृष्ट्वानुभवतस्तत्त्वमात्मानात्मपदार्थयोः ।
उपादित्सा जिहासा च तत्कृतेवानुपाल्यताम् ॥
स्वत एवाप्रियोऽनात्मा आत्मप्रीत्यर्थसाधनात् ।
जायादिः स्यात् प्रियो भक्त्या बन्धक्याः कामुको यथा ॥
निर्हेतुका स्वतः प्रीतिरात्मन्येव यतस्ततः ।
भाक्तं प्रियं परित्यज्य मुख्यं प्रियमुपाश्रयेत् ॥ इति ।

अत एव प्रसिद्धिद्योतको वैशब्दोऽपि संगच्छते । यत्तु जीवात्मन इष्टसंपत्तये पत्यादयः प्रिया भनन्तीत्युक्ते जीवस्वरूपमन्वेष्टव्यमिति न लभ्येत, अपि तु प्रियं यत् पत्यादिकं तदेवान्वेष्टव्यं स्यादित्युक्तम् । तत्र वक्तव्यम्, स्वस्य शेषत्वेनैव ते प्रिया इत्युक्ते स्वशेषत्वाभावदशायां न प्रिया इत्यर्थस्यापि सिद्धत्वेन आत्मा सर्वदा प्रियः पत्याद्यपेक्षया प्रियतमः स एव द्रष्टव्य इति ज्ञायत एव, यथा लोके पितुः पुत्रे प्रीतिर्वर्तते पुत्रहितकारिणि, पुत्राध्यापके च प्रीतिर्वर्तत एव। अपि तु पुत्राध्यापकापेक्षया पुत्रेऽधिका प्रीतिः । अत एव यदि सोऽध्यापकः पुत्रं सम्यग् नाध्यापयति, तदा तं न पुरस्करोति । अतश्चाध्यापकापेक्षया पुत्रे प्रीतिरधिका, पुत्रापेक्षया चात्मनि प्रीतिरधिकतरा, हिरण्यकशिपोः स्वदेषिणि पुत्रे प्रीत्यदर्शनात् । ततश्च यदर्थतया लौकिकपदार्थाः सर्वे प्रीतिविषयाः, स एव निरतिप्रीतिविषय आनन्दरूपो द्रष्टव्यः श्रोतव्यश्च, नतु पत्यादिविषये दर्शनश्रवणादिना कालो नेतव्य इति अमृतत्वार्थिन्यै मैत्रेय्यै निवेदयति याज्ञवल्क्यः, न हि सातिशयकादाचित्कदुःखमिश्रप्रियत्वं पत्यादावनुभूयमानं परमात्मप्रयुक्तमिति प्रसिद्धिरस्ति मैत्रेय्याः । यतः प्रसिद्धिद्योतको वै 'शब्दः समञ्जसः' स्यात् । श्रुतिसिद्धत्वं त्वप्रयोजकं मैत्रेय्याः, वेदानधिकृतायास्तदर्थापरिज्ञानात् । तस्मात् सर्वोऽयं प्रपञ्चो जीवविषय एव, तस्य यत्परमार्थरूपं ब्रह्म, तदेवात्रोपदिष्टम्, तस्यैव स्वरूपज्ञानम् मोक्षसाधनमिति च सिद्धम् ।

**ज्योतिर्ब्राह्मणार्थविचारः**

एवं बृहदारण्यकषष्ठगतं ज्योतिर्ब्राह्मणमपि जीवब्रह्मणोरैक्यं विस्पष्टं प्रकाशयति । तथाहि "आत्मैवास्य ज्योतिर्भवति" इत्युपक्रमस्य जीवविषयत्वं सिद्धम्, तस्यैव स्वप्नाद्यवस्थान्तरोपवर्णनेन विद्यया कर्मणा च सह परलोकगमनवर्णनेन तस्य शरीरादिव्यतिरेकं प्रतिपाद्य "स वा अयमात्मा ब्रह्म" इति तस्य ब्रह्मरूपत्वं वक्ति । अन्ते च "स वा एष महानज आत्मा विज्ञानमयः प्राणेषु एषोन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इत्यादिना तस्य ब्रह्मरूपत्वं बोधयति । "इमाः प्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन प्रत्यूढाः" इति श्रुतिरध्यज्ञानावृतत्वात् स्वीयब्रह्मरूपानवभास इति ब्रूते । एवमुपनिषत्प्रसिद्धमैक्यं स्मृतिपुराणादिभिरुपबृंहितं दृश्यते—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥

(इति विष्णुपुराणे)

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।

(इति भगवद्गीतासु)

**त्मनो निर्गूणत्वम्**

आत्मनो निर्गुणत्वं च "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् अशब्दमस्पर्शमरूपमव्ययम्, असंगो ह्ययं पुरुषः" इत्यादिश्रुत्या सिद्धम्। स्मृतिश्च, निर्गुणं गुणभोक्तृ चेत्याद्या तदेवोपबृंहयति। सर्वज्ञत्वादिगुणबोधकश्रुतिः सगुणब्रह्मविषया उपासनार्था। उपास्तिविषयगुणसमर्पणपरा। न चापूर्वत्वात् सत्यकामादौ तात्पर्यम् अपूर्वत्वेप्यन्यशेषतया तत्र तात्पर्याभावात्। यथा "जर्तिलयवाग्वा वा जुहुयात्" इत्यादेः "अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च" इत्यादेश्च, अजक्षीरेण जुहोति" इत्यनेनैकवाक्यत्वात् तच्छेषत्वं स्वार्थेऽतात्पर्यं चेति। निर्गुणप्रकरणस्थगुणवाक्यानामद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितनिषेध्यसमर्पकत्वम्, ब्रह्मणः प्राशस्त्यपरत्वं चेति न स्वार्थे तात्पर्यम्।

**भेदज्ञानस्य मोक्षहेतुत्वविचारः,**

यत्तु भेदश्रुतेर्भेदज्ञानस्यैव मोक्षहेतुत्वमिति, तथाहि "पृथगात्मानं प्रेरितारं च मत्वा जुष्टः ततस्तेनामृतत्वमेति" इति पृथक्त्वज्ञानस्य मोक्षहेतुत्वं श्रुत्योच्यत इति, तन्न, तत्र तत्रात्मेति तूपगच्छन्ति ग्राहयन्ति च अविभागेन दृष्टत्वादिति सूत्रयता श्रीबादरायणाचार्येण निखिलवेदान्तानां तात्पर्यं विवृण्वता तस्याः श्रुतेर्भेदज्ञानस्य मोक्षहेतुत्वतात्पर्याभावादेव पृथक्त्वज्ञानस्य मोक्षहेतुत्वानुक्तिरिति सूचितं भवति।

अयमर्थः—सर्वाजीवे सर्वसंस्थे बृहन्तेऽस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे।
पृथगात्मानं प्रेरितारं च मत्वा, जुष्टस्ततस्तेनामृतत्वमेति॥

इति मन्त्रस्य संपूर्णं स्वरूपम्। तत्र सर्वेषां जीवानामुपजीव्ये सर्वप्रलयाधारे बृहति ब्रह्माख्ये चक्रे जीवो भ्राम्यति। भ्रमहेतुमाह—पृथगात्मानमिति। जीवब्रह्मभेदज्ञानं भ्रमहेतुरित्यर्थः। तस्मात् परमेश्वरेण जुष्टोऽनुगृहीत एवामृतत्वं प्राप्नोतीत्यर्थः।

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते।

इति श्रुतिर्नाद्वैतस्य प्रतिकूला। अनन्तरमेव—

"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशम्।"

इति मन्त्रेण देहेऽहंममाभिमानाद् जीवोऽनीशया स्वस्येशभिन्नत्वज्ञानेन शोचति। यदा त्वन्यं देहादिविलक्षणमृषिसंघजुष्टमात्मानम् 'अहमस्मि' इति पश्यति, तदा वीतशोको भवतीत्यद्वैतस्यैवोपपादनात्।

तदयं निष्कर्षः—उपनिषद्व्याख्यातारः, द्वैतिनो वा, विशिष्टाद्वैतिनो वा, अद्वैतिनो वा भवन्तु, सर्वेऽपि जीवस्येश्वराभेदेनैवोपासनमिच्छन्ति, "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" इति श्रुतेः "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्राच्च। परं तूपासनाविषयोऽभेदस्तात्त्विकः, अद्वैतिनामितरेषां तु काल्पनिकः। व्यवहारविषयः प्रपञ्चः काल्पनिकोऽद्वैतिनाम्, पारमार्थिक इतरेषामिति जीवब्रह्माभेदस्य तात्त्विकत्वं तु बहुश्रुतिसूत्रस्वारस्यानुगुणमिति संक्षेपः।

## द्वितीयं प्रवचनम्

# ब्रह्मसूत्राणामद्वैतानुगुण्यम्

ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे।
ज्ञानशक्त्यवताराय नमो भगवतो हरेः॥

### उपोद्घातः

ब्रह्मणः प्रमाणतदविरोधज्ञानसाधनफलादीनां श्रुत्युक्तानां निर्णयार्थानि सूत्राणि ब्रह्मसूत्राणि 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिश्शब्दादनावृत्तिः शब्दात्' इत्यन्तानि श्रीबादरायणाचार्यैः प्रणीतानि। तानीमानि 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४-३-११०) इति पाणिनिसूत्रेऽभिधानात् 'भिक्षुसूत्राणि' इत्यपि नामान्तरेण प्रसिद्धानि, सन्यासिभिः साधनचतुष्टयसंपन्नैः प्राधान्येन सेवनीयत्वात्। तानि च 'वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सुत्राणां नानुमानोपन्यासार्थानि' इति भगवत्पादोक्तरीत्योपनिषदां तात्पर्यनिर्णयार्थानि। अतएवादावेव 'अथातो ब्रह्मजिज्ञासा', 'जन्माद्यस्य यतः' इति सूत्रयोः 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व, तद् ब्रह्मे ति' इति वाक्येषु श्रुतान्येव ब्रह्मजिज्ञासपदे इदं पद-यतःपदे च श्रूयेते। तेषां कुत्र तात्पर्यमिति जिज्ञासायां यत्रोपनिषदां तात्पर्यं तत्रैव सूत्राणां तात्पर्यमिति निश्शङ्कं वक्तव्यम्। एवं सति डा० तीबो-नामकेन प्राचार्येण यत् स्वकृतशङ्करभाष्यानुवादे—उपनिषदां बहुभिर्महर्षिभिर्भिन्नभिन्नकाले प्रणीतत्वाद् एकवाक्यतोपपादनमशक्यमनावश्यकं च; यद्येकवाक्यता संपादनीयेत्याग्रहः, तदा शङ्कराचार्योक्तरीतिरेव समीचीना, ब्रह्मसूत्राणि तु रामानुजमतस्यैवानुकूलानि दृश्यन्त इति जल्पितं तदविचाररमणीयम्।

ब्रह्मसूत्रार्थनिर्णयेऽपि मीमांसाभाष्यकारैः शबरस्वामिभिरुक्तो न्यायोऽनुसरणीयः, तथा हि—

"लोके येष्वर्थेषु यानि पदानि प्रयुज्यन्ते तानि पदानि तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्, नाध्याहारादिभिरेषामर्थः परिकल्पनीयः परिभाषितव्यो वा' इत्युक्तं शास्त्रारम्भे। एतन्नियमानादरे हि सूत्रार्थाव्यवस्थैव स्यात्।

### जिज्ञासासूत्रम्

अथातो ब्रह्मजिज्ञासेत्यत्र, ब्रह्मपदस्य "ब्रह्मचर्यम्" इत्यत्र वेदे "ब्रह्म स्वयंभु" इत्यत्र; कमलासने "इह ब्रह्म आयाति" इत्यत्र, जीवे "तपो ब्रह्म" इत्यत्र, तपसि

"ऋतं सत्यं परं ब्रह्मपुरुषं कृष्णपिङ्गलम्" इत्यत्र, शिवे "नारायणः परं ब्रह्म" इत्यत्र, विष्णौ च रूढत्वाद् रूढ्योः कलहे योगस्योन्मेष इति जगद्वाचित्वाधिकरण-न्यायात् योगार्थो गृहीतः भगवत्पादैः। तथाहि बृहि वृद्धौ इति धातोर्मनिन प्रत्यये निष्पन्नः देशकालाद्यवच्छेदकविशेषाग्रहणाद् अभावाप्रतियोगित्वं बृहत्त्वं बोधयति ब्रह्मशब्दः। अभावश्च प्रागभावः प्रध्वंसोऽत्यन्ताभावोऽन्योन्याभावश्चेति चतुर्विधः। तथा च सकलविधाभावाप्रतियोगि ब्रह्मेत्यर्थः। ब्रह्मव्यतिरिक्तवस्त्वभ्युपगन्तॄणां ब्रह्मणोऽन्योन्याभावाप्रतियोगित्वं न संभवति। चिदचितोर्ब्रह्मशरीरत्ववादेऽपि तयोः परस्परं भिन्नतया स्वगतभेदोऽनिवार्य एव। ब्रह्मशब्दो गुणपूर्णवाचक इति मते त्वप्रसिद्धार्थकतया पारिभाषिकत्वापत्तिः। अद्वैताभिप्राये तु नैतौ दोषौ। तच्च सत्य-ज्ञानानन्दात्मकं ब्रह्म अज्ञातं विषयः, ज्ञातं सत् फलत्वेन पुरुषार्थः। एतादृशं निष्प्र-पञ्चं जीवाभिन्नं च ब्रह्मेति प्रथमसूत्रस्याद्वैतपरता।

## शारीरकसूत्रनाम्न आनुगुण्यम्

अपि च ब्रह्मसूत्राणां शारीरकसूत्राणीति नामान्तरं विद्यते। सर्वैर्भाष्यकारैर-नुमन्यते च। शारीरकपदं च "अनुपपत्तेस्तु न शारीरः' 'शारीरश्चोभयेऽपि हि भेदे-नैनमधीयते', 'प्रतिषेधादिति चेन्न, शारीरात्' इति सूत्रेषु सर्वमतेनैव जीवपर-मितीयं जीवमीमांसैव सती जीवस्वरूपस्य शोधनेन ब्रह्मत्वं निरूपयन्ती ब्रह्ममीमांसा-पदेनापि व्यवह्रियते। इत्थं च ब्रह्ममीमांसाशारीरकमीमांसापदयोः पर्यायत्वाद् जीवब्रह्मणोरभेदोऽस्य शास्त्रस्य विषय इति स्पष्टं प्रतीयते। चिदचिच्छरीरकः पर-मात्मा शारीरकस्तस्य मीमांसा शारीरकमीमांसेति व्याख्याने शारीरकपदं पारि-भाषिकं प्राप्नोति सूत्रेषु जीवस्यैव शारीरकपदेन व्यवहारात्। कुत्सितं शरीरं शरीरकं तत्र भवः शारीरक इति व्युत्पत्तेर्जीवः शारीरकः, तस्य मीमांसा नाम तत्स्वरूपशोधनपूर्वकम्, तस्यैव ब्रह्मत्वनिर्णय इति।

अपि च जिज्ञासासूत्रे जिज्ञासायाः फलं मोक्ष इति सर्वसंप्रतिपन्नम्। मोक्षश्च बन्धनिवृत्तिः, तस्य ज्ञानसाध्यत्वोक्त्या ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं बन्धस्य प्रतीयते। एवं जीवगतबन्धस्य ब्रह्मज्ञाननिवर्त्यत्वोक्त्या जीवब्रह्माभेदोऽपि सिद्ध्यति, अन्यगत बन्धस्यान्यज्ञानेनानिवृत्तेः। तथा हि-जीवो ब्रह्माभिन्नः, तज्ज्ञाननिवर्त्यबन्धा-श्रयत्वात्। यो यज्ज्ञाननिवर्त्याज्ञानाश्रयः स तदभिन्नः, यथा शुक्त्यभिन्न इदमंश इति प्रयोगः। सत्यज्ञानानन्दात्मकं ब्रह्म निर्गुणं जीवाभिन्नम्, प्रपञ्चस्तु मिथ्येत्यद्वैत-राद्धान्तः। तत्र जीवब्रह्माभेदः सूत्रेषु कुत्र प्रतिपाद्यत इति चिन्त्यते।

## शास्त्रदृष्टिसूत्रम्

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति प्रथमाध्यायप्रथमपादगतं सूत्रम्। 'प्राणस्तथानुगमात्, इति सूत्रेण 'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं माम् आयुरमृत-

मित्युपास्स्व प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्यस्मिन् कौषीतकवाक्यसन्दर्भे प्राणशब्देन परमात्मोच्यते, स चोपास्यत्वेनाभिमत इति निर्धारितम्। अनन्तरं च 'मामेव विजानीहि' 'मामुपास्व' इति वक्तुः इन्द्रस्यात्मत्वेनोपदेशाद् जीव एवात्रोपास्य इति शङ्का अध्यात्मसम्बन्धिधर्माणामत्र बाहुल्येन कीर्तनात् परमात्मोपासनमेवेदमिति प्रत्युक्ता, 'न वक्तुरात्मोपदेशात्' इति सूत्रेण। पुनश्च 'मामेव विजानीहि' इति अस्मच्छब्दप्रयोगानुपपत्तिपरिहाराय शास्त्रदृष्टिसूत्रमिदं प्रवृत्तम्।

तस्य चायमर्थः—शास्त्राद् दृष्टिः शास्त्रदृष्टिः, शास्त्रजन्यं ज्ञानं शास्त्रं च 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिकमैक्यबोधकमभिप्रेतम्। तज्जन्यं ज्ञानम् अहं ब्रह्मास्मीति। तेन युक्त इन्द्रो मामेव विजानीहीत्युक्तवान्। ततश्च 'अहं ब्रह्मास्मि' तत्त्वमसीत्यादेः शास्त्रगतवाक्यविशेषस्य शास्त्रत्वोक्त्या इदं वाक्यं शास्त्रसारभूतम्, अस्यैवोपकारकमन्यत्, एतद्वाक्यार्थज्ञानमेव परमपुरुषार्थसाधनम्, इत्यादयोऽर्थाः सूचिता भवन्ति। तथा च तत्त्वमसीत्यादेर्योऽर्थः स एव शास्त्रार्थः, तत्रै शास्त्रतात्पर्यमित्यायातम्। तस्य च जीवब्रह्मैक्य एव स्वारस्यम्। इतरमतप्रोक्ता अर्था लाक्षणिकाः, अध्याहाराद्यपेक्षाश्चेति पूर्वमेव विचार्य निर्णीतम्।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति सूत्रमपि जीवब्रह्माभेदे प्रमाणम्। अत्र च शास्त्रोक्तविशेषणः परमात्मा किमहमिति ग्रहीतव्यः, उत मदन्य इति, इति सन्देहे सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविरुद्धधर्मवत्त्वात् तत्त्वमसीत्यादौ श्रूयमाणोऽप्यभेदो गौण इति पूर्वपक्षयित्वा त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि', 'तत्त्वमसि' इत्यादिना यस्माद् उपासका अभेदेनैवोपगच्छन्ति तत्त्वजिज्ञासून् श्वेतकेतुप्रभृतीन् उद्दालकादयोऽभेदेनैव बोधयन्ति, तस्माद् उपासन ज्ञानं चेत्युभयमभेदेनैव भवतीति द्रष्टव्यम्। उपासनं यद्यपि भेदे सत्यप्यभेदेन कर्तुं युज्यते, तथापि अभेदस्य इतरसूत्रेषु उपनिषत्सु च व्यवस्थापनाद्वास्तविकोऽभेदः सुवचः। भेदपरत्वे तु वाग्धेनूपास्तिवत् सर्वोपासनानामसदुपासनत्वप्रसक्तिश्च।

## संपाद्याविर्भावसूत्रम्

किञ्च मुक्तस्वरूपनिर्णयार्थे चतुर्थाध्यायचतुर्थपादे आदौ 'संपद्याविर्भावः स्वेन शब्दात्' इत्यनेन 'य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति जीवस्य मुक्तिकालीनस्वरूपबोधकवाक्येन मुक्तजीवस्तत्त्वज्ञानात् परं ज्योतिरुपसंपद्य स्वेन रूपेणाविर्भवतीत्युक्तम्। एतेन मुक्तौ तस्यागन्तुकरूपनिषेधः सिद्धयति। तथा च स्वरूपाविर्भाव एव मोक्ष इत्युक्तं भवति। स्वशब्दस्य स्वीयं रूपमित्यर्थकथनं तु न युज्यते, व्यर्थत्वाद्, येनैव हि रूपेणाभिनिष्पद्यते तस्यात्मीयत्वात्। आत्मवचनत्वे तु केवलेनैवात्मरूपेणाभिनिष्पद्यते, न

त्वागन्तुकेनेत्यर्थविशेषोपपत्तिः। 'परं ज्योतिः' इत्यत्र ज्योतिःपदार्थ आत्मैव, न भौतिकज्योतिरिति निरधारयत् आत्मा प्रकरणात्, इत्यनेन। ततो मुक्तः परमात्मनो भेदेनावतिष्ठते, उत अभेदेनेतिशङ्कायाम् 'अविभागेन दृष्टत्वात्, इति सूत्रम्। परं ज्योतीरुपसंपद्य इत्युक्तिमनुसृत्य कर्मकर्तृनिर्देशाद् भेदेनावस्थानमिति न मन्तव्यम्; अविभक्त एव परेणात्मना मुक्तौ जीवोऽवतिष्ठते, कुतः, दृष्टत्वात्। 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिश्रुत्यनुसारेणाभेदेनात्मा दृष्टः। यथादर्शनमेव फलं युक्तं 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति तत्क्रतुन्यायादित्युक्तम्। 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति श्रुतिरभेदमेव द्रढयति।

यत्तु मुक्तः परमात्मशरीरतया तत्प्रकारभूतोऽवतिष्ठत इति व्याख्यानं तदध्याहारापेक्षं संसारेऽपि प्रकारतयाऽवस्थितेर्विशेषविर्देशं चापेक्षते।

**प्रकृतिश्चेतिसूत्रम्**

ब्रह्मणः प्रकृतित्वमुक्तं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रे। तेनैव च ब्रह्मणो विवर्तोपादानत्वं 'सिद्धयति, विवर्तोपादानत्वे च प्रपञ्चमिथ्यात्वमर्थसिद्धम्। तथा हि—न तावत् प्रकृतित्वं परिणाभ्युपादानत्वम्, तस्य 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इति सूत्रेण कृत्स्नपरिणामे प्रपश्चात् पृथक् ब्रह्मणोऽभावापत्तिः, एकदेशपरिणामे निष्कलं निष्क्रियं शान्तमिति श्रुतिविरोधः, इत्येवं निराकृतत्वात्। नापि नैयायिकपक्षमनुरुध्य आरम्भकत्वम्, तथा सति प्रतिज्ञादृष्टान्तयोरनुपपत्तिः। येनाश्रुतं श्रुतं भवतीति प्रतिज्ञा। यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्तः, तयोरारम्भवादेऽनुपपत्तिः, कारणापेक्षया कार्यस्य तन्मतेऽत्यन्तभिन्नत्वात् कारणज्ञानेन ज्ञातत्वं च नोपपद्येत।

यत्तूपादानत्वम् अपृथक् सिद्धया विकाराश्रयत्वम्, निर्विकारं तु ब्रह्म। अतस्तदविरोधाय सूक्ष्माचिद्विशिष्टं ब्रह्म जगदुपादानम्, तत्र सूक्ष्मचिदंशो जगदाकारेण परिणमत इति विकारित्वं तस्यैव, न तु ब्रह्मणः केवलस्येति वदन्ति। मृदादिभिर्घटाद्युत्पत्तिर्नाम न वस्त्वन्तरम्, अपि तु मृदादेरेवावस्थान्तरं घटः। एवं त्र्यणुकमारभ्यैव कार्याणि अवस्थाभेदा इति च ब्रुवन्ति। तत्रापि विचारणीयं किञ्चित्।

एवं सति प्रकृत्यंशस्यैवोपादानत्वं सिध्यति, न तु ब्रह्मणस्तस्य विशेष्यत्वमात्रेणोपादानत्वे मुख्योपादानत्वानिर्वाहः। किं च सृष्ट्यादिवाक्येष्वात्मब्रह्मादिपदानां प्रकृतिविशिष्टे ब्रह्मणि लक्षणा दुरुद्धरा। किञ्च सत्यं ज्ञानमनन्तं ब्रह्म प्रकृत्य तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यत्रात्मपदस्य प्रकृतग्राहिणो न विशिष्टपरत्वमुपपद्येत। लक्षणायामपि पञ्चम्यर्थ उपादानत्वं विशेष्य एवान्वियात्, न विशेषणे प्रकृतौ। यत्तु प्रकृतिः साक्षाद् जगदाकारेण विक्रियते, ब्रह्म तु विकाराश्रय-

प्रकृतिसम्बन्धाद् विकारवत्, न तु स्वयमिति। तदपि दुर्वचम्। 'आत्मन आकाशः संभूतः' इत्यादीनां साक्षादात्मनः प्रकृतित्वबोधकानां वाक्यानामानर्थक्यापत्तेः। तत्र साक्षात् सम्बन्धस्यैव प्रतीतेः। मायां तु प्रकृतिं विद्यात्, मायिनं तु महेश्वरमित्यादौ मायायाः प्रकृतित्वस्य ईश्वरस्य तदाश्रयत्वस्य च बोधनेन मायाद्वारकं प्रकृतित्वमीश्वरस्येत्यबोधनात्। कार्यमुपादानस्यावस्थान्तरमिति पक्षेऽपि सांख्यपक्षवद् अवस्थान्तरं पूर्वमासीद्वा अपूर्वं वा? आद्ये न कार्योत्पत्तिः, द्वितीयेऽसत्कार्यवाद इति प्रश्नोऽवतरति। अतः श्रुतिप्रतिपाद्यस्य ब्रह्मोपादानत्वस्योपपत्तये विवर्तवाद एवाश्रयणीयः, कार्यं तु मिथ्येति ब्रह्माद्वैतसिद्धिः। अत्र सूत्रे प्रतिज्ञापदेनोक्ता एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सांख्यमतेन उपादानोपादेययोरैक्याद् निर्वोढुं शक्यते। परं तु कृत्स्नप्रसक्त्यादिदोषात् सांख्यमतं परित्यक्तम्। अद्वैत एव तु इयं प्रतिज्ञा सूपपादा ब्रह्मविज्ञानेन सर्वस्य प्रपञ्चस्य तत्त्वतो विज्ञानात्। विकारस्य तत्तद्व्यक्तित्वेनाज्ञानं तु न दोषावहम्, विकारस्य मिथ्यात्वेन तज्ज्ञानस्याज्ञानत्वात्। अत एव वाचारंभणं विकारो नामधेयमित्युक्तम्। येन विज्ञानेन विज्ञातमित्यस्य यद्विज्ञानाभिन्नज्ञानविषय इत्यर्थः पूर्वमेवावेदितः।

यत्तु विवर्तवादोऽस्मिन् दृष्टान्ते विवक्षितश्चेत् शुक्तिरजतं दृष्टान्तीकृत्य शुक्तिरित्येव सत्यमिति वक्तव्यं भवेत्, न तु मृद्घटदृष्टान्त इति। तन्न, मृदपि विवर्तोपादानमेव। मृदवच्छिन्नं चैतन्यमिति तु निष्कर्षः, न हि मृदः शरावादयो भिद्यन्ते, मृद्घट इति प्रतीतेः। नाप्यभिन्नाः, अर्थक्रियाभेदात्। नापि भिन्नाभिन्नाः, एकत्र भेदाभेदयोरसंभवात्, अतोऽनिर्वाच्याः। इदमेवोक्तं मृत्तिकेत्येव सत्यमिति। कार्यमिथ्येतीति इतिपदार्थः।

## आत्मकृतेः परिणामात्

'आत्मकृतेः परिणामात्' इत्यत्र सूत्रे मिथ्यापरिणामादित्येवार्थः। अत्र कल्पतरौ ब्रह्मनन्दिना 'परिणामस्तु स्यात्' इति छान्दोग्यवाक्य उक्तत्वात् परिणामवादो वृद्धसम्मत इति. तन्न, ब्रह्मनन्दिना हि—"नासतोऽनिष्पाद्यत्वात्, प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्" इति कार्यस्य सदसत्त्वपक्षौ प्रतिक्षिप्य, न संव्यवहारमात्रत्वात्, इति विवर्तवादोऽनिर्वचनवादापरपर्यायः सिद्धान्तितः इति विवर्तवादे महतां सम्मतिः प्रदर्शिता। ततश्च सूत्रे परिणामपद दृष्ट्वा सांख्यमतं सूत्रकाराभिमतमिति न भ्रमितव्यम्। इत्थं च मिथ्यापरिणामेऽपि परिणामपदमेव पूर्वकैः प्रयुक्तमिति गम्यते, विवर्तपदं त्वर्वाचीनमिति च।

## तदनन्यत्वसूत्रम्।

'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रात् प्रपञ्चस्य मिथ्यात्वं साक्षादेवावगम्यते। इदं हि सूत्रं 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' इत्यनन्तरं

प्रवृत्तम्। तस्यायमर्थः—जगत् तावद् ब्रह्मोपादानकत्वाद् ब्रह्माभिन्नम्, जीवोऽपि तत्त्वमसीति शास्त्राद् ब्रह्माभिन्नः। तथा च एकस्मादभिन्नयोर्जीवजगतोः परस्परमप्यभेदः स्यात्, तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमादिति पूर्वपक्षस्य समाधानार्थमिदं सूत्रम्। न भोग्यस्य भोक्तृभावापत्तिर्भोक्तुर्वा भोग्यभावो लोकवदुपपत्तेः; यथा समुद्रजन्ययोः फेनतरङ्गाद्योः परस्परं भेदेऽपि एकसमुद्रात्मना अभिन्नत्वमिति। इदं च समाधानं भेदग्राहिप्रत्यक्षादेः प्रामाण्यमभ्युपेत्य भेदाभेदयोः संगमनं समुद्रात्मनाऽभेदः फेनतरङ्गात्मना रूपभेदमङ्गीकृत्य भेद इति।

इदानीं प्रत्यक्षादेः प्रामाण्यं तत्त्वावेदकत्वात् प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते तदनन्यत्वसूत्रेण। सूत्रस्यायमर्थः—आरम्भणशब्दादिभ्य इति सूत्रांशेन वाचारम्भणमित्यादिश्रुतेर्हेतूकरणात् तस्याश्च स्वरसतः प्रपञ्चमिथ्यात्वपरत्वाद् अनन्यत्वपदेन मिथ्यात्वमेव विवक्षितम्। न त्वभेदः, अभेदविवक्षायामविभागो वचनादितिवदविभाग इति प्रयोगापत्तेः। तथा च प्रपञ्चमात्रे तस्माद् ब्रह्मणोऽनन्यत्वम्। तत्र अनन्यत्वं भेदाभाव इत्येकोऽर्थः। तथा च भेदस्य ब्रह्मण्यभावोक्तावपि भिन्नवस्तुनो भावः स्यादिति शङ्का भवति। अतोऽन्यत्वेन कार्यस्याभावोऽपि विवक्षितः, तथा च कार्यस्य मिथ्यात्वम्। एवं जीवस्य ब्रह्माभिन्नतया जीवगतब्रह्मभेदस्यापि निषेधेन मिथ्यात्वसिद्धिरिति ब्रह्मव्यतिरिक्तः सर्वोऽपि प्रपञ्चो मिथ्येति सिद्धम्। तत्र जडांशे स्वरूपं भेदश्चेत्युभयं मिथ्या, चैतन्यांशे भेदमात्रं मिथ्येति विशेषः। अथवा ब्रह्मणोऽनन्यत्वम्, अन्यशून्यत्वम्, अद्वयत्वमिति यावत्। तेन प्रपञ्चमिथ्यात्वसिद्धिः। आरंभणशब्दो वाचारंभणं विकारो नामधेयमित्यादिश्रुतिः। आदिपदाद् दृग्दृश्यसंबन्धानिरूपणादियुक्त्याऽपि मिथ्यात्वसिद्धि। उक्तश्रुतौ यथा घटादिविकारो वाचा व्यवहार्यं नाममात्रम्, मृदादिकारणेभ्यो भेदाभेदाभ्यां दुर्निरूपत्वात्। तथाहि—भिन्नत्वे सत्कार्यवादहानिः, अभिन्नत्वे कारकव्यापारवैयर्थ्यम्। भेदाभेदौ तु विरुद्धत्वान्न संभवतः। अतो मिथ्यैव कार्यमित्यर्थः।

एवं 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रेणापि प्रपञ्चमिथ्यात्वसिद्धिः। जगतो ब्रह्मकार्यत्वे कृत्स्नस्य ब्रह्मणः परिणामप्रसक्तिः, एकदेशपरिणामे निरवयवत्वशब्दकोपो वा इति दूषणद्वयपरिहारार्थम् श्रुतेस्तु शब्दमूलत्वादिति सूत्रम्। ब्रह्मण उपादानत्वं निरवयवत्वं चोभयं श्रुतिमूलम्। श्रुतिश्च नातिशङ्कनीयेत्यर्थः सूत्रस्य। ननु श्रुतिर्वा सर्वहितैषिणी कथं विरुद्धं ब्रूयादत आह—आत्मनि चेति। आत्मनि स्वप्नदृशि स्वरूपानुपमर्देन नानाप्रपञ्चसृष्टिवद् ब्रह्मणि व्यावहारिकप्रपञ्चसृष्टिरित्यर्थः। निर्वक्तुमशक्योऽपि कार्यस्य कश्चित् तादात्म्याख्य आध्यासिकसंबन्धः कारणेनाभ्युपगम्यते। तथा च तादृशतादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं विवर्तोपादानत्वमित्यर्थः। न च कार्योत्पत्त्यधिकरणे ब्रह्मणि ब्रह्म न तादात्म्येन संबद्धमिति वाच्यम्, कार्योत्पत्त्यव्यवहितपूर्वक्षणोपहिते

ब्रह्मणि शुद्धस्य तादात्म्यात्, विशिष्टशुद्धयोस्तादात्म्याभ्युपगमात्। तथा च स्वप्न-दृष्टान्तकरणाद् जाग्रत्सृष्टेरपि मिथ्यात्वम्। विमतं मिथ्या, दृश्यत्वात्, स्वाप्नप्रपञ्च-यदित्यनुमानात्।

भावे चोपलब्धेरिति सूत्रस्यापि ब्रह्मान्यभाववस्तुन्युपलब्धेर्भावाद् दृश्यत्वात् प्रपञ्चो मिथ्येत्यर्थः कृतः। तथा च साक्षादेव दृश्यत्वेन मिथ्यात्वानुमानमित्यर्थः। 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रमपि स्वप्नप्रपञ्चस्य मिथ्यात्वं वदत् तद्दृष्टान्तेन जागरितप्रपञ्चस्यापि मिथ्यात्वानुमानसंभवात् दृष्टान्त-समर्थकतया प्रपञ्चमिथ्यात्वे प्रमाणम्।

सूत्रस्यायमर्थः—मायामात्रं प्रतिभासव्याप्यसत्ताकमात्रं स्वाप्नवस्तु कात्स्न्र्येन देशकालादिनाऽनभिव्यक्तमप्रामाणिकं स्वरूपं यस्य तत्त्वात्। यत्तु मायाशब्द आश्चर्य-वाची "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादिप्रयोगाद् जीवस्य सत्य-संकल्पादियुक्तस्यापि संसारदशायां कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादित्यर्थः। ततश्च जीवः स्रष्टुमसमर्थः, ईश्वर एव स्वाप्निकपदार्थस्रष्टेत्यर्थ इति व्याचक्रुः। तत माया-शब्दस्यातात्त्विकेष्वेव लौकिकमायाव्यादिनिर्मितपदार्थेषु प्रयुक्तत्वादशब्दार्थत्वम्। आश्चर्यमित्यर्थकरणेऽपि कथमाश्चर्यत्वमिति विवेचनीयम्। यदि यन्नियतकारणैन जन्यते तदेवाश्चर्यम्, तदा वैदेह्या अपि लोकोत्तरसौन्दर्याद् अघटितघटनारूपत्वेन मिथ्यात्वशङ्कयैवाश्चर्यरूपत्वोत्प्रेक्षणम्। किं च कात्स्न्र्येनानभिव्यक्तस्वरूपत्वं स्वा-प्निकपदार्थेऽन्वेति स्वरसतः। तत्परित्यज्य जीवेऽन्वयो न युक्तः, तत्र जीवस्यापक्ष त्वात् सन्ध्ये सृष्टेरेव पक्षत्वात्। तत्रोक्तरीत्या हेतोरनन्वयात्। परम्परासंबन्धस्तु न हेतुतानियामक इति बोध्यम्। 'यावद्विकारं तु विभागो लोकवत्' इतिसूत्रं सर्वस्य प्रपञ्चस्योत्पत्तिमत्त्वमभिदधाति। विकारमनतिक्रम्य विभागो विकारव्याप्य इति यावत्। तथा च यत्र यत्र विभक्तत्वं तत्र विकारत्वमिति व्याप्त्या प्रपञ्चसामान्यस्य विकारत्वं ब्रह्मणस्त्वविभागत्वेन भेदशून्यत्वमवगम्यते। भेदशून्यत्वं च दृश्यमान-भेदस्य ब्रह्मण उत्पन्नस्य मिथ्यात्वेनैव निर्वहति – इति प्रपञ्चमिथ्यात्वम्। अत्र च विभागपदस्योत्पत्तिपरत्ववर्णनं केषाञ्चिदयुक्तम्, विभागपदस्याविभागो वचनाद-विभागेन दृष्टत्वादित्यादौ भेदपरत्वेन सूत्रकारैरुक्तत्वात्, लोके भेदपरत्वेनैव प्रसिद्धेश्च। अत एव केचिन्नैयायिका भेदेनैवोपपत्तौ विभागगुणं प्रत्याचख्युः।

'असंभवस्तु सतोऽनुपपत्तेः' इति सूत्रमपि ब्रह्मणः सत्पदेन व्यवहारात् तद्भि-न्नस्य प्रपञ्चस्यासत्त्वं सूचयति।

इदानीं जीवब्रह्मणोः कीदृशं स्वरूपं सूत्रकाराभिमतमिति विविच्यते—

**ईश्वरस्वरूपविचारः।**

तथा हि—ईश्वरस्वरूपनिरूपणे 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रम्। अस्यार्थः—परस्य ईश्वरस्य सविशेषश्रुतिसिद्धं सविशेषत्व ग्राह्यम्,

उत निष्कलं निष्क्रियं शान्तमित्यादिश्रुतिसिद्धं निर्विशेषत्वमिति संशय्य स्वतोऽपि न सविशेषत्वं नाप्युपाधितः, इति निर्णीतम् । 'न भेदादिति चेन्न प्रत्येकमतद्वचनात्' इत्युत्तरसूत्रे प्रत्युपासनं भिन्नाकारयोगो ब्रह्मणः श्रूयत इति चेन्न । यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयोः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स इति प्रतिपर्यायम् अध्यात्माधिदैवतयोरभेदावगमात् । तथा च भिन्नाकारयोगो ब्रह्मणि कल्पित इति तात्पर्यम् ।

'अपि चैवमेके' इति सूत्रे च 'एव' पदेन न भेदादिति चेन्न' इत्यंशमनुकृष्यते, तथा च भेदनिन्दापूर्वकमित्यर्थः, अतद्वचनादित्यस्य अभेदवचनादित्यर्थः । तथा च भेदनिन्दापूर्वकमभेदवचनमित्युक्तं भवति । तच्च "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिकम्, तथा 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति च समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ।

ब्रह्म च निराकारमित्यत्र सूत्रम्—'अरूपवदेव हि तत्प्रधानत्वादिति' ।

अनेन च ब्रह्म अरूपवद् निराकारमेव । यतो निर्गुणत्वप्रतिपादकानि वाक्यानि स्वप्रधानानि सगुणवाक्यानि न तत्प्रधानानि, अपि तूपासनाविध्यर्थानि । ततश्च तेषां ब्रह्मणि गुणप्रतिपादने न तात्पर्यम्, अपि तूपासनाविधावेव तात्पर्यमित्युक्तं भवति । यत्त्वरूपवदित्यस्य रूपरहिततुल्यमित्यर्थः शरीरित्वनिबन्धनं कर्मवश्यत्वं नास्तीति व्याख्यानम्, तल्लक्षणाभ्युपगमात् संभोगप्राप्तिरितिचेन्न वैशेष्यादिति सूत्रेण समानार्थकेन पौनरुक्त्याच्च न तथा अर्थवत् ।

एवमेव "प्रकाशवच्चावैयर्थ्यात्; आह च तन्मात्रम्" इति सूत्राभ्यां यथा प्रकाशोऽङ्गुल्यादिसम्बन्धाद् नानाकारतां भजते औपाधिकीम् । तथा ब्रह्माप्यविद्योपाधिसम्बन्धाद् नानाकारभाक् । अत एवोपासनाविधिपराणां शास्त्राणामवैयर्थ्यमिति । एवं 'प्रज्ञानघन एव' इति श्रुत्या चैतन्यमात्रं ब्रह्मणः स्वरूपमित्यभिप्रायः सूत्रकारस्य लक्ष्यते । ये तु 'प्रकाश' शब्दस्य ज्ञानार्थकत्वमङ्गीकृत्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तज्ञानरूपत्ववत् सर्वज्ञत्वसत्यसंकल्पत्वादिकं तत्तद्बोधकश्रुतिवशादङ्गीकार्यम्, न 'सत्यं ज्ञानम्' इति श्रुतज्ञानस्वरूपमात्रं ब्रह्मेत्यर्थे सूत्रं व्याकुर्वन्ति तेषां प्रकाशपदस्य प्रकाशसामान्यार्थकस्य ज्ञाने लक्षणाङ्गीकारो दोषः । अपि च पूर्वसूत्रे 'ब्रह्म निराकारम्. इत्युक्ते साकारवादिश्रुतीनां गतिप्रदर्शनार्थत्वेन प्रकाशवच्चावैयर्थ्यमित्यस्य सार्थक्ये संभवति, सत्यसंकल्पत्वश्रुत्यवैयर्थ्यप्रदर्शनस्य प्रकृतानुयोगः । तेषामुभयलिङ्गत्वे सिद्धान्तितेऽन्यतरावैयर्थ्यविधानस्य व्यर्थत्वात् । यदि सगुणलिङ्गश्रुतीनामवैयर्थ्यायेदं सूत्रम्, तर्हि निर्गुणलिङ्गावैयर्थ्याय किमिति सूत्रान्तरं न प्रणीतमिति प्रश्नावतारात् । आह च तन्मात्रमित्यनेन ज्ञानरूपतामात्र

त्वबोधने इतरगुणनिषेधोऽर्थसिद्धः मात्रपदस्वारस्यात्। इतरगुणानामपि पारमार्थिकत्वे ज्ञानमात्रत्वबोधनं सूत्रकारस्यासमञ्जसमेवेति।

"दर्शयति चाथो अपि च स्मर्यते" इति तदुत्तरसूत्रेण तन्मात्रत्वं निर्गुणत्वं दर्शयति, तच्च स्मृतिष्वपि स्मर्यत इत्यर्थः। 'कल्याणगुणाकरत्वं दर्शयति' इति व्याकुर्वतां तु आह च तन्मात्रमित्यव्यवहितसूत्रार्थं परित्यज्यान्यार्थकल्पनं दोषः। अत एव च "उपमा सूर्यकादिवत्" इत्युत्तरसूत्रेण परमात्मनोऽपारमार्थिकीं विशेषवत्तामभिप्रेत्य—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

इत्यादौ जलसूर्यकोपमा प्रदर्शिता शास्त्रेणेत्यर्थकेनापि ब्रह्मण उपाधिमत्त्वादिकमपारमार्थिकमिति स्पष्टम्, यत्तु यथा सूर्यप्रतिबिम्बस्तत्र तत्र स्थितोऽपि निर्दोषः, एवमात्मा तत्र तत्र स्थितोऽपि न तत्तत्स्थानप्रयुक्तदोषवानित्यर्थं इति तदपि 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इत्यनेन गतार्थत्वात् सूत्रवैयर्थ्यं प्रसञ्जयति।

'अम्बुवदग्रहणात्तु न तथात्वम्' 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इति सूत्राभ्यां यथा सूर्यस्य प्रतिबिम्बयोग्यं दूरस्थं जलं गृह्यते तथा आत्मनो विप्रकृष्टदेशा उपाधयो न गृह्यन्ते, सर्वगतत्वात् सर्वानन्यत्वाच्चात्मन इति पूर्वपक्षं कृत्वा वृद्धिह्रासभाक्त्वं यथा जलगतं सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति तथा पारमार्थिकमविकृतमेकरूपमपि ब्रह्म उपाध्यन्तर्भावादुपाधिधर्मान् भजते न स्वत इति सिद्धान्तितम्।

अत्र चाम्बुनि यथा सूर्यादयोऽपरमार्थतया गृह्यन्ते, न तथा पृथिव्यादिषु तत्र परमार्थतयैव परमात्मग्रहणात् ततश्च पृथिव्यादिगतदोषाः परमात्मनि स्युरिति पूर्वपक्षं प्राप्य वृद्धिह्राससूत्रेण यथा जलादिप्रतिबिम्बितसूर्यो न तद्गतवृद्धिह्रासादिभाक् एवं परमात्मनः पृथिव्यादिस्थत्वेऽपि न पृथिव्यादिगतदोषभाक्त्वमिति व्याकुर्वन्ति केचित्।

अत्रेदं वक्तव्यम्—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

इति मन्त्रे 'एकधा बहुधा चैव' इत्यनेन दृष्टान्तदार्ष्टान्तिकयोः समानधर्म उपदिष्टः। यथा बहुषु जलेषु प्रतिबिम्बितः सूर्यो बहुधा दृश्यते, परमार्थतस्त्वेक एक नभसि दृश्यते, एवं ब्रह्म प्रतिशरीरं भिन्नत्वेन तत्तत्प्राणिगतैर्गुणैर्भिन्नतया विभाव्यमानमपि वस्तुगत्यैकमेवेति दृष्टान्तदार्ष्टान्तिकभावसंगतिः। अत एव च 'उपमा

सूर्यकादिवत्' इति सूत्रे चायमेवार्थ उपष्टम्भकतया नेतव्यः। स एव च 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यारभ्य प्रकृतः। एवं सति केषाञ्चिद्व्याख्यानेऽस्य मन्त्रस्य 'यथा तत्र तत्र स्थितः सूर्यो निर्दोषः' इत्यंशे साधर्म्योदाहरणं कथं घटेत संभोगप्राप्तिरिति चेन्न वैशेष्यादि'त्यनेन समानन्यायतया गतार्थं च। अत एव अम्बुवदग्रहणात्तु न तथात्वं वृद्धिह्रासभाक्त्वमित्यादिसूत्राभ्यां दोषसत्त्वशङ्कातत्समाधाने नातीव समञ्जसे दोषाभावसमर्थनपरत्वे वृद्धिह्रासभाक्त्वसूत्रेण दृष्टान्ते वृद्धिह्रासभाक्त्वसमर्थनपरेण विरोधश्च। किञ्च, 'निरवद्यं निरञ्जनं न लिप्यते लोकदुःखेन बाह्य' इत्यादिश्रुतिषु कण्ठत एव ब्रह्मणो दोषाभाववादिषु सत्स्वेतानि सूत्राणि दोषाभावसमर्थनपरत्वेन योजने व्यर्थप्रायाण्येवेति।

'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति सूत्रे अथात आदेशो नेति नेति न ह्येतस्मादिति नेति अन्यत्परमस्ति' इति बृहदारण्यकश्रुतौ 'नेति, नेति' इत्याभ्यां निषेधाभ्यां किं ब्रह्म प्रपञ्चश्चेत्युभयं निषिध्यते, उत प्रपञ्चमात्रमिति प्रकृतं यदेतावत्त्मेतावदित्यर्थः, 'विशिष्टाद् भावप्रत्ययो विशेषणमभिधत्ते" इति न्यायात् तस्य प्रतिषेधः, न तु ब्रह्मणः; यतः 'अन्यत्परमस्ति' इत्यनेन भूयः परमात्मसत्तां ब्रवीति श्रुतिरित्यर्थः। अनेन च प्रपञ्चनिषेधेन प्रपञ्चमिथ्यात्वं ब्रह्मसत्यत्वं च स्पष्टमेव प्रतीयते।

**अत्र मतान्तरम्**

यत्त्वत्र श्रुतिव्याख्यानं यद् मूर्तामूर्तरूपद्वयं विग्रहवत्त्वं चोक्तम्, ईदृशाचेतनमात्रप्रकारकं न ब्रह्म, किन्तु चेतनप्रकारकमपीति भूयोंशकथनाय निषेधद्वयम्। सूत्रस्य चायमर्थः—एतावत्त्वं परिच्छिन्नत्वं प्रकृतमात्रवत्त्वं निषेधति, यतोऽन्यद् गुणजातं वक्तव्यं ब्रवीतीति सगुणपरतया सूत्रार्थवर्णनम्, तत्रापीदं चिन्तनीयम्—इयत्तापरिच्छिन्नमेतावन्मात्रवत्त्वं ब्रह्मणि नास्यीत्युक्ते उपरि यदधिकं वर्तत इत्यभिप्रेतम्, तदेव हि वक्तव्यम्। अत्र तु तादृशं भवदभिप्रेतचेतनप्रपञ्चरूपं वस्तु नोच्यते, ब्रह्मैवोच्यते। अस्मद्व्याख्याने तु ब्रह्मणः प्रतिषेधो नाभिप्रेतः, उपर्यन्यत्परमस्तीत्यनेनाचेतनादुत्कृष्टचेतनप्रतिपादनेन सामञ्जस्यम्। यत्तु न हि अनुन्मत्तः प्रमाणान्तरप्रमितमप्रमितं च ब्रह्मणो विशेषणतया प्रतिज्ञाय तदेव निषेधतीत्यद्वैतखण्डनं तदयुक्तम्, "यथोर्णनाभिः तन्तुनोच्चेरेत् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्तीत्युक्त्वा प्राणा वै सत्यं तेषामेष सत्यम्" इत्यनेन प्राणोपलक्षितप्रपञ्चासत्यत्वोक्तेः असत्यस्य निषेधावश्यंभावात्। अस्थूलादिवाक्येन ब्रह्मणः प्रपञ्चाभावबोधनस्य दुरपन्हवत्वात्। "द्वे वाव ब्रह्मणो रूपे" इति रूपवत्त्वोपपादनं किमर्थमिति चेत्, ब्रह्मणि प्रतिषिद्धस्य प्रदेशान्तरे सत्ताभ्रमवारणायेत्युक्तत्वात्।

जीवब्रह्मणोरन्यत्वमुपास्योपासकभावादभ्युपेयमित्याशङ्क्य प्रतिषेधति—"प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्" इति। यथा प्रकाशाकाशादिषूपाधिभेदाद्भेदः स्वाभाविकोऽभेदः। एवमुपाधिनिमित्तः कर्मणि उपासनायाश्च जीवपरभेदः, अभ्यासादभेदावगमादिति। यत्तु प्रकृतैतावत्त्वमेव प्रतिषेधति, न मूर्तामूर्तादिविशिष्टत्वमित्युक्त्वा ज्ञानानन्दादिवद् मूर्तामूर्तविशिष्टताया अवैशेष्यं ब्रह्मगुणत्वाविशेषत्वं प्रकाशरूपज्ञानवत्त्वं च संराधनकर्मणि वामदेवादिभिरुपलभ्यत इति। अत्रेदं वक्तव्यम् - आत्मनो मूर्तामूर्तविशिष्टत्वं चेद्वक्तव्यं तत् श्रुतिवशादेव ज्ञायते, किमर्थं तत्र वामदेवादीनामनुभवोपन्यासः। किंच, अहं मनुरभवं सूर्यश्चेत्यनेन स्वस्य मनुजीवाद्यभेद एव प्रतिपाद्यते, न तु मूर्तादिविशिष्टत्वमिति। किञ्च, अभ्यस्तसंराधनानां ब्रह्मस्वरूपभूतप्रकाशानन्दावुपलभ्येतां नाम, मूर्तामूर्तादिविशिष्टत्वं कथमुपलभ्यते ? भगवद्ध्यानादौ सर्वज्ञत्वादिगुणवैशिष्ट्यस्यैव तत्तद्गुणविधिषूक्तत्वात्, मूर्तामूर्तवैशिष्ट्यस्याध्येयत्वात्।

'अतोऽनन्तेन तथाहि लिङ्गम्" इति सूत्रं चाभेदस्य स्वाभाविकत्वात्, अविद्याकृतत्वाच्च भेदस्य, विद्ययाऽविद्यां विधूय जीवः परेणैकतां गच्छतीत्युपपन्नम्। तथाहि—"स यो ह वै तत्परं ब्रह्मवेद ब्रह्मैव भवति" इत्युक्तलिङ्गादित्यर्थकम्।

**मतान्तरम्**

केचित्तु—अत उक्तहेतुभिर्ब्रह्मणोऽनन्तेनानन्तसंख्याकेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम्। तथाहि—'उभयलिङ्गमुपपन्नं भवति" इति व्याख्यातवन्तः। अत्र चानन्तपदस्य "सत्यं ज्ञानमनन्त ब्रह्म" इति श्रुतिप्रसिद्धब्रह्मस्मारणेन ब्रह्मपरत्वे संभवति, गुणपरत्वं न स्वरसम्। पूर्वप्रकृतत्वं चानन्तगुणानां नोपलभ्यते। लिङ्गमित्यस्य 'आकाशस्तल्लिङ्गात्' इत्यादिषु गमकलिङ्गपरत्वेन प्रसिद्धत्वात् उभयलिङ्गपरत्वमपि न स्वरसम्। 'उभयव्यपदेशात्त्वहिकुण्डलवद्, प्रकाशाश्रयवद्वा तेजस्त्वात्, पूर्ववद्वा, प्रतिषेधाच्च" इति सूत्रचतुष्टयं जीवब्रह्मणोः संबन्धं वक्ति। संराध्यसंराधकभावेन स्मृतो जीवः, तस्य ब्रह्मणा संबन्धो वक्तव्यः। उच्यते—अहिरित्यभेदः कुण्डलाभोगादयः परस्परं भिन्नाः, यथा अहित्वेनाभेदः प्रांशुत्वविशिष्टात् कुण्डलित्वविशिष्टस्य भेदः। एवं ब्रह्मणोऽपि चैतन्यरूपेणाभेदः. जीवत्वेश्वरत्वरूपेण भेदः पारमार्थिक इति तात्पर्यम्। प्रकाशाश्रयसूत्रं तु यथा सूर्यस्तत्प्रभा च भिन्ने द्रव्ये प्रकाशत्वेन रूपेणाभिन्ने। एवं जीवपरयोर्भेद एव, अभेदस्तु चैतन्यरूपेणेति। एतदुभयं निराकृत्य स्वमतमाह—पूर्ववदिति। 'प्रकाशादिवच्चावैशेष्यम्" इति पक्ष एव स्वाभिमतः। एकस्यैव ब्रह्मण औपाधिको भेदः। यथा प्रकाशाकाशादीनामङ्गुलीघटाद्युपाधिभेदाद् भेद इति तात्पर्यम्। प्रतिषेधाच्चेति सूत्रं नेति नेतीति प्रपञ्चप्रतिषेधाच्च चैतन्यमात्रं ब्रह्मेत्यर्थकम्।

अन्ये त्विमां चतुस्सूत्रीं जगद्ब्रह्मणोः संबन्धनिरूपणपरतया व्याचख्युः ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्' इति तादात्म्यव्यपदेशात्। इमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य इति भेदव्यपदेशाच्च अहेः कुण्डल ऋजुभाववत् तस्यैव ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनीत्येकः पक्षः। प्रकाशाश्रयवद्वा तेजस्त्वात्, यथा प्रभातदाश्रययोर्भिन्नयोरपि तादात्म्यम्। एवमचित्प्रपञ्चस्य ब्रह्मरूपत्वमित्यर्थः—पक्षद्वयमिदं व्यावर्त्य "पूर्ववद्वा" इति सूत्रेण पूर्वम् 'अंशो नानाव्यपदेशात्' इति यदुक्तं जीववत् पृथक् सिध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम् इत्यर्थकम्। प्रतिषेधाच्चेति सूत्रं 'स वा एष महानज आत्माजरोऽमरः' 'नास्य जरयैतज्जीर्यति" इत्यादिभिर्ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थ इति।

**मतान्तरविमर्शः**

अत्रेदं वक्तव्यम्—जीवस्य वेदान्तेषूत्पत्तिर्न श्रुता। क्वचिदुपास्योपासकभावेन भेदः सूचितः, क्वचित् तत्त्वमसीत्यादावभेदः प्रतिपाद्यत इति जीवब्रह्मणोः संबन्धस्य निष्कर्षणीयत्वेन तं परित्यज्य जगद्ब्रह्मणोः संबन्धनिष्कर्षार्थत्वं कथं शोभते? जगतो ब्रह्मणः सकाशादुत्पत्तिर्बहुषु स्थलेषु प्रतिपाद्यते। तथा चोपादानोपादेययोः संबन्ध एव तयोस्संबन्ध इति व्यक्ते को विशेषोऽस्मिन् सूत्रे प्रतिपाद्यते? यदि प्रकारप्रकारिभावः, स नियम्यनियामकभाव एव, शरीरत्वस्य नियम्यरूपत्वात्। किञ्च पूर्ववद्वा' इत्यस्यातिसमीपस्थस्य 'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्" इति सूत्रपरामर्शकत्वे संभवति द्वितीयाध्यायतृतीयपादस्थसूत्रपरामर्शकत्वं नतरां युज्यत इति। पूर्वं तु बादरायणः 'हेतुव्यपदेशात्" इति सूत्रे हि पूर्वपदं हि फलम् अत उपपत्तेरिति समीपस्थं सूत्रं परामृशति, न तु दूरस्थ किञ्चिदिति।

**जीवस्वरूपविचारः**

इदानीमद्वैतब्रह्मसिद्ध्युपयोगितया जीवविषयाणि सूत्राणि विचार्यन्ते। तथाहि—वाक्यान्वयादित्यधिकरणे "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः" इत्यादि सूत्राणि जीवस्वरूपप्रतिपादिकानि। तत्रात्मनस्तु कामाय सर्वं प्रियं भवतीत्युपक्रमाद् जीवलिङ्गमुपक्रमेऽवगम्यते। तस्यैव चोपरितनेन "आत्मा वा अरे द्रष्टव्यः" इत्यादिवाक्येन द्रष्टव्यत्वमवगम्यते। तत्र यदि जीवो ब्रह्मणो भिन्नः स्यात्, तदा आत्मनि विज्ञाते सर्वं विज्ञातं भवतीति प्रतिज्ञानोपपद्ये, ब्रह्मणोऽविज्ञातत्वात्। अतः प्रतिज्ञासिद्ध्यर्थं जीवोपक्रम इति आश्मरथ्यस्य मतम्। अस्मिन् मते जीवपरयोर्भेदाभेदौ। मृदघटयोरिव मृत्त्वेनाभेदः, मृत्त्वघटत्वाभ्यां भेदः। जीवब्रह्मणोस्तु चित्त्वेनाभेदः, जीवत्वेश्वरत्वरूपावच्छेदकभेदाद् भेद इति तात्पर्यम्।

'उत्क्रमिष्यत एवंभावादित्यौडुलोमिः' अस्मिन् मते जीवः संसारावस्थायामीश्वराद्भिन्न एव। तस्य ज्ञानध्यानादिसाधनानुष्ठानात् संप्रसन्नस्य देहादुत्क्र-

मिष्यतोऽभेदो भवति। अतः संसारावस्थायामपि भविष्यन्तमभेदमादाय जीवरूपेणोपक्रम इति, तदुक्तम्—

> आमुक्तेर्भेद एव स्याद् जीवस्य च परस्य च।
> मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः॥ इति।

'अवस्थितेरिति काशकृत्स्नः' अस्य परमात्मनो जीवरूपेणावस्थितेरुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्नाचार्यो मन्यते। तथा च श्रुतिः—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति। अत्र च सद् ब्रह्म जीवमात्मशब्देन निर्दिशदभेदं सूचयति, तत्त्वमसीत्यादिश्रुत्यनुसाराच्च। उत्तरत्र चाविभागेन दृष्टत्वादित्यादौ जीवब्रह्मणोरभेदप्रतिपादनाच्च।

**अत्र मतान्तरम्**

अत्र केचित्। अवस्थितेरिति काशकृत्स्नः—इत्यस्य स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थितेः 'जीव'शब्देन ब्रह्मप्रतिपादनम्। जीवशब्दश्च जीवशरीरपरमात्मपर्यन्त इति पूर्वमेवोपपादितम्। अद्वैतिरीत्या औपाधिकस्य भेदस्यापारमार्थिकत्वे कस्यायमुत्क्रान्तौ ब्रह्मभाव इति वक्तव्यम्। ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेत्, नित्यमुक्तस्वप्रकाशज्ञानरूपस्य ब्रह्मणोऽविद्यया तिरोधानासम्भवात्। अतो नित्याविर्भूतस्य ब्रह्मभावे न कश्चिद् विशेष इत्याहुः।

अत्रेदं चिन्तनीयम्—अस्मिन् मते जीवात्मन्यवस्थितेरित्याधाराधेयभावो यः श्रूयते स नाभ्युपगन्तुं शक्यते, अणुषु जीवेषु सर्वगतस्य ब्रह्मण आधेयत्वायोगात्। जीवात्मन्यात्मतयावस्थानमित्यस्य शरीरितयेत्यर्थं इति चेत्, तर्हि शरीरगतदुःखादिकं शरीरिणि स्यात्। इदं शरीरत्व न भोगायतनत्वरूपम्, अपि तु नियामकत्वमात्रमिति चेत्, लोके नियामकेषु शरीरित्वाप्रसिद्धेः श्रुतिगतपदानां पारिभाषिकार्थत्वासंप्रतिपत्तेः। तथा नियामकत्वेन गौणव्यपदेशे सर्वो वेदो गौणतया कदर्थितः स्यादिति। नियामकत्वेनावस्थितिश्च घटपटादावपीश्वरस्य चेतनाचेतनशरीरत्वादिति, यत्तु ब्रह्मणः कथमविद्यावरणमिति तन्मते वा जीवस्य कथं कर्मात्मकाविद्यया तिरोहितस्वरूपस्य मुक्तौ आविर्भाव इति साम्यात्, ईश्वरस्य जीवं प्रत्येवावरणत्वम्, न स्वकार्ये। यथा मेघच्छन्न आदित्ये मनुष्याणामेवादित्यप्रकाशः, सूर्यस्तु प्रकाशत एव। सूर्यभिन्नमनुष्याः सन्ति न तु ते ब्रह्मणो भिन्ना जीवास्सन्तीति चेत्, अनादिजीवा अनाद्यविद्यया विभक्ताः सन्त्येवेति साम्यम्।

"नात्माऽश्रुतेनित्यत्वाच्च ताभ्यः" इति सूत्रं जीवस्योत्पत्तिं निषेधति, सृष्टिप्रकरणेषु तस्य सृष्ट्यश्रवणात्। "न जीवो म्रियते न जायते म्रियते वा विपश्चित्" इत्यादिश्रुतिभ्यो जीवस्य नित्यत्वावगमाच्च।

तस्य ज्ञानरूपत्वम् "ज्ञोऽत एव" इति सूत्रणोक्तम्। अत्र ज्ञः' इति न ज्ञानकर्ताऽभिधीयते, अपि तु ज्ञानमेव, कुतः! अत एव आत्मनो नित्यत्वादेव, नित्यत्वाद्धि तस्य ब्रह्माभिन्नत्वं सिध्यति, अन्यथैकविज्ञानेन सर्वविज्ञानायोगात्। ततश्च ब्रह्मणो ज्ञानरूपत्वाद् जीवोऽपि ज्ञानरूप एव, तस्य ज्ञातृत्वं तु व्यावहारिकं मन उपाधिकृतम्। अत एव 'ध्यायतीव लेलायतीव" इति 'इवंकारानुबद्धा श्रुतिः। न च सुषुप्तौ ज्ञानाभावात् कथं ज्ञानरूपत्वमिति शङ्क्यम्, अत्रोक्तं समाधानं श्रुत्यैव नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात्; न तु तद्द्वितीयमस्ति, ततोऽन्यद्विभक्तं यत्पश्येदिति। एतदुक्तं भवति—विषयसंबन्धाभावादियमचेतयमानता, न तु स्वयमचेतनत्वादिति। सुषुप्तौ जीवः "स्वमपीतो भवति," "इमाः प्रजा अहरहर्ब्रह्म गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन प्रत्यूढाः" इति च श्रुतिभ्यामपि जीवब्रह्माभेदः सिद्धः।

जीवस्य परिमाणविचारार्थानि "उत्क्रान्तिगत्यागतीनाम्" इत्यारभ्य "पृथगुपदेशात्" इत्यन्तानि सूत्राणि पूर्वपक्षसूत्राणि जीवस्याणुत्वविषयाणि। "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति सिन्द्धान्तसूत्रम्। तत्र 'तु' शब्दस्य सिद्धान्तत्वद्योतकस्य सद्भावात्। अत्र तच्छब्देन मनः परामृश्यते। मनश्चोत्तरसूत्रे 'यावदात्मभावित्वाच्च न दोषः' इत्यत्र नित्योपलब्ध्यनुपलब्धिप्रसङ्गसूत्रेऽपि मनस आवश्यकत्वसाधनेन प्रकृतमिति नाप्रकृतपरामर्शः। न चोत्तरसूत्रस्थपरामर्शो न युक्तः तस्य पूर्वप्रकृतपरामर्शित्वनियमादिति युक्तम्। उत्क्रान्तिगत्यागतीनामित्यत्राणुत्वबोधकपदाभावेऽपि नाणुरतच्छ्रुतेरित्युत्तरसूत्रेणाणुत्वनिषेधपरेण पूर्वमणुत्वं साधितमित्यवगन्तव्यत्वात् सर्वमतेऽपि। तदयमर्थः—

तस्य मनसो गुणाः, तद्गुणाः सुखादयः, उत्क्रान्त्यादयश्च, ते सारः प्रधानं यस्य जीवस्य संसारित्वे स जीवस्तद्गुणसारः, तत्त्वात् तस्योत्क्रान्त्यादिव्यपदेशः स्वतस्तु जीवो ब्रह्मैव, तत्त्वमसीत्यादिश्रुतिभ्यः। तस्योत्क्रान्त्यादिकमुपाध्युत्क्रान्त्यधीनमिति च "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि स प्राणमसृजत" इति श्रुत्याऽवगम्यते। तथा चात्रापि न जीवब्रह्मणोरभेदे कश्चिद् दोषः।

जीवस्य कर्मादिकर्तृत्वेनाशुद्धत्वादकर्तृब्रह्माभेदो न संगच्छेत इत्यभिप्रेत्य तस्य कर्तृत्वमप्युपाधिकृतम्, न स्वाभाविकमिति निरूपयितुम् ' कर्ता शास्त्रार्थवत्त्वात्" इत्यादीनि सप्त सूत्राणि। तैर्जीवस्य कर्तृत्वं प्रसाध्य, इदं कर्तृत्वं सोपाधिकम्, न स्वाभाविकमिति यथा च तक्षोभयथा" इत्यधिकरणेन प्रासाधि। यथा तक्षा स्वयमक्रिय एव वास्यादिकरणैश्च तस्य कर्तृत्वम्, तथा जीवः स्वभावतो ब्रह्माभिन्नत्वादकर्तापि मनआदिसमायोगात् कर्तेति तदर्थः। तस्योपाधिधर्माध्यासेनैव कर्तृत्वम्, न स्वाभाविकमिति च "ध्यायतीव लेलायतीव" इति श्रुत्या

सिद्धम्, । ध्यायन्त्यां बुद्धौ ध्यायतीव जीवः, चलन्त्यां बुद्धौ च चलतीव। न स्वभावतो ब्रह्माभिन्नत्वादिति तदर्थः। न च विधिशास्त्रम् 'यजेत दद्यात्' इत्यादिकं जीवस्य कर्तृत्वं प्रतिपादयति, अपि तु स्वाभाविकं कर्तृत्वमनुवदत्यन्यद् यागादिकं विधातुम्।

**अत्र मतान्तरविचारः**

अत्र मतान्तरीयाः "ज्ञोऽत एव" इति सूत्रस्य ज्ञातृत्वमस्य स्वाभाविकमित्यर्थं ब्रुवते। तत्तु 'ध्यायतीव लेलायतीव" इति श्रुतौ 'इव'कारानुबन्धात् तद्विरुद्धं ज्ञातव्यम्। अपि च अत एवेत्युपष्टेभासङ्गतिः, नित्यत्वाभावेऽपि ज्ञानकर्तृत्वसंभवात्। "उत्क्रान्तिगत्यागतीनाम्" इत्यादिसूत्राणि तस्याणुत्वसाधकतया सिद्धान्तत्वेन च व्याकुर्वन्ति केचित्। तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति सूत्रस्य विज्ञानगुणसारत्वादात्मनो विज्ञानमिति व्यपदेश इति च व्याकुर्वन्ति। विज्ञानस्य यावदात्मभाविधर्मत्वात्, तेन तद्व्यपदेशे न दोषः। ननु सुषुप्त्यादिषु ज्ञानाभावान्न तस्य स्वरूपानुबन्धि धर्मत्वम्, अत आह "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्", इति। सुषुप्त्यादावपि अहमर्थः प्रकाशते, तस्य विद्यमानस्यैव विषयसंबन्धो जागर्यादौ, सुषुप्तौ च कर्माख्याविद्यया प्रतिबन्धः। तथा च विद्यमानस्यैव कदाचिदभिव्यक्तिः पुंस्त्वादिवदिति व्याचक्षते।

अत्र च जीवस्याणुत्वे स्वाभाविके "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः" इति गीताविरोधः। एककाले सर्वशरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गः, । संकोचविकासशालिज्ञानाश्रयत्वे च सविकारत्वप्रसङ्गेनानित्यप्रसङ्गः तदुक्तम्—"उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्" इति।

किञ्च 'तद्गुणसारत्वात्तु' इत्यत्र 'तु'शब्दप्रयोगादस्य सिद्धान्तसूत्रत्वं गम्यते। विज्ञानपदेन तस्य व्यपदेशः कथमिति शङ्काव्यावृत्यर्थत्वं तु नातीव मुख्यं प्रयोजनम्, यतो ज्ञानमिति व्यपदेशवदेव विज्ञानमिति, विशिष्टं ज्ञानं विज्ञानमित्यर्थे व्यपदेशोपपत्तेः। विज्ञानगुणत्वेन विज्ञानव्यपदेशः। प्राज्ञस्यानन्दगुणत्वेनानन्दव्यपदेशवदित्युक्तिः पक्षसमा। आनन्दरूपत्वेन ह्यानन्दव्यपदेशो ब्रह्मणि, तद्वद् जीवे विज्ञानरूपत्वेन' विज्ञानव्यपदेशोपपत्तिः इत्थं सूत्रद्वयं विज्ञानगुणसंबन्धसद्भावे प्रमाणमेतन्मते। अद्वैतिनां मते त्विदं बुद्धिसंबन्धादेवात्मनः संसारित्वप्रदर्शनपरमिति विशेषः।

कर्ता शास्त्रार्थवत्त्वादित्यधिकरणसिद्धं कर्तृत्वं न स्वाभाविकम्, अपि त्वौपाधिकमिति निरूपयितुं यथा च तक्षोभयथेति सूत्रमद्वैतमते। एतन्मते त्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वप्रसङ्गवारणाय यथा च तक्षोभयथेति सूत्रम्। तत्र चायं दोषः—कर्तृत्वं नाम क्रियानुकूलशक्तिः, सा च सर्वदा वर्तत एव। विष-

यसंभवे कर्तृत्वं प्रकाशते, तदभावे न प्रकाशत इत्युक्तिः, सुलभा स्वाभाविककर्तृत्वाभ्युपगन्तुः। अत एव तक्षदृष्टान्तो नापेक्षितः। आत्मनः शुद्धचैतन्यरूपता, कतृत्वं चौपाधिकमिति वदतां त्विदं सूत्रं सुतरां संगच्छते। यथा तक्षा स्वशरीरेणाकर्ता वास्यादीनि करणान्यपेक्ष्य कर्ता इत्यर्थाङ्गीकारे आत्मा शुद्धः, तस्य कर्तृशक्तिरपिनास्ति मनआद्युपाधिभिस्तस्य कर्तृशक्तिः कर्तृत्वं चेत्यर्थे सौष्ठवम्।

"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इति सूत्रं जीवब्रह्मणोः संबन्धं प्रतिपादयति। तत्र जीव ईश्वरस्यांशभूतः। इदं चांशत्वम् "यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः, तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" इति मन्त्रे जीवानामग्निविस्फुलिङ्गदृष्टान्तोक्तेस्तन्न्यायेन नेतव्यम्। तत्र यथा विस्फुलिङ्गो महतोऽग्नेरंशः, एवं जीवो महतो ब्रह्मणोंऽश इत्यर्थः। अत्रांशोऽवयवो दृष्टान्ते, दार्ष्टान्तिके तु तत्तदन्तःकरणावच्छिन्नचैतन्यस्याल्पत्वात्, उपाधिभिर्भिन्नत्वाच्चौपचारिकमंशत्वम्, यथा घटाकाशो महाकाशांश इतिवत्। ब्रह्मैव सन् जीव उपाधिना परिच्छिन्न इत्यर्थः। अत एव तस्य पारमार्थिकं रूपं ब्रह्मैवेति सूचकं श्रुतिवाक्यमाह—"दाशकितवादित्वमधीयत एके, ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः" इत्यादि। अनेन च जीवानां ब्रह्मरूपत्वं स्पष्टमेव प्रतीयते।

सूत्रनिबद्धा अंशत्वे युक्तिरप्यद्वैतानुकूला। नानाव्यपदेशादन्यथा चापीति हि पठ्यते। नानाव्यपदेशो भेदव्यपदेश आत्मा द्रष्टव्यः, आत्मानमन्तरो यमयतीत्यादिः। अन्यथा व्यपदेशोऽनानात्वव्यपदेशस्तत्त्वमसीत्यभेदोक्तिः। आभ्यां व्यपदेशाभ्यामंशत्वं जीवस्येत्यर्थः। अत्र न तावदवयवत्वरूपं मुख्यांशत्वं वक्तुमर्हम्, ब्रह्मणो निरवयवत्वात् निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः। अपि त्वेतादृशमेव। अंशत्वे श्रुत्यन्तरं स्मृतिं च प्रदर्श्य सूत्रकारः 'आभास एव च" इति सूत्रेणेदृशमेवांशत्वं श्रुत्याऽभिप्रेतमिति दर्शयति। जीवो ब्रह्मण आभास एव, जलसूर्यकादिवत्। अतः कर्मफलासाङ्कर्यादिकमुपपन्नमित्यर्थः। आभासत्वं च "यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्;

उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति च श्रुत्योः स्पष्टमुक्तम्॥

**मतान्तरविचारः**

अत्र केचिद् जीवस्येश्वरांशत्वं शरीरिभावेन चिदचिद्विशिष्टत्वादीश्वरस्य तद्विशेषणस्य जीवस्येश्वरांशत्वमित्याहुः। यथा विशेषणांश इति। एवं सति शुक्लगुणविशिष्टघटस्य शुक्लगुणोंऽश इति स्यात्। विशेषणस्य विशिष्टांशत्वमौपचारिकम्, न मुख्यम्। अमुख्यांशत्वपरिग्रहे औपाधिकांशत्वस्वीकारे को दोषः? सृज्यत्वनियम्यत्वादिकं त्वद्वैतरीत्यापि निर्वहत्येव। केवलमद्वैतश्रुतीनामन्य-

थाकरणमेव दोषः। "आभास एव च" इति सूत्रस्येत्थं तेषां व्याख्या–ननु भ्रान्तब्रह्मजीववादेऽपि सर्वमेतदुपपन्नमित्यत आह–'आभास एव च" इति। अखण्डैकरसस्य प्रकाशमात्ररूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव। हेत्वाभास एव, न सद्धेतुरित्यर्थः।

अत्रेदमालोचनीयम्—अद्वैतिभिः सर्वं श्रुतिबलेन साध्यते, तत्र हेतवोऽद्वैतिभिरुक्ताः, अभासा इत्युक्तिः कथं घटते? किञ्च, यदि सूत्रकारोऽद्वैतखण्डनार्थत्वेनेदं सूत्रं प्रणीतवान्, तर्ह्यद्वैतसंप्रदायः सूत्रकारेभ्यः प्राचीन इति श्रुतीनामद्वैतप्रक्रियया व्याख्यानं प्राचीनमिति च सिद्धयति। एवं सत्यद्वैतिनः स्वप्रक्रियां बौद्धेभ्य आजह्रुः, प्रच्छन्नबौद्धा इति कथमुच्यते? श्रुत्यर्थ एव केनचिदंशेन बौद्धैः परिगृहीत इति हि वक्तव्यत्वात्। किञ्च मतान्तरखण्डनं चेदभिप्रेते तस्य तर्कपादेऽवसरः नात्र किञ्च, जीवेशावाभासेन करोति. माया चाविद्या च स्वयमेव भवतीति श्रौ प्रयोगे आभासपदमस्ति, तत्समानार्थत्वे सूत्रस्य श्रुत्यैकार्थ्यं भवति, श्रुत्यर्थनिर्णायकत्वात् सूत्राणाम्। अपि च यत्र विषये सूत्रकारस्य विमतिः तत्र स्वयं दूषणविशेष एवोच्यते–परं जैमिनिर्मुख्यत्वात् कार्यं बादरिरस्य गत्युपपत्तेरित्यादौ न तु क्वचिदपि हेतुविशेषमनुक्त्वा सूत्रकारो "हेत्वाभास एव च" इति सम्मुग्धाकारेण ब्रवीति। सूत्रकारसंप्रदायो नैतादृशः। 'स्वपक्षदोषाच्च' इति तु ब्रह्मवादिमते परोक्तदोषाणां विशिष्य परमते आपादनम्, न तु सामान्यरूपेणेत्यदृष्टान्तः।

"अदृष्टानियमात्" इत्यादीनि त्रीणि सूत्राणि बहवो विभवश्चात्मान इति तार्किकपक्षनिराकरणार्थानीत्यद्वैतसम्प्रदायः।

केचित् त्वद्वैतवादेऽप्युपाधिहेतुभूताऽनाद्यदृष्टवशात् सुखदुःखव्यवस्था भविष्यतीति शङ्कावारणार्थमिति व्याकुर्वन्ति। परन्त्वद्वैतिभिरनाद्यदृष्टं नोपगम्यते, अदृष्टस्य धर्माधर्मरूपत्वेन जन्यत्वात्। प्रवाहानादित्वेऽपि तस्योपाधि प्रति हेतुता नोपगम्यते। अन्तःकरणरूपोपाधिस्त्वनाद्यविद्याप्रयुक्त इति वक्तुमुचितम्।

ननु यदि जीवब्रह्मणोरभेदः सूत्रकारसम्मतः स्यात्, तदा "भेदव्यपदेशात्" इत्यादीनि जीवब्रह्मभेदातिपादकानि सूत्राणि कथं संगच्छेरन्निति चेत्, उपासनाविषयविचारेषूपास्यस्वरूपनिरूपणार्थानि खलु तानि सूत्राणि। ततश्चोपासनार्थतया काल्पनिकभेदपराणि। अत एव यत्र पारमार्थिकं स्वरूपं प्रतिपादयिषति सूत्रकारः, तत्राभेदमेव शास्त्रार्थं मन्यते यथा शास्त्रदृष्टिसूत्रे, अत एव "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इति सूत्रेणाभेदपक्षे दोषं प्रसज्य तद्वारणार्थम्, 'अधिकं तु भेदनिदशात्' इति वदन् सूत्रकार ईश्वरस्य जीवाधिकत्वमाह, न त्वन्यत्वम्। अधिकत्वमधिकोपाधिपरिच्छिन्नत्वप्रयुक्तम्, यथा घटाकाशादधिको मठाकाश इति। एवं ब्रह्मसूत्राणि पूर्वापरभावेन विमृश्यमानान्यद्वैतस्यैवानुकूलतराणि दृश्यन्ते।

## तृतीयं प्रवचनम्

# पूर्वमीमांसान्यायानां वेदान्तार्थनिर्णयोपयोगः

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो नमो गुरुभ्यः ।

अद्य वेदान्तार्थनिर्णये पूर्वमीमांसान्यायाः परमोपकारका इतीमं विषयमधिकृत्य यथामति व्याख्यातुमभिलषामि ।

तत्र मीमांसाशब्दो मान पूजायामित्यस्माद्धातोः सन्नन्तान्निष्पन्नो मानेर्जिज्ञासायामिति वार्त्तिकानुरोधाद् जिज्ञासार्थकः, तथा चोभयमेलनेन पूजिता जिज्ञासा पूजितो विचार इत्यर्थः सम्पन्नः । वेदस्य पूजितत्वाद् वेदार्थविचारो मीमांसाशब्दार्थः । अत एव लौकिकधनधान्यादिविचारो न मीमांसापदेन निर्देशमर्हति । वेदगतकर्मकाण्डार्थविचारो महर्षिणा जैमिनिना प्रथमं द्वादशलक्षण्याम्, अनन्तरं चावशिष्टविचारात्मकेऽनेकेषामध्यायानामर्थैः संकीर्णे चतुरध्यायात्मके सङ्कर्षकाण्डे च प्रवर्तितः ।

जैमिनिना च "अथातो धर्मजिज्ञासा" इत्यनेन वेदाध्ययनानन्तरं धर्मविचारस्यैव प्रतिज्ञा कृता । तदनुसारेण च चोदनासूत्रे विधिज्ञाप्यस्यैव धर्मत्वमवधारितम् । "तस्य निमित्तपरिष्टिः" इति तृतीयसूत्रे च धर्मप्रमाणमेव परीक्ष्यत्वेन प्रतिज्ञातं परीक्षितं च । इत्थं च द्वादशाध्याय्यां संकर्षे च केवलं धर्ममेव विममर्श भगवान् जैमिनिः । संकर्षस्य देवताकाण्डमिति नामान्तरं तु कर्माङ्गदेवताविचाराणामत्र बहुलमुपलम्भादिति समादध्युः श्री-अप्पयदीक्षिताः स्वकृते परिमले । उपनिषदर्थविचारश्च न कृतो जैमिनिना । अत एव भट्टाचार्याः "दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन" इत्यात्मवादान्ते वदन्तः कर्मविचारमात्रेण न कृतार्थतेति वेदान्तविचारः पृथगावश्यक इति च सूचयामासुः ।

"अथातो ब्रह्मजिज्ञासा" इत्यारभ्य कृतो ब्रह्मविचारः कर्मविचारेण सहैकं शास्त्रमिति केषाञ्चित् पक्षः । पृथक् शास्त्रमिदमिति तु भगवत्पादाः । कुतः ? चोदनाविषयाणामर्थानां विचारस्तत्र संवृत्तः ? ब्रह्म तु न चोदनाविषयः, सिद्धरूपत्वात् । यदि ब्रह्मोपासनमेव मानसक्रियात्मकमुपनिषत्सु विधीयत इत्यास्थीयेत, तदा सर्वस्यापि विधेर्धर्मजिज्ञासया गतार्थत्वाद् "अथातो ब्रह्मजिज्ञासा" इति पृथक् शास्त्रं नारभ्येत । आरभ्यते तु तस्मादिदं पृथक् शास्त्रमेव । किञ्च, तत्र वेदाध्ययनवत एवाधिकारः । अत्र तु साधनचतुष्टयसम्पन्न एवाधिकारी, नाध्ययनमात्रवान् । शमदमाद्युपेतः स्यादिति शमदमादीनामावश्यकत्वस्य सूत्रेणैवोपरिष्टान्निर्देशात् । अधिकारो हि फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम्, तादृशं कर्तृत्वं

साधनचतुष्टयसम्पन्नानामेव भवेत्। वेदार्थज्ञानवतो मुख्याधिकारस्तु साधनचतुष्टया-भावे पूर्वकाण्डार्थनिर्णयवतोऽपि असंभवि, फलाप्राप्तेः न च पूर्वकाण्डेन कर्मवि-चारयतो वैराग्यं संभवतीति नियन्तुं शक्यम्, तत्र कर्मफलानित्यत्वबोधकानां 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेव अमुत्र पुण्यचितो लोकः क्षीयते' इत्यादिवाक्यानामुपनिषद्गतानामविचारणात्। यदि कस्यचिज्जायेत, तदा तद्जन्मान्तरीयनिष्कामकर्मानुष्ठानवशादेव जायत इति वैराग्यमेव कारणमित्युक्तं भवति। तच्च कर्मविचाराद्वा भवतु, अस्मिन् जन्मनि विचाराभावेऽपि जन्मान्तरा-नुष्ठितकर्मभिरेव भवत्विति कर्मविचारः कुलालपितृवदन्यथासिद्धो ब्रह्मविचारे।

यत्तु नित्यानित्यवस्तुविवेकादिकं नाधिकारो ब्रह्मनित्यत्वप्रपञ्चानित्यत्वादेः न वियदश्रुतेः", "असंभवस्तु सतोऽनुपपत्तेः" इत्याद्यधिकरणेष्वत्रैव व्यवस्थापनी-यतया ब्रह्मविचारपूर्वभावित्वानुपपत्तेरिति दूषणं द्वैतविशिष्टाद्वैतशुद्धाद्वैतभाष्य-कारैरुपक्षिप्तम्। तत्रेदं समाधानमाहुः—सुहृद्भिराप्तैरुपदिष्टनित्यानित्यवस्तुवि-वेकेन ब्रह्मविचारे प्रवर्तते पुरुषः, विचारेण च तस्य निर्णयो भविष्यतीति। अत एव सर्वेषामप्यपशूद्राणां ब्रह्मविचारेऽधिकार इत्याप्तमुखेनावधार्यैव ब्रह्मविचारे स्वयं प्रवृत्तिः। विचारेण च स्वयं स्वाधिकारस्य निर्णयः संपद्यते। अत एव च वेदाध्ययनं नित्यवत् कर्तव्यमित्याप्तमुखाच्छ्रुत्वा अध्ययने प्रवृत्तिः। अध्ययनानन्त-रम् "स्वाध्यायोऽध्येतव्यः" इति वाक्येन तत्कर्तव्यतायाः पश्चादवगम उपपद्यत इति संप्रतिपन्नम्। अत एव यद्याप्तवाक्याद् नित्यानित्यवस्तुविवेकादिकं ज्ञायेत, तर्हि सर्वोऽपि ब्रह्ममीमांसार्थं आप्तमुखादेव ज्ञायताम्, मास्तु वेदान्तविचार इत्याक्षेपः प्रत्युक्तः, आप्तमुखादवगमेऽपि निर्णयार्थतया विचारावश्यंभावात्।

यत्तु ये ये वेदान्तार्थविचारात्मकं शास्त्रं पठितुमिच्छन्ति, तेषां सर्वेषामेवा-धिकारः 'अथ' शब्दस्यारम्भार्थत्वाङ्गीकारादिति वल्लभाचार्याणां मतं तत्र शमद-मादिरहितानां फलाभावात्, फलभोक्तृत्वसहितकर्तृत्वाभावादनधिकारः स्पष्ट एव। उद्दिष्टफलं विगणय्य, ख्यातिलाभार्थं वेदान्तविचारस्तु न केनापि प्रतिषेद्धुं शक्यते। अधिकारस्तु फलप्राप्तिगर्भितः साधनचतुष्टयसम्पन्नानामेवेति भगवत्पादा-भिप्रायः।

अत एवेद पृथक्शास्त्रम्। अस्मिन् शास्त्रे व्युत्पाद्यमानाः सिद्धब्रह्मपर-वाक्यार्थनिर्णायकन्यायाः पूर्वतन्त्रव्युत्पादितेभ्यः कर्मपरवाक्यार्थनिर्णायकेभ्यो न्यायेभ्यो विलक्षणाः। अत एव न पूर्वतन्त्रेण गतार्थाः। यत्र तु पूर्वतन्त्रन्याय एव व्युत्पाद्यते, यथा "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति पूर्वतन्त्रद्वितीयचतुर्थ-पादगतशाखान्तरन्यायस्य पुनर्व्युत्पादनम्, तत्राप्यगतार्थत्ववचनाय 'भेदान्नेति चेन्नैकस्यामपि' इत्यधिकशङ्कामुपक्षिप्यागतार्थत्वमापादयति। एवं चास्मिन् स्वतन्त्रे

वेदान्तशास्त्रे पूर्वमीमांसान्यायाः कया रीत्या वाक्यार्थनिर्णय उपकुर्वन्तीति विचारणीयम् ।

तत्र ब्रह्मसूत्रकारा व्यासाचार्यास्तावत् पूर्वमीमांसासूत्राणि बहूनि स्वसूत्रेषु निबध्नन्ति स्वोक्तार्थसमतिप्रदर्शनव्याजेन ।

**व्यासाचार्याणां मीमांसान्यायसंचारः**

तथाहि - "हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम्" इत्यस्मिन् तृतीयतृतीयपादगतसूत्रे श्रुत्यन्तरगतं विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्र विकल्पः प्रसज्येत । विकल्पश्चाष्टदोषदुष्टः, स च सत्यां गतौ नाभ्युपेतव्य इत्ययं विषयो जैमिनेरपि सम्मतः । 'अपितु वाक्यशेषत्वादितरपर्युदासः स्यात्' प्रतिषेधे विकल्पः स्यात्' इति दशमाध्यायसूत्रे विकल्पस्य दुष्टत्वाभिधानादित्युक्तम् । प्रकृते च यत्र सुकृत-दुष्कृतयोस्त्याग उच्यते "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य" इत्यादौ ( छान्दोग्ये ) तत्र परैरुपायनमप्युपतिष्ठते, "प्रिया ज्ञातयः सुकृतमुपयान्ति, अप्रिया दुष्कृतम्" इति शाटचायनिभिः पठितत्वात्, तस्यास्य चैकवाक्यत्वादिति निर्णीतम् ।

एवं तत्रैव "अक्षरधियां त्ववरोधः" इत्यस्मिन् सूत्रे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इत्यधिकरणमनुरुध्य अक्षरतन्त्रत्वात् तद्विशेषणानां यत्र क्वापि शाखायां विद्यमानानि विशेषणान्यक्षर उपसंहार्याणीत्युक्तम् । प्रदानवदेव तदुक्तमित्यधिकरणे संकर्षकाण्डीयनाना वा देवता पृथग् ज्ञानादित्यधिकरणं दृष्टान्तीकृत्य "वायुर्वाव संवर्गः, प्राणो वाव संवर्गः" इत्युभयत्रोपासनाप्रयोगभेदः सिद्धान्तितः । यथा "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराजे" इत्यत्र त्रिपुरोडाशिन्यामिष्टौ राजादिगुणभेदात्, याज्यापुरोऽनुवाक्याव्यत्यासविधानाच्च यागभेद इत्युक्तम् ।

लिङ्गभूयस्त्वाधिकरणे श्रुतिलिङ्गसूत्रेण प्रकरणापेक्षया लिङ्गप्राबल्यात् पूर्वपक्षं कृत्वा विद्यैव तु निर्धारणादिति सिद्धान्त उक्तः ।

सन्यासाश्रमोऽस्ति, न वेति सन्देहे "त्रयो धर्मस्कन्धा यज्ञः, अध्ययनम्, दानमिति । प्रथमस्तप एव, द्वितीयो ब्रह्मचार्याचार्यकुलवासी, तृतीयः सर्व एते पुण्यलोका भवन्ति 'ब्रह्मसंस्थोऽमृतत्वमेति" इति वाक्ये ब्रह्मसंस्थताया इतराश्रमेष्वसंभवात् सन्यासिनामेव सम्भवादत्रैव सन्यास विधिरङ्गीकृतः, धारणवदिति सूत्रांशेन । यथा– "अधस्तात्समिधं धारयन्ननुव्रजेत्, उपरि हि देवेभ्यो धारयति" इत्यत्र दैवाग्निहोत्र उपरिधारणविधिरङ्गीकृत इति दृष्टान्तार्थः ।

अन्यान्यप्यधिकरणानि वेदान्तार्थनिर्णयायापेक्षितानि, उदाहरिष्यामः ।

**शब्दादेव प्रमितः**

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य स एवाद्य स उश्वः ॥

इति काठकवाक्येऽङ्गुष्ठमात्रपरिमाणं जीवमुद्दिश्येश्वराभेदो विधेयतया श्रूयमाणो न संगच्छते, विशिष्ट ईश्वराभेदासम्भवात् । विधेयानुसारेणोद्देश्य-विशेषणस्याङ्गुष्ठमात्रत्वस्योपमर्दायोगादिति पूर्वपक्षस्याप्यग्निष्टोमाधिकरणन्यायेन समाधानं कृतम् । तथाहि तात्पर्यविषयविधेयानुरोधेनोद्देश्योपमर्दोऽपि शास्त्रे दृश्यते । यथा— "अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्" इत्यत्र राजन्यकर्तृकत्वे निमित्ते षोडशिग्रहयागाभ्यासविधौ यथाश्रुतेऽग्निष्टोमसंस्थाकक्रतौ षोडशिसंस्थावि-धाने विरोधः, क्रतुप्रयोगवृत्तिस्तोत्रोपरमो हो संस्था, ततश्चाग्निष्टोमसंस्थः क्रतुः कथं वा षोडशिसंस्थः स्यात् ? अतोऽयमर्थः - राजन्यो यदा यजमानः, तस्या-ग्निष्टोमसंस्थो यः क्रतुः प्राप्तः स न तथा कर्तव्यः, अपि तु षोडशिसंस्थः कर्तव्य इति । तथा चात्र यथा तात्पर्यविषयविधेयानुरोधेनोद्देश्यस्वरूपोपमर्दः क्रियते, तथा अंगुष्ठमात्रो यो जीवः स तथा न मन्तव्यः, अपि तु भूतभव्येशितृसर्वव्यापि-परमात्माभिन्न इति । यद्यप्यत्र वाक्यार्थे भूतभव्येशितृत्वमपि त्यक्तव्यमेव शुद्धस्यैवा-भेदे तात्पर्यात्, तथापि न दोषः, ब्रह्मलिङ्गानुरोधेन जीवलिङ्गोपमर्देदृष्टान्तोपप-त्तेरिति ।

**प्रत्यक्षस्य शास्त्रबाध्यत्वम्**

'घटः सन्' इत्यादेर्घटादीनां सत्त्वग्राहिणः प्रत्यक्षस्य "नेह नानास्ति किञ्चन" इति शास्त्रेणोपमर्दमङ्गीकृत्य प्रत्यक्षस्य व्यावहारिकसत्त्वविषयकत्वमङ्गीक्रियते । तत्रोपजीव्योपमर्दापेक्षयोपजीवकस्य शास्त्रस्यैवोपमर्दो लाक्षणिकार्थपरत्वरूपः कर्तुं शक्यते । तथा च नेह नानास्तीत्यादेः प्रपञ्चसत्त्वाविरोध्यर्थो ग्राह्य इति पूर्वपक्षे इतर-मन्य इति तार्तीपन्यायाद् हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गादिति दाशमिकन्यायाच्च समाधानमुच्यते । तत्र कुण्डपायिनामयने "यो होता सोऽध्वर्युः" इत्यनेनाध्वर्युकर्मणि होतुः कर्तृत्वेन विधौ यूपपरिव्याणकाले 'परिवीरसि,' युवासुवासा' इत्यनयोः क्रियमाणानुवादिकरणमन्त्रयोः यथाक्रममध्वर्युणा होत्रा च प्रयोज्ययोरेककाले च प्रयोज्ययोर्होत्राकर्तुमशक्यत्वात् । अन्यतरबाध आवश्यके सति प्रत्यक्षश्रुतिविधीय-मानाध्वर्युकर्मबाधायोगात्, आनुमानिकप्रकृतिबच्छब्दप्राप्तहोतृकर्मबाधः । अत्र यो होता सोऽध्वर्पुरिति वचने होतुः प्राप्तिः प्रकृतिवच्छब्देन तत्कर्मप्राप्तिरपि तथैव तथा चाऽस्य वचनस्य प्रत्यक्षवचनत्वमिति कृत्वोपजीव्यं यत् प्रकृतिवद्विकृतिः कर्तव्या' इति वचनम्, तस्य बाधो होतृकर्मविषये संकोचरूपोऽङ्गीकृतः । 'हिरण्यगर्भः समवर्ततताग्रे' इत्याघारमाघारयतीति वायव्यपशौ अयं मन्त्रः प्रजापतिदेवताके अमन्त्रे प्रथमाघारे प्रयोक्तव्यः, उत मन्त्रवति द्वितीयाघारे इति विचारे हिरण्यगर्भस्य

प्रजापत्यभिन्नत्वेन प्रथमाघार औचित्ये सत्यपि द्वितीयाघार मन्त्रनियमादृष्टस्य क्लृप्तत्वात् प्रथमे तदभावात् तदकल्पनप्रयुक्तलाघवानुरोधाद् द्वितीये मन्त्रनिवेश उक्तः। अत्रापि लाघवानुगृहीतस्योपजीवकस्य प्राबल्याद् उपजीव्यमन्त्रे क्लिष्ट-लक्षणा स्वीकृता हिरण्यगर्भमन्त्रस्य इन्द्रपरतया व्याख्येयत्वात्। एवमिहपि षड्विध-तात्पर्यलिङ्गोपेताद्वैतश्रुतिप्राबल्यात् प्रत्यक्षस्य व्यावहारिकविषयत्वकल्पनरूपो बाधः सोढव्य इति।

अत्रैव प्रथमप्रवृत्तत्वेन असञ्जातविरोधित्वेनोपक्रमन्यायात् प्रत्यक्षप्राबल्य-मिति पक्षोऽप्यपच्छेदन्यायस्यैवात्र प्रवृत्तिमुपपाद्य निराकृतः।

पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥

इति सिद्धान्तात्।

अत्र च प्रत्यक्षशब्दयोः स्वकार्ये निरपेक्षत्वेनापच्छेदन्यायप्रवृत्तिः। किञ्चैक-वाक्यस्थपरस्परसापेक्षपदत्वेनोभयोः साम्ये सत्युपक्रमस्थवेदपदानुरोधेनोपसंहारस्थ-ऋगादिपदानां मन्त्रवाचिनामत्र वेदपरत्वं निर्णीयते। प्रकृते तु तन्न्यायो न भवति, उभयोः साम्याभावात्। गृहीतप्रामाण्याकश्रुत्यपेक्षया भ्रमविलक्षणत्वेनानिर्णीतस्य प्रत्यक्षस्य दुर्बलत्वात्, अन्यथा 'इदं रजतम्' इति भ्रमोऽपि इयं शुक्तिः' इत्याप्तोपदे-शापेक्षया प्रबलः स्यात्।

एवं 'यदाहवनीये जुहोति' इति सामान्यवाक्यस्य पदे जुहोति' इति विशेष-वाक्येन बाधवत् घटसत्त्वग्राहिविशेषप्रत्यक्षेण 'नेह नानास्ति किञ्चन' इति सामान्यतो द्वैतमिथ्यात्वबोधकश्रुतिबाधो भवत्विति शंका न संभवति, सामान्य-विशेषन्यायो हि निश्चितप्रमाणकोभय स्थले प्रकृते च प्रत्यक्षस्य प्रामाण्यमनिश्चित-मिति समाधानम्।

अथातो ब्रह्मजिज्ञासा' इत्यत्र बन्धस्याध्यासात्मकत्वं प्रदर्शते। यद्यपि 'तदन-न्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र प्रपञ्चसामान्यस्याध्यासात्मकत्वं साधयिष्यते, तत एव च बन्धस्याप्यध्यासात्मकत्वं सिध्यतीति नेह प्रदर्शनीयमिति शङ्का पूर्व-मीमांसान्यायमुपजीव्यैव निराक्रियते। तथाहि—तत्र 'अथातो धर्मजिज्ञासा' इत्यधि-करणे 'कर्म वा विधिलक्षणम्' इति नवमाध्यायद्वितीयपादाधिकरणसिद्धं यदध्ययन-स्यार्थज्ञानार्थत्वं तदेव शास्त्रारम्भोपयोगितयां स्मर्यते। एवं नवमे 'यज्ञकर्मप्रधानम्' इति नवमप्रथमाधिकरणं सप्तमाध्यायसिद्धस्य धर्माणामपूर्वार्थत्वस्य स्मरणार्थम्। एवमेव ब्रह्मजिज्ञासासूत्रे तदनन्यत्वाधिकरणे व्यवस्थापयिष्यमाणबन्धमिथ्यात्वमेव स्मर्यते शास्त्रारम्भोपयोगितयेत्येवं परिहारः।

'आकाशस्तल्लिङ्गात्' इत्यत्र लिङ्गेन श्रुतिबाधः स्वीकृतः। प्रकृते लिङ्गं जगदुत्पत्तिस्थितिलयाधारत्वम्, तेनाकाशश्रुतिर्भूताकाशे रूढा बाध्यते ब्रह्मपरतया

नीयते; तत्कथं ? श्रुतिलिङ्गाधिकरणे हि लिङ्गापेक्षया श्रुतेः प्राबल्यस्य सिद्धान्तितत्वादिति शङ्का । तस्य पूर्वतन्त्ररीत्या समाधानम् । पूर्वतन्त्रे ह्यनन्यथासिद्धं लिङ्गमन्यासिद्धश्रुतिबाधकमङ्गीकृतम् । यथा 'हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनावद्यति' इत्यत्र हस्तस्रुवस्वधितीनामवदानसामान्यसाधनत्वश्रवणेऽपि हस्तादिगतसामर्थ्यरूपेणानन्यथासिद्धेन लिङ्गेन संकोचसहिष्णूनामवद्यतिश्रुतीनां पुरोडाशावदान-कठिनद्रव्यावदान–आज्यावदानपरतया संकोचरूपो बाधः स्वीकृतः । यथा वा 'कृष्णलं श्रपयेत्' इत्यत्र कृष्णलेषु स्वर्णखण्डेषु विक्लेदनफलकव्यापारासंभवात्, तत्रत्याधिश्रयणादिव्यापारस्योष्णीकरणमात्रे सामर्थ्यात्, वस्तुसामर्थ्यरूपेणानन्यथासिद्धलिङ्गेन श्रपणश्रुतेरुष्णीकरणे लक्षणा । आकाशवाक्ये चानन्तत्वलिङ्गं तात्पर्यवत्, अन्तवत्त्वदोषपरिहारार्थत्वेन वाक्यप्रवृत्तेः ।

अत्रैव ब्रह्मलिङ्गानां बहूनामनुरोधेनैकस्याकाशश्रुतेर्बाधः 'विप्रतिषिद्ध-धर्मसमवाये भूयसां स्यात् स्वधर्मत्वम्' इति द्वादशाधिकरणन्यायमनुरुध्य स्वीकार्यः । तत्रैव प्रधानविरोधे बहूनामप्यन्यथाकरणं संभवति 'द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात्' इति न्यायात् । तथाहि—यत्र पशुयागे मुख्यः खदिरश्छेदनाद्यसमर्थो नियोजनमात्रसहो लब्धः, कदरस्तु प्रतिनिधितया स्वीकृतो तक्षणछेदनादिसकलसंस्कारसमर्थः, तत्र पशुनियोजनमात्रसमर्थत्वे खदिरस्य स एव ग्राह्यः, प्रधानार्थत्वादङ्गानां लोपेऽपि न क्षतिरिति न्यायः षष्ठे । तेन न्यायेन आकाशश्रुतेः प्राथम्येन बहूनां लिङ्गानां बाधो भवत्विति शङ्का अनन्तत्वलिङ्गस्य तात्पर्यवत्त्वमादायैव निराक्रियते ।

एवं "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते', इत्यत्रैवकार इतरव्यवच्छेदार्थकः स्वसजातीयमेव मूलकारणान्तरं व्यवच्छिनत्ति । यथा— गृहमेधीये आज्यभागौ यजतीत्यनेनावधारणार्थलक्षकेण स्वसजातीयं यागान्तरमेव व्यवच्छिद्यते' इत्युक्तं परिसंख्यापक्षे ।

एवमुपक्रमे यत्र कश्चिद् दोषं संकीर्त्य तत्परिहारेणोपसंहारः, तत्र तन्मध्यगतवाक्येषु यथा अर्थाभ्युपगमेन तत्समाधानं भवति, तथा यतितव्यं प्रतिपादनीयस्यान्यशेषत्वाभावे, यथा—' जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति विष्णुरुपांशुयष्टव्योऽजामित्वस्य" इत्यस्मिन् वाक्यसन्दर्भेऽन्तरा वाक्ये यागविधान एव दोषपरिहारो भवति, न तु विष्ण्वादिवाक्ये तद्विधाने, इत्यतस्तत्रैव यागविधिः स्वीकृतः । तस्यान्यशेषत्वे तु नायं निर्बन्धः, यथा "यद् ग्राम्याणां पशूनां पयसा जुहुयात्, ग्राम्यान् पशून् शुचार्पयेत्, यदारण्यानामारण्यान्, जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा वा, न ग्राम्यान् पशून् हिनस्ति नारण्यान्" । अत्र पशुहिंसादोषमापाद्य पयस आहुतिद्रव्यत्वं पराकृत्य जर्तिलादीनां द्रव्यत्वमुपक्षिप्तं तत्तु नाङ्गीक्रियते, यतस्तदनन्तरम् "अथो खल्वाहुः अनाहुतिर्वै

जर्तिलाश्च गवीधुकाश्चेति पयसाग्निहोत्रं जुहुयादिति जर्तिलादीनामहोम्यत्वं प्रतिपाद्य, पयोविधिरेवाङ्गीकृतः। अतः सर्वोऽयं पयोविध्यर्थवादः। तद्वदेवाकाशवाक्ये मध्ये सुवर्गस्याप्रतिष्ठितत्वप्रतिपादनेन सामकारणपरम्पराविश्रान्तिभूमित्वयोग्यं न भवतीति पृथिव्याः प्रतिष्ठितत्वेन तथात्ववर्णनं, न स्वार्थपरम् अपि तु तस्या अपि दूषणेनानन्ते आकाशाख्ये ब्रह्मणि परिसमाप्तिपरमिति निर्णीयते।

'प्राणस्तथानुगमात्' इत्यधिकरणे 'येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थः" इति न्यायात् "त्वमेव मे ब्रूहि यं त्वं मनुष्याय हिततमं मन्यसे" इत्युपक्रमे "प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः" इत्युपसंहारे च ब्रह्मणः प्रतिष्ठितत्वात् प्रबलप्रमेयाश्रितं ब्रह्मवाक्यं दुर्बलप्रमेयाश्रिताद् जीवमुख्यप्राणविषयश्रुत्यादितः प्रबलम्, प्रमाणस्य स्वरूपप्रयुक्तबलादपि प्रमेयाश्रयबलस्याधिक्यात्।

अयं न्यायः पूर्वमीमांसागतशिष्टाकोपाधिकरणमुपजीव्य प्रवृत्तः। तत्र हि 'क्षुते आचामेत्' इति स्मृतेः स्मृतित्वेन दुर्बलाया अपि प्रबलपदार्थाश्रितत्वेन 'वेदं कृत्वा वेदिं करोति' इति पदार्थगुणभूतक्रमाश्रितश्रुत्यपेक्षया प्राबल्यमुक्तम्।

'सर्वत्र प्रसिद्धोपदेशात्' इत्यधिकरणे 'मनोमयः प्राणशरीरो भारूपः' इत्यादौ ब्रह्मण उपस्थितिर्विश्वजिन्न्यायादिति सिद्धान्तितम्। यथा विश्वजिद्विधिना तस्य समान्यत इष्टसाधनत्वविधौ इष्टविशेषाकांक्षायां सर्वाभिलषितः स्वर्ग इष्टविशेषतया बुद्धिसन्निहितो भवति, तथा उपासनाविधिना सामान्यत उपास्यसिद्धौ तद्विशेषाकांक्षायां मनोमयादिवाक्यात् स्वरसतस्सिद्धस्य जीवस्योपास्यत्वानुपपत्तौ सर्वाभिलषितसत्यसङ्कल्पादिगुणविशिष्टतया सर्ववेदान्तप्रसिद्धं ब्रह्मैवोपास्यविशेषतया बुद्धिसन्निहितं भवति। जीवस्य सन्निहितत्वेन रात्रिसत्रन्यायविषयत्वेऽपि तदुपासनस्य निष्फलतया तत्त्यागः।

'अन्तर उपपत्तेः' इत्यधिकरणे "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्म" इत्यत्र "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच" इत्यत्र पुरुषपदसमर्पितचेतनत्वलिङ्गादक्षिण्युपास्यत्वेनाभिमतः पुरुषः परमात्मेति निर्णीतम्। तत्रेयमाशङ्का "चतुरो मुष्टीन्निर्वपति" इत्यत्र बार्हस्पत्यश्चरुः पञ्चदश शरावो भवतीति विकृतिविशेषेऽतिदेशप्राप्तस्य चतुष्ट्वमुष्ट्यन्यतरबाधेऽङ्गीकर्तव्ये प्रथमश्रुतत्वात् चतुष्ट्वप्राबल्यम्, मुष्टिबाधश्चाङ्गीकृतः। तद्वत् य एषोऽक्षिणि पुरुषः' इत्यत्र पुरुषापेक्षया प्रथमतरश्रुतम् 'य एषः' इति पदाभ्यां बोधितं प्रसिद्धवस्तु ग्राह्यम्, तच्च प्रतिबिम्ब एव, स एव चात्रोपास्य इति। तत्रेदं समाधानं चतुर इत्यनेन सख्याविशेषाभिधानेन चतुष्ट्वनिर्णयस्य प्रथमं जायमानत्वात् तत्र तन्न्यायः प्रवर्तताम्, अत्र तु य एष इत्यनेन प्रसिद्धवस्तुविशेषो न प्रतिपाद्यते, अतः पाश्चात्यमपि पुरुषपदमेव प्रबलमिति।

दहराधिकरणे "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन् अन्तराकाशः, तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्यत्र 'तस्मिन् यदन्तः' इत्यत्र तच्छब्देन हृदयपुण्डरीकं ग्राह्यम्, न तु दहराकाश इति व्यवहृतं श्रीवाचस्पतिमिश्रैः, तत्र तच्छब्दस्याव्यवहितं दहराकाशमतिलङ्घ्य व्यवहितहृदय-पुण्डरीकपरामर्शकत्वं कथं घटत इति शङ्कायां मीमांसान्यायमुदाहरन्ति। तच्छब्द-स्याव्यवहितपरामर्शित्वे संभवति तदेव ग्राह्यम्, तदसंभवे व्यवहितपरामर्शित्वमपि। यथा साकमेधे "एतद्ब्राह्मण एककपालः यद्ब्राह्मण इतरः" इति वाक्ये श्रुतमेतत्पदं सन्निहितं वारुणप्राघासिकमेककपालं परामृशति संभवात् "गौश्च तस्य द्वादशशतं दक्षिणा' इत्यत्राश्वाश्वतरादिव्यवहितां गामेव तच्छब्दः परामृशतीत्यभिप्रायः।

देवताधिकरणे मन्त्रार्थवादानां विध्येकवाक्यतयाऽन्वयेऽपि तेषां स्वस्वार्थेऽपि प्रामाण्यमस्तीति देवताविग्रहादिकम् "अभून्नो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा," "वज्रहस्तः पुरन्दरः" इत्यादिमन्त्रैः साध्यते। यद्यपि मीमांसका देवताविग्रहादिकं न स्वीकुर्वन्ति, तथापि मीमांसकसिद्धन्यायैरेव वेदान्तिभिर्देवता-विग्रहादिकं साध्यते। तथाहि—यत्र मन्त्रवाक्यमपूर्णं तत्र 'याते अग्नेऽयाशया रजाशया' इत्यादौ अनुषङ्गः स्वीकृतः। अविशिष्टस्तु वाक्यार्थः 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात्' इत्यादिनैकार्थप्रतिपादकमेकं वाक्यमेकं यजुरिति तल्लक्षणं वदन्ति। अर्थवादवाक्यानां यत्राऽर्जवेनार्थवत्त्वं न प्रतीयते 'तस्माद् धूम एवाग्नेर्दिवा ददृशे' इत्यादौ, तत्र शास्त्रदृष्टविरोधादयः परिहृताः, तदर्थप्रतीतये तत्सिद्धिजात्यादयो गौणीनिमित्तभेदाः प्रदर्शिताः, स्वर्गशब्दस्य—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

इत्यर्थवादादेवार्थो निर्णीतः। किं बहुना, कृत्स्नमपि पूर्वतन्त्रमर्थवादादिक-मुपजीव्यैव प्रवृत्तम्, अतो मन्त्रार्थवादप्रतिपादितदेवताविग्रहादेः सद्भावे कानुपपत्ति-रिति मीमांसान्यायेनैव साधयामः।

'चमसवदविशेषात्' इत्यधिकरणे 'अजा'शब्दस्य "अजामेकां लोहितशुक्ल-कृष्णाम्" इति मन्त्रगतस्य वृत्तिविचारे न जायत इति योगवृत्तिर्नाङ्गीकार्या, गौण्येव तु स्वीकार्येत्यत्रोद्गातृचमसमेकस्य श्रुतिसंयोगादित्यधिकरणमेवोदाह्रियते। तथाहि—"प्रैतु होतुश्चमसः प्रब्रह्मणः, प्रोद्गातॄणां प्रयजमानस्य" इत्यत्रोद्गातृशब्दे-नोच्चैर्गायन्तीत्युद्गातार इति योगेन गानकर्तॄणां चतुर्णामुद्गातृप्रस्तोतृप्रतिहर्तृसु-ब्रह्मण्यानां ग्रहणम्, उत सदःप्रवेशवतामुद्गातृसंबद्धानां त्रयाणां रूढिपूर्वकलक्षणया ग्रहणमिति सन्दिह्य, प्रथमप्रतीता रूढिः तत्पूर्वकलक्षणा च तत्समनन्तरमेवोपस्थिता भवतीति तस्या एवाङ्गीकारो युक्तः, न तु जघन्यो योग इत्यङ्गीचक्रुर्वेदान्तिनः।

एवं 'न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च' इत्यधिकरणे 'यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः' इति मन्त्रे पञ्च पञ्चेति पञ्चविंशतिसंख्याक-सांख्यतत्त्वानि नाभिधीयन्ते, अपि तु 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति समनन्तरमन्त्रोक्तप्राणादय एवाभिप्रेता इति वक्तुं सूत्रम् प्राणादयो वाक्यशेषात् इति। अत्र पञ्चजनवाक्यस्य प्राणवाक्यं न शेषो विध्यर्थवादन्यायेन, अपि तु आधानदक्षिणाकल्पेषु 'एका देया षड् देयाः शतं देयं सहस्त्रं देयम् अपरिमितं देयम्' इत्यत्र अपरिमितवाक्यस्य प्रतियोगिसमर्पकतया सहस्रवाक्यमिव सन्निधानमात्रेणाकांक्षितमर्थं समर्पयन् शेष इव भवतीति भावेन वाक्यशेषादित्युक्तम्। श्रुतावपि—'पर्यग्निकृतं पात्नीवतमुत्सृजति, आज्येन शेषं संस्थापयति' इत्यत्र आज्ययागः स्वतन्त्रोऽपि पात्नीवतयागस्य शेष इव भवति। तदनन्तरं क्रियमाणत्वादित्यभिप्रेत्य शेषशब्दः प्रयुक्तः। त्वाष्ट्रं पात्नीवतमालभेत' इत्यत्र विहितः पशुयागः पत्नीवद्देवताकः, तत्र च पर्यग्निकृतं पात्नीवतमुत्सृजती-त्युक्तम्। अनेन पात्नीवतयागः। पर्यग्निकरणान्तान्यङ्गानि कृत्वा समापनीय इत्युक्तं भवति। तत्र च यदि प्रधानयागो न क्रियेत, तदा 'त्वाष्ट्रं पात्नीवतम्' इति विधि-वाक्यश्रुतो द्रव्यदेवतासंबन्धो नानुष्ठितः स्यात्, पर्यग्निकरणेन समापने प्रधान-यागस्य वपादिभिः क्रियमाणस्याननुष्ठानात्। अत एवमभिप्रायः - पर्यग्निकरणं कृत्वा पशुरुत्स्रष्टव्यः, यागस्तु देवतोद्देशेन द्रव्यत्यागरूपो मनसा वाचा च कर्तव्य एव त्वष्ट्रे पत्नीवते इदम्, न ममेति। क्षीरनीरविवेचनसमर्था देवता स्वयमेव जीव-त्पशुसकाशात् सारं ग्रहीष्यति—इति। तत्र च याग आज्यद्रव्यस्यानुपयोगात् 'आज्येन शेषं संस्थापयति' इत्यत्र श्रुत आज्ययागो यागान्तरमेव, परं तु पशुयागा-नन्तरं क्रियमाणत्वात् तच्छेष इव भातीत्यभिप्रायेण तत्र शेषपदं प्रयुक्तम्। एवम-त्रापि प्राणवाक्यं पञ्चजनवाक्यसमनन्तरं प्रयुक्तं तच्छेषमिव भाति। अतः 'प्राणादयो वाक्यशेषात्' इत्युक्तमिति।

सांख्यस्मृतीनामनन्यव्यापारतयाऽऽत्मतत्त्वनिरूपणे प्रामाण्यमुपगन्तव्यमिति स्मृत्यधिकरणोक्तविचारे वेदविरुद्धार्थकत्वात् सांख्यस्मृतीनामप्रामाण्यं 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति विरोधाधिकरणन्यायेन समाहितम्।

पूर्वमीमांसान्यायमनुसृत्य पूर्वपक्षश्च 'तेजोऽतस्तथा ह्याह' इत्यत्र कृतः। तथा हि—'वायोरग्निः इति स्पष्टं तेजसो वायूपादानकत्वश्रवणात् 'तत्तेजोऽसृजत' इति साक्षादुपादानत्वश्रुतिः परम्परया नेतव्या। यथा 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र सप्तदशारत्नित्वं वाजपेये सोमयागे बाधितं सत् तदङ्गपशुयागगतयूपे निविशते, आनर्थक्यात्तदङ्गेष्विति न्यायात्, साक्षात् संबन्धाभावे परम्पराश्रयणं च चैत्रस्य नप्तेत्यादौ दृष्टमिति पूर्वपक्षे प्राप्ते वाजपेयपशुयागयोरङ्गाङ्गित्वेन विरुद्ध-त्वाद् भिन्नत्वम्। ततश्च प्रधानेऽसंभवन् धर्मोऽङ्गे निविशत इति युक्तम्। अत्र तु

वायोर्ब्रह्मविकारत्वेन ब्रह्माभेदेन वायुजस्यापि ब्रह्मजत्वोक्त्युपपत्तेर्न परम्पराश्रयणमिति वैषम्यमिति ।

'तथा प्राणाः' इत्यत्र तथा शब्देन द्वितीयाध्यायचतुर्थपादस्थेन व्यवहितस्य पूर्वपादप्रथमाधिकरणस्थस्य वायुजन्मनः परामर्शोऽङ्गीकृतो भाष्ये, "पानव्यापच्च तद्वत्" इति पूर्वमीमांसाधिकरणसूत्रस्थतच्छब्ददृष्टान्तेन । यथा तत्र सोमपानस्य व्यापत्तिः वमनमश्वप्रतिग्रहेष्टिनिमित्ताश्वप्रतिग्रहवल्लौकिकवमनरूपम् । ततश्च तन्निमित्ता इष्टिरपि लौकिकवमननिमित्तेति पूर्वपक्षसूत्रार्थः । ततश्च तच्छब्देन दूरस्थस्यापि परामर्शे इदमुदाहरणम् ।

'कृतात्ययेऽनुशयवान्' इत्यधिकरणे तीर्थस्नानादिवदाऽचारस्य वैदिकस्य क्रतुयुक्तपुरुषधर्मत्वमुक्तम् । तच्च जञ्जभ्यमानाधिकरणसिद्धम् । तत्र हि—तीर्थस्नानादेः क्रतुधर्मत्वम्, उत शुद्धमनुष्यधर्मत्वम् उत क्रतुयुक्तपुरुषधर्मत्वमिति संशय्य, क्रतुप्रकरणगतानां तीर्थे स्नातीत्यादीनां क्रत्वपूर्वसाधनत्वावगमात् प्रकरणवाक्याभ्यां क्रतुयुक्तपुरुषधर्मत्वमुक्तम् । अहिंसाशास्त्रस्य क्रत्वङ्गपशुसंज्ञपनस्य च शास्त्रविहितस्य विरोधे प्राप्ते सांख्याः क्रत्वङ्गहिंसायामपि दोषं पश्यन्ति । मीमांसकास्तु 'अविशेषेण यच्छास्त्रम्' इति दाशमिकाधिकरणेऽनयोः सामान्यविशेषभावमुपगम्य विशेषशास्त्रस्य सामान्यशास्त्रस्य च भिन्नविषयत्वम् । सामान्यशास्त्रम्=अहिंसाशास्त्रम्, तत्क्रत्वर्थहिंसाभिन्नलौकिकहिंसाविषयम्, अतो भिन्नविषयत्वान्न दोष इति वदन्ति । "अशुद्धमिति चेत् न शब्दात्" इति व्याससूत्रस्यापि स एवार्थ इति भामतीकाराः भाष्यकारास्तु अत्रोत्सर्गापवादन्यायमूरीकुर्वन्ति । अत्र च सामान्यशास्त्रस्य विशेषोऽपि विषयः, परं तु विशेषशास्त्रं सामान्यशास्त्रेण बाध्यत इति व्याकुर्वन्ति, पशुहिंसायां दोषाभावस्तु मीमांसकसिद्ध एव ।

'तदभावो नाडीसु तच्छ्रुतेरात्मनि च' इत्यधिकरणे क्वचिद् जीवस्य नाडीषु सुप्तिः श्रूयते, क्वचित् पुरीतति, क्वचिद् ब्रह्मणि इत्येवं सुप्तिस्थानानां विकल्प इति पूर्वपक्षे सर्वेषामेषां समुच्चित्यैव सुप्तिस्थानत्वमित्यत्र विकल्पस्याष्टदोषत्वात् "विकल्पे हि पक्षे शास्त्रबाधः" इति मीमांसकसिद्धान्त उपष्टम्भकतया स्वीकृतः यदाहुर्भट्टाचार्याः—

> एवमेषोऽष्टदोषोऽपि यद्व्रीहियवशास्त्रयोः ।
> विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ।। इति ।

"यत्रान्यागतिर्नास्ति तत्रैव विकल्पः" इत्युक्तम् ।

भिन्नभिन्नशाखासु पठितानां दहरशाण्डिल्यादिविद्यानामभेदः, यथा पूर्वतन्त्रे "भिन्नभिन्नशाखापठितानामग्निहोत्रादिकर्मणामभेदः" इत्युक्तम्, तस्य फलं च "उपसंहारोऽर्थभेदाद् विधिशेषवत्समाने च" इति सूत्रेण व्यासाचार्यैरुक्तम् । यथा विधिविशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादीति, एकत्र श्रुता

धर्माः सर्वत्रोपसह्रियन्ते, तथा एकशाखास्था उपासनाङ्गधर्मा अन्यत्राप्यनुषक्तव्या अग्निहोत्रादिवदुपासनाख्यकर्मणोऽभेदादित्युक्तम् ।

'अन्यथात्वं शब्दादिति चेन्नाविशेषात्' इत्यधिकरणे छान्दोग्यबृहदारण्यकस्थितयोः "ते देवा ऊचुर्हन्तासुरान्यज्ञ उन्दीथेनात्ययामेति" इति, "तद्ध देवा उन्दीथमाजह्नुरनेनैनानभिभविष्यामः" इति च श्रुतयोर्विद्यैक्यं पूर्वपक्षयित्वा, न वा प्रकरणभेदात्" इत्यनेन निराकृतम् । वाक्यच्छयासाम्यमात्रेण कर्मणोरभेदस्तु न स्वीकार्यं इत्यत्राभ्युदयवाक्यं पशुकामवाक्यं च दृष्टान्ततयोपात्तम् । तथाहि "विना एनं""त्रेधा तण्डुलान् विभजेत्, ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्" इत्यभ्युदयवाक्यम् । पशुकामवाक्ये च "यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्" इत्यादि तत्र वाक्यच्छायासाम्येऽपि नैककर्मत्वम्. अपि तु कर्मभेदः । एवं वाक्यच्छायासाम्येऽपि विद्याभेद इति निरधारयत् ।

'अध्यानाय प्रयोजनाभावात्' इत्यधिकरणे—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ।।
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् ।।

इत्यत्रार्थादीनामिन्द्रियादिभ्यः परत्वे न तात्पर्यम्, किन्तु पुरुषस्य सर्वापेक्षया परत्व एव तदर्थोऽयमर्थवादः सर्वोऽपीत्यस्य साधने जर्तिलयवागून्यायो दृष्टान्ततया प्रदर्श्यते, तत्र "जर्तिलयवाग्वा वा जुहुयाद् गवीधुक् यवाग्वा वा" इत्यत्र लिङ्श्रवणेन विधिपरत्वेन भासमानमपि पयसाग्निहोत्रं जुहुयादिति सर्वान्ते श्रुतपयोविधेरर्थवाद इत्युक्तं पूर्वतन्त्रे ।

'वेधाद्यर्थभेदात्' इत्यधिकरणे ब्रह्मविद्याप्रकरणे समाम्नातानाम् "सर्वं प्रविध्य हृदयं प्रविध्य" इत्यादिमन्त्राणां प्रवर्ग्यादिकर्मणां च विद्यासु विनियोगः शङ्कयते सन्निधिसामर्थ्यात् । अन्यथा तेषां स्वाध्यायविध्यापादितप्रयोजनवतामफलत्वे वैयर्थ्यापत्तेः । अन्यतराकाङ्क्षयैव तेषां सबन्धोपपत्तेः । मन्त्राणां 'अविशिष्टस्तु वाक्यार्थः' इति न्यायात् प्रयोगसमवेतार्थस्मारकत्वं वाच्यम्, तच्चोपासनेषु हृदयादिसंबन्धादुपपन्नम्, कर्मणां तु प्रवर्ग्यादीनां ज्योतिष्टोमाद्यङ्गत्वेन विनियुक्तानामपि विद्यासु विनियोग उपपद्यते, 'वाजपेय इव बृहस्पतिसवस्य' इति पूर्वपक्षे प्राप्ते विद्यासूक्तमन्त्रकर्मादीनाभसामर्थ्यान्न विनियोग इति प्रसाधितम् । अत्र मीमांसकैः प्रसिद्धबृहस्पतिसवाद् ब्रह्मवर्चसफलाद् वाजपेयाङ्गबृहस्पतिसवोऽन्यः प्रकरणान्तरन्यायादित्युक्तम् । ततश्च बृहस्पतिसवोदाहरणमभ्युपेत्यवादेनेति

कल्पतरुकाराः। परिमलकारास्तु मीमांसकैरभ्युपगतं बृहस्पतिसवस्य कर्मान्तरत्वमयुक्तमिति तन्मतखण्डनमेव भाष्यकृतामभिमतमिति वदन्ति।

एवमग्निरहस्यब्राह्मणगतस्य मनश्चिदादेः कर्मप्रकरणस्थस्यापि कर्माङ्गत्वाभावः केवलं पुरुषार्थत्वं च सिद्धन्तितं लिङ्गभूयस्त्वाधिकरणे। तत्र कर्मप्रकरणस्थस्य तत उत्कर्षे सूत्रकारैः 'दृष्टश्च तदुक्तम्' इति मीमांसकसम्मतिः प्रदर्शिता। मीमांसकास्तु राजसूयप्रकरणपठितानामवेष्टीनां 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय, आहुतिमाहुतिहुत्वाऽभिधारयेे' इत्यादिवाक्यैर्यदिशब्दप्रयोगाद् राजसूये वर्णत्रयाधिकारः, राजशब्दस्य राज्यकर्तरि प्रयोगाद् वर्णत्रयस्यापि राज्यकर्तृत्वसंभवादिति पूर्वपक्षयित्वा राज्ञः कर्म राज्यमिति व्युत्पत्तिरान्ध्रप्रयोगानुसारिणी, "गुणवचनब्राह्मणादिभ्यः कर्मणि ष्यञ्" इति पाणिनिस्मृत्युपष्टब्धा चेति तदनुसारेण राजसूयः क्षत्रियाधिकार एव, न वर्णत्रयाधिकारः,। यदि 'ब्राह्मणो यजेत' इत्यादिभिर्विहिता इष्टयः प्रकरणादुद्धृत्य स्वातन्त्र्येण प्रयोक्तव्या इति निर्णीतम्। एवमत्रापि। कर्माङ्गावबद्धानामुपासनानां पर्णमयीत्वादिवत् क्रत्वर्थत्वम्, उत गोदोहनादिवत् पुरुषार्थत्वमिति सन्देहो भवति, क्रत्वर्थत्वे उपासनाऽकरणे क्रतुवैगुण्यं स्यात्। पुरुषार्थत्वपक्षे क्रतुषूपासनाऽकरणेऽपि क्रतोः सान्दुण्यं भवति। उपासनकरणे तु फलविशेषः सिद्धयतीत्युपनिषन्दतानां कर्माङ्गावबद्धानामुन्दीथादीनां विषये संशयमुत्थाप्य, "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्" इति सूत्रकारैरुक्तम्। तत्र तेषामुन्दीथादिगुणयाथात्म्यनिर्धारणानामनियमः, नित्यवत्कर्मप्रयोगेषु नोपनिबन्धनम्, कुतस्तद् दृष्टेः ? तेनोभौ कुरुतो यश्चैतदेवं वेद यश्चन इति विकल्पदृष्टेः। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति। पृथगेव तत्तदुपासनानां फलश्रवणाच्च कल्पन्ते ह्यस्मै लोका ऊर्ध्वाश्चावृत्ताश्च इति। गोदोहनादीनां फलविधौ प्रकरणात् प्रणयनाद्याश्रयो लभ्यते, अत्र तूपासनानां क्रतुप्रकरणस्थत्वाभावेऽपि स्वयं क्रियात्मकत्वात् फले विधिः स्वातन्त्र्येण विधातुं शक्यत इति विशेष इत्युक्तम्।

आवृत्तिरसकृदुपदेशादित्यत्र श्रवणादीनामावृत्तिरावश्यिकी न वेति सन्देहे आवृत्तिः कर्तव्येति निर्णयः कृतः। तत्र भाष्यम्— दर्शनपर्यवसानानि हि श्रवणादीनि आवर्त्यमानानि दृष्टार्थानि भवन्ति' इति। इदं च भाष्यं दार्शपूर्णमासिकं ब्रीहीदृष्टान्तीकृत्य सर्वोषधावघातं प्रत्युदाहरणं सूचयति, तथाहि—नवहन्ति, इत्युक्तमवघातं दार्शपूर्णमासिकावघातो दृष्टार्थः, तण्डुलनिष्पत्त्यर्थत्वात्। अत एव यावद्वारमावृत्तो दृष्टफलसिद्धिः तावद्वारमावर्तनीयः। सर्वौषधावघातस्तु 'सर्वौषधस्य पूरयित्वाऽवहन्ति अथैतदुपदधाति' इति चयने श्रुतः, तत्रावघातस्यादृष्टार्थत्वात् सकृदवहननेनादृष्टसिद्धेर्नावघातावृत्तिरित्युक्तम्। एवं श्रवणादीनां दर्शनफलकत्वादावृत्तिरावश्यिकीति निर्णीतम्।

एवं मीमांसान्यायसञ्चारः केषुचिद्वेदान्ताधिकरणेषु प्रदर्शितः। न समग्रतया। यद्यपि व्यवहारे भट्टनय इति प्रामाणिकानां सम्मत्या व्यावहारिकपदार्थनिरूपणे प्रायो भट्टमतमेवानुस्रियते वेदान्तिभिः। तथापि केषुचिद्विषयेषु न्यायेषु च तन्मतं नानुरुध्यते, यथा देवताविग्रहादौ कर्मणः फलदातृत्वं न संभवतीति 'फलमत उपपत्ते पूर्वं तु बादरायणो हेतुव्यपदेशात्' इति सूत्राभ्यां सूत्रकारो निश्चिकाय। जैमिनिस्तु 'देवता वा प्रयोजयेदतिथिवत्, भोजनस्य तदर्थत्वात्' इत्यधिकरणे कर्मण एव फलदातृत्वमुक्तवान्। न देवा देवतान्तराभावात्', न ऋषीणामार्षेयान्तराभावात्' इत्यनेन देवानामृषीणां च कर्मानधिकार उक्तो जैमिनिना। बादरायणस्तु ब्रह्मविद्यायां देवानामधिकारं 'भावं तु बादरायणः' इतिसूत्रेण स्थापयामास न कर्माधिकारं निराचकार। एवं मीमांसका अध्ययनस्यार्थज्ञानार्थत्वं वदन्ति। वेदान्तिनस्त्वक्षरावाप्त्यर्थत्वमेव, ज्ञान तु यागादिविध्याक्षिप्तमित्यभिप्रयन्ति, अर्थज्ञानार्थत्व उपनिषदर्थब्रह्मज्ञानस्यापि कर्मानुष्ठानाङ्गतापत्तेः। अक्षरावाप्तेस्तु पारायणादौ विनियोग इति। एवमर्थवादादीनां विध्येकवाक्यत्वेऽपि स्वमुख्यार्थेऽपि तात्पर्यम्। प्रमाणान्तरविरोधाविरोधयोः असतोः, तेषां स्वार्थे तात्पर्यात्। अत एव देवताविग्रहादिसिद्धिः।

**अत्र केचन विशेषाः**

इदमपि मीमांसान्यायसञ्चारेऽवश्यमवधेयं यत्–अननुरूपं दृष्टान्तं प्रदर्श्य सिद्धान्तविरुद्धमर्थं ये प्रतिपादयितुमिच्छन्ति तद्वशेन चाद्वैतसिद्धान्तमेव भिन्दन्ति तेषां मीमांसोदाहरणानि परीक्ष्यैवास्माभिः स्वीकर्तव्यानि, यतो मीमांसकसिद्धान्तमेव सम्यगनवधार्य ते उदाहरेयुः। अत्रापि दृष्टान्ताः प्रदर्श्यन्ते—

उपक्रमोपसंहारयोरेकवाक्यत्वप्रतीतौ उपक्रमविरोधेनोपसंहारे प्रतीयमाने उपक्रमानुरोधेनोपसंहारो नेतव्य इति पूर्वमीमांसायां 'श्रुतेर्जाताधिकारः स्यात्' इत्यधिकरणे निर्णीतम्। यथा "प्रजापतिर्वा इदमेक एवाग्र आसीत्, स तपोऽतप्यत; तस्मात् तेपानात् त्रयो देवा अजायन्त अग्निर्वायुरादित्यः, ते त्रयोऽतप्यन्त। तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त। अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात् सामवेदः" इत्युपक्रम्य श्रूयते तस्माद् उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ना इति। तत्रोपक्रमे सपूर्णो वेदः प्रस्तुत उपसंहारे च ऋगादिमन्त्रेषु स्वरविशेषविधिः, अत्र विध्यर्थवादरूपेण प्रतीयमानयोरनयोर्विरोधः प्रतीयते। विधिः ऋगादिमन्त्रपरः, अर्थवादस्तु वेदस्तुतिपर इति। अत्रोपक्रमस्यासंजातविरोधित्वेन प्राबल्यात् उपसंहारस्थं ऋगादिपद तत्तद्वेदपरमिति निर्णीतम्। केचित्तूपसंहारस्यैव प्राबल्यमुपगच्छन्ति। तत्र च ब्रह्ममीमांसागतानि कानिचिदधिकरणान्युदाहरन्ति। तथाहि न संख्योपसंग्रहादित्यधिकरणे "यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः। तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतो मृतम्" इत्यत्र मनुष्येषु रूढस्य पञ्चजनशब्दस्य,

'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत' इति वाक्यशषेसंकीतितेषु प्राणादिषु वृत्तिः "प्राणादयो वाक्यशेषात्" इति सूत्रोक्ता उपसंहारप्राबल्यं गमयति । एवं पारिप्लवाधिकरणे 'सर्वाण्युपाख्यानानि पारिप्लवे शंसति' इति विध्यनुसारेण "प्रतर्दनो ह वै दैवोदासिः" "त्र्योहोद्गोथे कुशला बभूवुः" इत्यादीनामपि पारिप्लवे शंसनप्राप्तौ "मनुर्वैवस्वतो राजा" इत्यादिवाक्यशेषसंकीर्तिताख्यानविशेषेषु सर्वशब्दस्य संकोच इत्युयगतं विशेषितत्वादिति सूत्रभागेन । दहराधिकरणे "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यत्र दहराकाशान्तर्वर्तिन एवोपास्यत्वं प्रतीयमानम् वाक्यशेषे "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदयआकाशः इत्याकाशमहिमवर्णनदर्शनात् तस्यैवान्वेष्टव्यत्वं परब्रह्मरूपता च "दहर उत्तरेभ्यः" इति सूत्रे निर्णीयत इत्युक्तम् । इदमप्युपसंहारप्राबल्यं व्यनक्तीति ब्रुवन्ति, एतदयुक्तम् । यतः—'यस्मिन् पञ्च पञ्चजनाः' इत्युपक्रमस्थपदैः पञ्च मनुष्या ब्रह्मणि सन्तीत्येतावता परब्रह्मणः कस्यचिदुत्कर्षस्याप्रतीतेः पञ्चजनशब्दस्यान्यत्रैव तात्पर्यमिति सामान्यतोऽवगतौ तद्विशेषाकाङ्क्षायां वाक्यशेषात् प्राणादिपरिग्रहः, अत्ताधिकरणन्यायात् । न तु उपक्रमस्यान्यथानयनरूप उपक्रमबाधः । तेन च नोपसंहारप्राबल्यम् ।

सर्वाण्युपाख्यानानि पारिल्यवे' इत्यनेन सकलवेदवर्तिनामुपाख्यानानां ग्रहणस्य मनुष्यमात्रेणाशक्यतयाऽवच्छेदापेक्षायां वाक्यशेषस्थस्य मनुर्वैवस्वतो राजेत्यादेः परिग्रहः, न तु तत्राप्युपसंहारप्राबल्येनोपक्रमबाधः ।

दहराधिकरणे तु 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स्वधर्मत्वम्' इत्यधिकरणोक्तभूयोऽनुग्रहन्यायादेव निर्णयः, अत एव 'उत्तरेभ्यः' इत्युक्तम्, अतो न तत्राप्युपसंहारप्राबल्यमिति ।

प्रत्यक्षस्य विपक्षबाधकतर्कसचिवमनुमानमपि बाधकमित्युक्ते परे प्रत्यवतिष्ठन्ते । प्रत्यक्षस्यानुमानबाध्यत्वे "औदुंबरीं स्पृष्ट्वा उद्गायेत्" इति श्रुतिः "औदुंबरी सर्वविष्टितव्या' इति स्मृत्या बाध्यताम् । ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुति लिङ्गेन इन्द्रप्रकाशकत्वरूपेण बाध्यताम्, 'शरमयं बर्हिर्भवतीति' श्रुतिः चोदनालिङ्गरूपेण कुशश्रुत्यनुमानेन बाध्यतामिति । अयुक्तमिदम्, यतः प्रत्यक्षविषयीभूतश्रुतित्रयस्य लिङ्गबाधकत्वोक्तावपि प्रत्यक्षस्य लिङ्गबाध्यत्वे विरोधाभावात् ।

एवं प्रत्यक्षस्यागमबाध्यत्वसिद्धान्ते "तस्माद्धूम एवाग्नेर्दिवा ददृशे" इत्यस्य प्रत्यक्षाविरोधाय 'गुणवादस्तु' इति सूत्रं न रच्येत जैमिनिना । एवं 'यजमानः प्रस्तरः' इत्यादेरुपपत्तये तत्सिद्धिजातीत्यादिना गौणीनिमित्तोपपादनमनुपपन्नम्, श्रुतेरेव प्रबलत्वात् ।

परीक्षितस्य प्रत्यक्षस्यागमापेक्षया प्रबलत्वात् 'धूम एवाग्नेर्दिवाददृशे' 'यजमानः प्रस्तरः' इत्यादेः परीक्षितप्रत्यक्षविरुद्धत्वात् लक्षणाश्रयणेऽप्यद्वैतश्रुतेः परीक्षितप्रत्यक्षविरोधाभावेन प्रबलत्वात्। अर्थक्रियासंवादादिभिः प्रत्यक्षस्य व्यावहारिकप्रामाण्यमात्रं हि सिद्धम् तच्च नाद्वैतागमेन बाध्यत इति।

अपच्छेदन्यायेन प्रत्यक्षस्यागमबाध्यत्वं सिद्धान्तेऽङ्गीक्रियते। पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति न्यायः। तत्र 'यद्युद्गाता अपच्छिन्द्यात्, अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत, यदि प्रतिहर्त्ता सर्ववेदसं दद्यात्' इति विरुद्धप्रायश्चित्तयोरेकस्मिन् यागेऽसंभवे परनिमित्तप्रायश्चित्तमेवानुष्ठेयमिति निर्णीतम्, तन्न्यायेन पूर्वप्रवृत्तस्य प्रत्यक्षस्योत्तरप्रवृत्तेनागमेन बाधः। न चात्र पूर्वनिमित्तप्रायश्चित्तस्य न सर्वथा बाधः, विकल्पस्थले पूर्वनिमित्तस्य कदाचित् पाश्चात्त्ये च चरितार्थत्वात् आगमबाध्यत्वे तु प्रत्यक्षस्य निर्विषयत्वमिति शङ्कनीयम्। व्यावहारिकप्रामाण्येन चरितार्थत्वादिति।

एवं पूर्वमीमांसान्यायसञ्चारो वेदान्तेषु भूयान् दृश्यते।आवश्यकश्च, वेदार्थनिर्णयस्य न्यायात्मकतर्कसहायेन कर्तव्यत्वम्—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते सधर्मं वेद नेतरः॥

इति मनुना प्रोक्तम्। तत्र धर्मपदं वेदार्थमात्रपरं सद् ब्रह्मणोऽप्युपलक्षकमिति संक्षेपः।



